# रसरत्नसमुच्चय : अध्याय 01

https://sa.wikisource.org/s/80k

यस्यानन्दभवेन मङ्गलकलासंभावितेन स्फुरधाम्ना सिद्धरसामृतेन करुणावीक्षासुधासिन्धुना ।
भक्तानां प्रभवप्रसंहृतिजरारागादिरोगाः क्षणाच्छान्तिं यान्ति जगत्प्रधानभिषजे तस्मै परस्मै नमः ।। रस-१.१ ।।

आदिमश्चन्द्रसेनश्च लङ्केशश्च विशारदः ।
कपाली मत्तमाण्डव्यौ भास्करः शूरसेनकः ।। रस-१.२ ।।

रत्नकोशश्च शम्भुश्च सात्त्विको नरवाहनः ।
इन्द्रदो गोमुखश्चैव कम्बलिर् व्याडिरेव च ।। रस-१.३ ।।

नागार्जुनः सुरानन्दो नागबोधिर् यशोधनः ।
खण्डः कापालिको ब्रह्मा गोविन्दो लम्पको हरिः ।। रस-१.४ ।।

सप्तविंशतिसंख्याका रससिद्धिप्रदायकाः ।
रसाङ्कुशो भैरवश्च नन्दी स्वच्छन्दभैरवः ।। रस-१.५ ।।

मन्थानभैरवश्चैव काकचण्डीश्वरस्तथा ।
वासुदेव ऋषिः शृङ्गः क्रियातन्त्रसमुच्चयी ।। रस-१.६ ।।

रसेन्द्रतिलको योगी भालुकी मैथिलाह्वयः ।
महादेवो नरेन्द्रश्च वासुदेवो हरीश्वरः ।। रस-१.७ ।।

एतेषां क्रियतेऽन्येषां तन्त्राण्यालोक्य संग्रहः ।
रसानामथ सिद्धानां चिकित्सार्थोपयोगिनाम् ।। रस-१.८ ।।

सूनुना सिंहगुप्तस्य रसरत्नसमुच्चयः ।
रसोपरसलोहानि यन्त्रादिकरणानि च ।। रस-१.९ ।।

शुद्ध्यर्थमपि लोहानां तन्त्रादिकरणानि च ।
शुद्धिः सत्त्वं द्रुतिर्भस्मकरणं च प्रवक्ष्यते ।। रस-१.१० ।।

अस्ति नीहारनिलयो महानुत्तरदिङ्मुखे ।
उत्तुङ्गशृङ्गसंघातलङ्घिताभ्रो महीधरः ।। रस-१.११ ।।

विश्रामाय वियन्मार्गविलङ्घनघनश्रमः ।
अवतीर्ण इव क्षोणीं शरदम्बुमुचां गणः ।। रस-१.१२ ।।

राशिराशीविषाधीशफणाफलकरोचिषाम् ।
भित्त्वा भुवमिवोत्तीर्णो यो विभाति भृशोन्नतः ।। रस-१.१३ ।।

ज्वलदौषधयो यस्य नितम्बमणिभूमयः ।
नक्तमुद्दामतडितामनुकुर्वन्ति वार्मुचाम् ।। रस-१.१४ ।।

कटके संचरन्तीनां यस्य किंनरयोषिताम् ।
पादेषु धातुरागेण लाक्षाकृत्यमनुष्ठितम् ।। रस-१.१५ ।।

अवतंसितशीतांशुराच्छादितदिगम्बरः ।
यो गुहाधिगतो लोकैर्गिरीश इति गीयते ।। रस-१.१६ ।।

निमीलितदृशो नित्यं मुनयो यस्य सानुषु ।
प्रत्यक्षयन्ति गिरिशमवाङ्मनसगोचरम् ।। रस-१.१७ ।।

शिलातलप्रतिहतैर्यस्य निर्झरशीकरैः ।
अहन्यपि निरीक्षन्ते यक्षास्ताराङ्कितं नभः ।। रस-१.१८ ।।

नीहारपवनोद्रेकनिःसहा यत्र पुरुषाः ।
निजस्त्रीणां निषेवन्ते कुचोष्माणं निरन्तरम् ।। रस-१.१९ ।।

संचरन् कटके यस्य निदाघेऽपि दिवाकरः ।
उद्दामहिमरुद्धोष्मा न शीतांशोर्विभिद्यते ।। रस-१.२० ।।

गुहागृहेषु कस्तूरीमृगनाभिसुगन्धिषु ।
गायन्ति यत्र किंनर्यो गौरीपरिणयोत्सवम् ।। रस-१.२१ ।।

चकास्ति तत्र जगतामादिदेवो महेश्वरः ।
रसात्मना जगत्त्रातुं जातो यस्मान्महारसः ।। रस-१.२२ ।।

शताश्वमेधेन कृतेन पुण्यं गोकोटिभिः स्वर्णसहस्रदानात् ।
नृणां भवेत्सूतकदर्शनेन यत्सर्वतीर्थेषु कृताभिषेकात् ।। रस-१.२३ ।।

विधाय रसलिङ्गं यो भक्तियुक्तः समर्चयेत् ।
जगत्त्रितयलिङ्गानां पूजाफलमवाप्नुयात् ।। रस-१.२४ ।।

भक्षणं स्पर्शनं दानं ध्यानं च परिपूजनम् ।
पञ्चधा रसपूजोक्ता महापातकनाशिनी ।। रस-१.२५ ।।

हन्ति भक्षणमात्रेण पूर्वजन्माघसम्भवम् ।
रोगसंघमशेषाणां नराणां नात्र संशयः ।। रस-१.२६ ।।

पूर्वजन्मकृतं पापं सद्यो नश्यति देहिनाम् ।
सुगन्धपिष्टसूतेन यदि शम्भुर्विलेपितः ।। रस-१.२७ ।।

अभ्रकं त्रुटिमात्रं यो रसस्य परिजारयेत् ।
शतक्रतुफलं तस्य भवेदित्यब्रवीच्छिवः ।। रस-१.२८ ।।

यश्च निन्दति सूतेन्द्रं शम्भोस्तेजः परात्परम् ।
स पतेन्नरके घोरे यावत्कल्पविकल्पना ।। रस-१.२९ ।।

रोगिभ्यो यो रसं दत्ते शुद्धिपाकसमन्वितम् ।
तुलादानाश्वमेधानां फलं प्राप्नोति शाश्वतम् ।। रस-१.३० ।।

सिद्धे रसे करिष्यामि निर्दारिद्र्यगदं जगत् ।
रसध्यानमिदं प्रोक्तं ब्रह्महत्यादिपापनुत् ।। रस-१.३१ ।।

अभ्रग्रासो हि सूतस्य नैवेद्यं परिकीर्तितम् ।

रसस्येत्यर्चनं कृत्वा प्राप्नुयात्क्रतुजं फलम् ।। रस-१.३२ ।।

उदरे संस्थिते सूते यस्योत्क्रामति जीवितम् ।
स मुक्तो दुष्कृताद्घोरात्प्रयाति परमं पदम् ।। रस-१.३३ ।।

मूर्छित्वा हरति रुजं बन्धनमनुभूय मुक्तिदो भवति ।
अमरीकरोति हि मृतः कोऽन्यः करुणाकरः सूतात् ।। रस-१.३४ ।।

सुरगुरुगोद्विजहिंसापापकलापोद्भवं किलासाध्यम् ।
श्वित्रं तदपि च शमयति यस्तस्मात्कः पवित्रतरः सूतात् ।। रस-१.३५ ।।

रसबन्ध एव धन्यः प्रारम्भे यस्य सततमितिकरणा ।
सेत्स्यति रसे करिष्ये महीमहं निर्जरामरणाम् ।। रस-१.३६ ।।

सुकृतफलं तावदिदं सुकुले यज्जन्म धीश्च तत्रापि ।
सापि च सकलमहीतलतुलनफला भूतलं च सुविधेयम् ।। रस-१.३७ ।।

भूतलविधेयतायाः फलमर्थास्ते च विविधभोगफलाः ।
भोगाश्च सन्ति शरीरे तदनित्यमतो वृथा सकलम् ।। रस-१.३८ ।।

इति धनशरीरभोगान्मत्वानित्यान्सदैव यतनीयम् ।
मुक्तौ सा च ज्ञानात् तच्चाभ्यासात् स च स्थिरे देहे ।। रस-१.३९ ।।

तत्स्थैर्ये न समर्थं रसायनं किमपि मूललोहादि ।
स्वयमस्थिरस्वभावं दाह्यं क्लेद्यं च शोष्यं च ।। रस-१.४० ।।

काष्ठौषध्यो नागे नागो वङ्गेऽथ वङ्गमपि शुल्बे ।
शुल्बं तारे तारं कनके कनकं च लीयते सूते ।। रस-१.४१ ।।

अमृतत्वं हि भजन्ते हरमूर्तौ योगिनो यथा लीनाः ।
तद्वत्कवलितगगने रसराजे हेमलोहाद्याः ।। रस-१.४२ ।।

परमात्मनीव सततं भवति लयो यत्र सर्वसत्त्वानाम् ।
एकोऽसौ रसराजः शरीरमजरामरं कुरुते ।। रस-१.४३ ।।

स्थिरदेहेऽभ्यासवशात् प्राप्य ज्ञानं गुणाष्टकोपेतम् ।
प्राप्नोति ब्रह्मपदं न पुनर्भववासजन्मदुःखानि ।। रस-१.४४ ।।

एकांशेन जगद्युगपदवष्टभ्यावस्थितं परं ज्योतिः ।
पादैस्त्रिभिस्तदमृतं सुलभं न विरक्तिमात्रेण ।। रस-१.४५ ।।

न हि देहेन कथंचिद्व्याधिजरामरणदुःखविधुरेण ।
क्षणभङ्गुरेण सूक्ष्मं तद्ब्रह्मोपासितुं शक्यम् ।। रस-१.४६ ।।

नामापि देहसिद्धे को गृह्णीयाद्विना शरीरेण ।
यद्योगगम्यममलं मनसोऽपि न गोचरं तत्त्वम् ।। रस-१.४७ ।।

यज्ञाद्दानात्तपसो वेदाध्ययनाद्दमात्सदाचारात् ।
अत्यन्तभूयसी किल योगवशादात्मसंवित्तिः ।। रस-१.४८ ।।

भ्रूयुगमध्यगतं यच्छिखिविद्युत्सूर्यवज्जगद्भासि ।
केषांचित्पुण्यदृशामुन्मीलति चिन्मयं परं ज्योतिः ।। रस-१.४९ ।।

परमानन्दैकरसं परमं ज्योतिःस्वभावमविकल्पम् ।
विगलितसकलक्लेशं ज्ञेयं शान्तं स्वसंवेद्यम् ।। रस-१.५० ।।

तस्मिन्नाधाय मनः स्फुरदखिलं चिन्मयं जगत्पश्यन् ।
उत्सन्नकर्मबन्धो ब्रह्मत्वमिहैव चाप्नोति ।। रस-१.५१ ।।

रागद्वेषविमुक्ताः सत्याचारा मृषारहिताः ।
सर्वत्र निर्विशेषा भवन्ति चिद्ब्रह्मसंस्पर्शात् ।। रस-१.५२ ।।

तिष्ठन्त्यणिमादियुता विलसद्देहाः सदोदितानन्दाः ।
ब्रह्मस्वभावममृतं सम्प्राप्ताश् चैव कृतकृत्याः ।। रस-१.५३ ।।

आयतनं विद्यानां मूलं धर्मार्थकाममोक्षाणाम् ।
श्रेयः परं किमन्यच्छरीरमजरामरं विहायैकम् ।। रस-१.५४ ।।

प्रत्यक्षेण प्रमाणेन यो न जानाति सूतकम् ।
अदृष्टविग्रहं देवं कथं ज्ञास्यति चिन्मयम् ।। रस-१.५५ ।।

यज्जरया जर्जरितं कासश्वासादिदुःखविवशं च ।
योग्यं तन्न समाधौ प्रतिहतबुद्धीन्द्रियप्रसरम् ।। रस-१.५६ ।।

बालः षोडशवर्षो विषयरसास्वादलम्पटः परतः ।
यातविवेको वृद्धो मर्त्यः कथमाप्नुयान्मुक्तिम् ।। रस-१.५७ ।।

अस्मिन्न् एव शरीरे येषां परमात्मनो न संवेदः ।
देहत्यागादूर्ध्वं तेषां तद्ब्रह्म दूरतरम् ।। रस-१.५८ ।।

ब्रह्मादयो यतन्ते तस्मिन्दिव्यां तनुं समाश्रित्य ।
जीवन्मुक्ताश्चान्ये कल्पान्तस्थायिनो मुनयः ।। रस-१.५९ ।।

तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमम् ।
दिव्या तनुर्विधेया हरगौरीसृष्टिसंयोगात् ।। रस-१.६० ।।

शैलेऽस्मिञ् शिवयोः प्रीत्या परस्परजिगीषया ।
सम्प्रवृत्ते च सम्भोगे त्रिलोकीक्षोभकारिणि ।। रस-१.६१ ।।

विनिवारयितुं वह्निः सम्भोगं प्रेषितः सुरैः ।
काङ्क्षमाणैस् तयोः पुत्रं तारकासुरमारकम् ।। रस-१.६२ ।।

कपोतरूपिणं प्राप्तं हिमवत्कन्दरेऽनलम् ।
अपक्षिभावसंक्षुब्धं स्मरलीलाविलोकिनम् ।। रस-१.६३ ।।

तं दृष्ट्वा लज्जितः शम्भुर्विरतः सुरतात्तदा ।
प्रच्युतश्चरमो धातुर्गृहीतः शूलपाणिना ।। रस-१.६४ ।।

प्रक्षिप्तो वदने वह्नेर्गङ्गायामपि सोऽपतत् ।
बहिः क्षिप्तस्तया सोऽपि परिदह्यमानया ।। रस-१.६५ ।।

संजातास्तन्मलाधानाद्धातवः सिद्धिहेतवः ।
यावदग्निमुखाद्रेतो न्यपतद्दूरिसारतः ।। रस-१.६६ ।।

शतयोजननिम्नांस्तान्कृत्वा कूपांस्तु पञ्च च ।
तदाप्रभृति कूपस्थं तद्रेतः पञ्चधाभवत् ।। रस-१.६७ ।।

रसो रसेन्द्रः सूतश्च पारदो मिश्रकस्तथा ।
इति पञ्चविधो जातः क्षेत्रभेदेन शम्भुजः ।। रस-१.६८ ।।

रसो रक्तो विनिर्मुक्तः सर्वदोषै रसायनः ।
संजातास्त्रिदशास्तेन नीरुजा निर्जरामराः ।। रस-१.६९ ।।

रसेन्द्रो दोषनिर्मुक्तः श्यावो रूक्षोऽतिचञ्चलः ।
रसायिनोऽभवंस्तेन नागा मृत्युजरोज्झिताः ।। रस-१.७० ।।

देवैर्नागैश् च तौ कूपौ पूरितौ मृद्भिर् अश्मभिः ।
तदाप्रभृति लोकानां तौ जाताव् अतिदुर्लभौ ।। रस-१.७१ ।।

ईषत्पीतश्च रूक्षाङ्गो दोषयुक्तश्च सूतकः ।
दशाष्टसंस्कृतैः सिद्धो देहं लोहं करोति सः ।। रस-१.७२ ।।

अथान्यकूपजः कोऽपि स चलः श्वेतवर्णवान् ।
पारदो विविधैर्योगैः सर्वरोगहरः स हि ।। रस-१.७३ ।।

मयूरचन्द्रिकाच्छायः स रसो मिश्रको मतः ।
सोऽप्यष्टादशसंस्कारयुक्तश्चातीव सिद्धिदः ।। रस-१.७४ ।।

त्रयः सूतादयः सूताः सर्वसिद्धिकरा अपि ।
निजकर्मविनिर्माणैः शक्तिमन्तोऽतिमात्रया ।। रस-१.७५ ।।

एतां रससमुत्पत्तिं यो जानाति स धार्मिकः ।
आयुर् आरोग्यसंतानं रससिद्धिं च विन्दति ।। रस-१.७६ ।।

रसनात्सर्वधातूनां रस इत्यभिधीयते ।
जरारुङ्मृत्युनाशाय रस्यते वा रसो मतः ।। रस-१.७७ ।।

रसोपरसराजत्वाद्रसेन्द्र इति कीर्तितः ।
देहलोहमयीं सिद्धिं सूते सूतस्ततः स्मृतः ।। रस-१.७८ ।।

रोगपङ्काब्धिमग्नानां पारदानाच् च पारदः ।
सर्वधातुगतं तेजोमिश्रितं यत्र तिष्ठति ।। रस-१.७९ ।।

तस्मात्स मिश्रकः प्रोक्तो नानारूपफलप्रदः ।
एवंभूतस्य सूतस्य मर्त्यमृत्युगदच्छिदः ।
प्रभावान् मानुषा जाता देवतुल्यबलायुषः ।। रस-१.८० ।।

तान् दृष्ट्वाभ्यर्थितो रुद्रः शक्रेण तदनन्तरम् ।
दोषैश्च कञ्चुकाभिश्च रसराजो नियोजितः ।। रस-१.८१ ।।

तदाप्रभृति सूतोऽसौ नैव सिध्यत्यसंस्कृतः ।

[५ गतिस्] जलगो जलरूपेण त्वरितो हंसगो भवेत् ।। रस-१.८२ ।।

मलगो मलरूपेण सधूमो धूमगो भवेत् ।
अन्या जीवगतिर्दैवी जीवोऽण्डादिव निष्क्रमेत् ।। रस-१.८३ ।।

स तांश् च जीवयेज्जीवांस्तेन जीवो रसः स्मृतः ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- रसस्य पञ्चविधगतिमाह जलग इति ।। रसबोध-१.८४अब्;१
- जलरूपेण द्रवत्वेन जलगः जलेन सह गमनशीलः भवेत् रसस्य चूर्णप्रायोऽतिसूक्ष्मांश इति भावः त्वरितः चञ्चलः चाञ्चल्यादित्यर्थः हंसगः हंसवद् गमनशीलः भवेत् मलरूपेण मलवत्त्वात् मलगः मलेन सह मिश्रितः दोषसंश्लिष्टः भवेत् सधूमः वह्निदृष्टत्वात् धूमगः धूमेन सह गमनशीलः उड्डयनस्वभावः भवेत् अन्या अपरा पञ्चमीत्यर्थः दैवी अदृश्यरूपा जीवस्य रसस्य गतिः गमनम् अस्तीति शेषः तया गत्या अण्डात् देहरूपकोशात् जीवः आत्मा इव निष्क्रमेत् रस इति भावः केन पथा देहात् जीवो निर्गच्छति तत् यथा न दृश्यते तथा पारदस्य पञ्चमी गतिरपि न ज्ञातुम् शक्यते इत्यर्थः ।। रसबोध-१.८४अब्;२
- पूर्वश्लोके जीवगतिशब्देन रसगतिरिति प्रदर्शितं जीवशब्दस्य रसार्थत्वे हेतुमाह स इति ।। रसबोध-१.८४अब्;३
- सः रसः तान् जीवान् जीवयेत् जरामरणादिविनाशनद्वारा दीर्घजीवनं प्रदापयेत् तेन हेतुना रसः जीवः जीवयतीति व्युत्पत्त्या जीवनदायकः स्मृतः कथितः ।। रसबोध-१.८४अब्;४

चतस्रो गतयो दृश्या अदृश्या पञ्चमी गतिः ।। रस-१.८४ ।।

मन्त्रध्यानादिना तस्य रुध्यते पञ्चमी गतिः ।। रस-१.८५ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- संप्रति पञ्चभूतात्मकस्य तस्य गतिभेदेन नामभेदमाह जलग इति ।। रस-टी१.८५;१
- यः पारदो जलरूपेण जलस्वभावेन गच्छति स जलगो जलगतिविशिष्ट इत्युच्यते ।। रसटी-१.८५;२
- तन्मयास्तु सुवर्णादिलोहाः ।। रसटी-१.८५;३
- स्थिरसत्त्वा रसादयोऽपि तन्मयाः ।। रसटी-१.८५;४
- भूमिमलकिट्टयोगेनैव तेषां घनत्वं स्थिरत्वं च ।। रसटी-१.८५;५
- अत एव द्रुतिरूपेणैव तेषां स्थितिः सम्भवति ।। रसटी-१.८५;६
- जलस्वभावोऽधोगमनरूपः ।। रसटी-१.८५;७
- निर्मलद्रुतिरूपलोहानाम् अप्यधोगमनं दृश्यत एव ।। रसटी-१.८५;८
- यः पारदस्त्वरितस्त्वरया वेगेन युक्तो नात्युच्छ्रितम् आकाशे गच्छति किंतु भूमिसंनिहिताकाशे भुवि च स हंसग इत्युच्यते ।। रसटी-१.८५;९
- हंस इवाकाशे गच्छतीति हंसगः ।। रसटी-१.८५;१०

- स तु मयूरगण्डूपदादिषु व्यवस्थितः ।। रसटी-१.८५;११
- यस्तु मलरूपेण कृष्णवर्णेनांशेन विशिष्टो गच्छति स मलग इत्युच्यते ।। रसटी-१.८५;१२
- यश्च सधूमो धूमेन धूमसमानवर्णोर्ध्वरेखासहिताकाशगत्या सह वर्तत इति सधूमः स धूमग इत्युच्यते ।। रसटी-१.८५;१३
- स तु हरितालहिङ्गुलमनःशिलारसकगौरीपाषाणादिषु व्यवस्थितः ।। रसटी-१.८५;१४
- ते हि धूमरोधात् स्फोटं कृत्वोद्गच्छन्तीत्यनुभूयते ।। रसटी-१.८५;१५
- नाभियन्त्रभूधरलोहमूषादियन्त्रादिना निर्धूमजारणायामपि महता प्रयत्नेनापि तेषां स्थिरत्वं मीमांस्यं भवति भवेन्नन्वेति ।। रसटी-१.८५;१६
- अन्या चतुर्थी गतिः पारदस्यास्ति ।। रसटी-१.८५;१७
- सा तु जीवगतिरित्युच्यते ।। रसटी-१.८५;१८
- जीवस्येवादृश्या गतिर्जीवगतिः ।। रसटी-१.८५;१९
- अत एव सा दैवीत्यप्युच्यते ।। रसटी-१.८५;२०
- तस्या देवगतेरिवादृश्यत्वात्तया युक्तः स पारदोऽण्डाज्जीव इवादृश्यगत्या युक्तः स्वस्थानान्निष्क्रमेन्निर्गच्छति ।। रसटी-१.८५;२१
- अण्डाद्देहस्य निर्गमनं दृश्यते देहसहितस्य जीवस्य तु बहिर्निर्गमनं न दृश्यते ।। रसटी-१.८५;२२
- बालस्य चालनश्वासोच्छ्वासादिक्रियया चानुमीयते तद्वद् अस्यापीति भावः ।। रसटी-१.८५;२३
- तया गत्या युक्त एवायं जीवान्प्राणिनो जीवयेत्तेन स रसो जीवनाम्ना स्मृतः ।। रसटी-१.८५;२४
- कारयेत्तं संस्कारनिपुणवैद्यहस्तेन राजा तत्समो वसुमान्वात्मनः प्रजानां च रक्षणार्थम् इति भावः ।। रसटी-१.८५;२५

इति भिन्नगतित्वाच्च सूतराज्यस्य दुर्लभः ।
संस्कारस्तस्य भिषजा निपुणेन तु रक्षयेत् ।। रस-१.८६ ।।

प्रथमे रजसि स्नातां हयारूढां स्वलंकृताम् ।
वीक्षमाणां वधूं दृष्ट्वा जिघृक्षुः कूपगो रसः ।। रस-१.८७ ।।

उद्गच्छति जवात्सापि तं दृष्ट्वा याति वेगतः ।
अनुगच्छति तां सूतः सीमानं योजनोन्मितम् ।। रस-१.८८ ।।

प्रत्यायाति ततः कूपं वेगतः शिवसम्भवः ।
मार्गनिर्मितगर्तेषु स्थितं गृह्णन्ति पारदम् ।
पतितो दरदे देशे गौरवाद्वह्निवक्त्रतः ।। रस-१.८९ ।।

स रसो भूतले लीनस् तत्तद्देशनिवासिनः ।
तां मृदं पातनयन्त्रे क्षिप्त्वा सूतं हरन्ति च ।। रस-१.९० ।।

# रसरत्नसमुच्चय : अध्याय 02

https://sa.wikisource.org/s/8ol

**अष्टमहारसाः**

अभ्रवैक्रान्तमाक्षीकविमलाद्रिजसस्यकम् ।
चपलो रसकश्चेति ज्ञात्वाष्टौ संग्रहेद् रसान् ।। रस-२.१ ।।

देव्या रजो भवेद्गन्धो धातुः शुक्रं तथाभ्रकम् इति क्षेपकः ।

### अभ्र > आयुर्वेदीय गुण

गौरीतेजः परमममृतं वातपित्तक्षयघ्नम् प्रज्ञाबोधि प्रशमितरुजं वृष्यमायुष्यमग्र्यम् ।
बल्यं स्निग्धं रुचिदम् अकफं दीपनं शीतवीर्यं तत्तद्योगैः सकलगदहृद् व्योम सूतेन्द्रबन्धि ।। रस-२.२ ।।

### अभ्र > प्रोदुच्तिओन्

राजहस्ताद् अधस्ताद् यत्समानीतं घनं खनेः ।
भवेत्तदुक्तफलदं निःसत्त्वं निष्फलं परम् ।। रस-२.३ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- तदेवाभ्रकं भूमिमध्ये राजहस्तात् सपादहस्ताद् अधस्ताद् अधोभागस्थं यत् खनिजं घनम् अभ्रकं वज्राख्यं तद् एव पूर्वोक्तगुणम् ।। रसटी-२.३;१
- इतरं तु वायुजलमूत्रमलतापकृमिसंबन्धान्निःसारं ज्ञेयम् ।। रसटी-२.३;२
- इदम् उपलक्षणं सर्वेषां खनिजद्रव्याणाम् ।। रसटी-२.३;३
- प्रायस्तेषां हि भूमिगर्भस्थानाम् एव पूर्णात्मगुणत्वात् ।। रसटी-२.३;४
- अत्र घनशब्दोऽभ्रकमात्रवाचकोऽपि वज्राभ्रके पर्यवस्यति ।। रसटी-२.३;५
- तस्यैव यथोक्तगुणत्वात् ।। रसटी-२.३;६

### अभ्र > सुब्त्य्पेस्

पिनाकं नागमण्डूकं वज्रमित्यभ्रकं मतम् ।

### अभ्र > सुब्त्य्पेस् > चोलोउर्

श्वेतादिवर्णभेदेन प्रत्येकं तच्चतुर्विधम् ।। रस-२.४ ।।

**पिनाक**

पिनाकं पावकोत्तप्तं विमुञ्चति दलोच्चयम् ।
तत्सेवितं मलं बद्ध्वा मारयत्येव मानवम् ।। रस-२.५ ।।

### नाग

नागाभ्रं नागवत्कुर्याद्ध्वनिं पावकसंस्थितम् ।

## नाग > आयुर्वेदीय गुण

तद्भुक्तं कुरुते कुष्ठं मण्डलाख्यं न संशयः ।। रस-२.६ ।।

### मण्डूक

उत्प्लुत्योत्प्लुत्य मण्डूकं ध्मातं पतति चाभ्रकम् ।

## मण्डूक > आयुर्वेदीय गुण

तत्कुर्यादश्मरीरोगमसाध्यं शस्त्रतोऽन्यथा ।। रस-२.७ ।।

### वज्र

वज्राभ्रं वह्निसंतप्तं निर्मुक्ताशेषवैकृतम् ।
देहलोहकरं तच्च सर्वरोगहरं परम् ।। रस-२.८ ।।

श्वेतं रक्तं च पीतं च कृष्णमेवं चतुर्विधम् ।
श्वेतं श्वेतक्रियासूक्तं रक्ताभं रक्तकर्मणि ।
पीताभमभ्रकं यत्तु श्रेष्ठं तत्पीतकर्मणि ।। रस-२.९ ।।

चतुर्विधं वरं व्योम यद्यप्युक्तं रसायने ।
तथापि कृष्णवर्णाभ्रं कोटिकोटिगुणाधिकम् ।। रस-२.१० ।।

## अभ्र > परीक्षा

स्निग्धं पृथुदलं वर्णसंयुक्तं भारतोऽधिकम् ।
सुखनिर्मोच्यपत्त्रं च तदभ्रं शस्तमीरितम् ।। रस-२.११ ।।

### ग्रासायोग्याभ्र

सचन्द्रिकं च किट्टाभं व्योम न ग्रासयेद्रसः ।
ग्रसितश्च नियोज्योऽसौ लोहे चैव रसायने ।। रस-२.१२ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- ग्रासाभावे ह्युपोषित इव रसः कार्यकरो न भवेदित्याह सचन्द्रिकमिति ।। रसटी-२.१२;१
- सचन्द्रिकं चाकचिक्यसहितम् ।। रसटी-२.१२;२

- किट्टाभं प्रभूतकिट्टम् ।। रसटी-२.१२;३
- ग्रसितश्च ग्रसिताभ्रसत्त्व एव लोहे स्वर्णाद्युत्पादने लोहमारणे रोगवारणार्थं लोहप्रयोगे च नियोज्यः ।। रसटी-२.१२;४
- तथा रसायने ज्वराङ्कुशादि तत्तद्रसे रसायने च लक्ष्मीविलासवज्रपञ्जरादिरूपे वक्ष्यमाण इत्यर्थः ।। रसटी-२.१२;५
- रस ईयते प्राप्यतेऽनेनेति व्युत्पत्त्यात्र रसशब्देन रसरसायनयोः संग्रहात् ।। रसटी-२.१२;६

### अभ्र > निश्चन्द्रिक > आयुर्वेदीय गुण

निश्चन्द्रिकं मृतं व्योम सेव्यं सर्वगदेषु च ।
सेवितं चन्द्रसंयुक्तं मेहं मन्दानलं चरेत् ।। रस-२.१३ ।।

यैर् उक्तं युक्तिनिर्मुक्तैः पत्त्राभ्रकरसायनम् ।
तैर् दृष्टं कालकूटाख्यं विषं जीवनहेतवे ।। रस-२.१४ ।।

सत्त्वार्थं सेवनार्थं च योजयेच्छोधिताभ्रकम् ।
अन्यथा त्व् अगुणं कृत्वा विकरोत्येव निश्चितम् ।। रस-२.१५ ।।

### अभ्र > शोधन

प्रतप्तं सप्तवाराणि निक्षिप्तं काञ्जिकेऽभ्रकम् ।
निर्दोषं जायते नूनं प्रक्षिप्तं वापि गोजले ।। रस-२.१६ ।।

त्रिफलाक्वथिते चापि गवां दुग्धे विशेषतः ।

### अभ्र > मारण

ततो धान्याभ्रकं कृत्वा पिष्ट्वा मत्स्याक्षिकारसैः ।। रस-२.१७ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- मत्स्याक्षिका हिलमोचिका गण्डदूर्वा वा ।। रसबोध-२.१७;१

चक्रीं कृत्वा विशोष्याथ पुटेद् अर्धेभके पुटे ।

---

- टीका रससरत्नसमुच्चयटीका:
- ततस्तदभ्रकं धान्याभ्रकं कृत्वा मत्स्याक्षिकारसेनैकदिनपर्यन्तं संमर्द्य चक्रीं वर्तुलस्थूलवटिकां विधायावशोष्य शरावसंपुटितं कृत्वार्धेऽभ्रके पुटे पुटेद् अर्धेऽभ्रके पुटम् अर्धगजपुटं तच्च गजपुटगतार्धभागं वनोपलैः पूरयित्वा भवति ।। रसटी-२.१८कख;१
- पुटेत् पचेद् इत्यर्थः ।। रसटी-२.१८कख;२
- प्रतिपुटम् अभ्रकस्य मर्दनं ततश्चक्रीं कृत्वा विशोष्य शरावसंपुटितं कार्यम् ।। रसटी-२.१८कख;३

पुटेदेवं हि षड्वारं पौनर्नवरसैः सह ।। रस-२.१८ ।।

कलांशटङ्कणेनापि संमर्द्य कृतचक्रिकम् ।
अर्धेभाख्यपुटैस् तद्वत् सप्तवारं पुटेत् खलु ।। रस-२.१९ ।।

एवं वासारसेनापि तण्डुलीयरसेन च ।
प्रपुटेत् सप्तवाराणि पूर्वप्रोक्तविधानतः ।
एवं सिद्धं घनं सर्वयोगेषु विनियोजयेत् ।। रस-२.२० ।।

### धान्याभ्र

चूर्णाभ्रं शालिसंयुक्तं वस्त्रबद्धं हि काञ्जिके ।
निर्यातं मर्दनाद्वस्त्राद्धान्याभ्रमिति कथ्यते ।। रस-२.२१ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- धान्याभ्रविधिमाह चूर्णाभ्रमिति ।। रसबोध-२.२१;१
- चूर्णाभ्र अभ्रचूर्णं शालिसंयुक्तम् अद्याप्यत्र शालिपरिमाणं नोक्तं तथापि तन्त्रान्तरानुसरणात् पादमितशालिधान्यसहितं बोद्धव्यं तथा च रसेन्द्रसारसंग्रहे ।
- पादांशं शालिसंयुक्तमभ्रकं कम्बलोदरे ।
- त्रिरात्रं स्थापयेन्नीरे तत् क्लिन्नं मर्दयेद्दृढम् ।
- कम्बलाद्गलितं श्लक्ष्णं वालुकारहितं यत् ।
- तद्धान्याभ्रमिति प्रोक्तमभ्रमारणसिद्धये ।
- इति ।। रसबोध-२.२१;२
- निर्यातं निर्गतम् ।। रसबोध-२.२१;३
- अभ्रं चूर्णितं कृत्वा पादांशशालिधान्येन सह स्थूलवस्त्रे बद्ध्वा काञ्जिके तावन्मर्दनीयं यावद् वस्त्रच्छिद्रात् श्लक्ष्णं वालुकारहितं सत् निर्याति तद्धान्याभ्रं स्मृतम् ।। रसबोध-२.२१;४

### धान्याभ्र > मारण

धान्याभ्रं कासमर्दस्य रसेन परिमर्दितम् ।
पुटितं दशवारेण म्रियते नात्र संशयः ।
तद्वन्मुस्तारसेनापि तण्डुलीयरसेन च ।। रस-२.२२ ।।

### अभ्र > मारण

पीतामलकसौभाग्यपिष्टं चक्रीकृताभ्रकम् ।
पुटितं षष्टिवाराणि सिन्दूराभं प्रजायते ।
क्षयाद्यखिलरोगघ्नं भवेद्रोगानुपानतः ।। रस-२.२३ ।।

### अभ्र > मारण

वटमूलत्वचः क्वाथैस् ताम्बूलीपत्त्रसारतः ।
वासामत्स्याक्षिकाभ्यां वा मीनाक्ष्या सकठिल्लया ।। रस-२.२४ ।।

पयसा वटवृक्षस्य मर्दितं पुटितं घनम् ।
भवेद्विंशतिवारेण सिन्दूरसदृशप्रभम् ।। रस-२.२५ ।।

### अभ्र > सत्त्वपातन

पादांशटङ्कणोपेतं मुसलीरसमर्दितम् ।
रुन्ध्यात्कोष्ठ्यां दृढं ध्मातं सत्त्वरूपं भवेद् घनम् ।। रस-२.२६ ।।

### अभ्र > सत्त्वपातन

कासमर्दघनाधान्यवासानां च पुनर्भुवः ।
मत्स्याक्ष्याः काण्डवल्ल्याश्च हंसपाद्या रसैः पृथक् ।। रस-२.२७ ।।

पिष्ट्वा पिष्ट्वा प्रयत्नेन शोषयेद् घर्मयोगतः ।
पलं गोधूमचूर्णस्य क्षुद्रमत्स्याश्च टङ्कणम् ।। रस-२.२८ ।।

प्रत्येकमष्टमांशेन दत्त्वा दत्त्वा विमर्दयेत् ।
मर्दने मर्दने सम्यक्शोषयेद्रविरश्मिभिः ।। रस-२.२९ ।।

पञ्चाजं पञ्चगव्यं वा पञ्चमाहिषमेव च ।
क्षिप्त्वा गोलान्प्रकुर्वीत किंचित्तिन्दुकतोऽधिकान् ।। रस-२.३० ।।

### पञ्चाज

पयो दधि घृतं मूत्रं सविट्कं चाजम् उच्यते ।
अधःपातनकोष्ठ्यां हि ध्मात्वा सत्त्वं निपातयेत् ।। रस-२.३१ ।।

### अभ्र > सत्त्वपातन > सेपरतिओन् ओf सत्त्व अन्द् किट्ट

कोष्ठ्यां किट्टं समाहृत्य विचूर्ण्य रवकान् हरेत् ।

---

- टीका रससरत्नसमुच्चयटीका:
- कोष्ठ्याम् अवशिष्टसत्त्वं काचकिट्टसंश्लिष्टं कणरूपं दुर्ग्राह्यं तत्तु अग्नौ शान्ते सति समाहृत्यैकीकृत्य बहिर् निष्कास्य संकुट्य विचूर्ण्य तत्संश्लिष्टं कणसत्त्वं हरेत् ।। रसटी-२.३२कख;१
- किट्टात् पृथक्कृत्य गृह्णीयात् ।। रसटी-२.३२कख;२

तत्किट्टं स्वल्पटङ्केन गोमयेन विमर्द्य च ।। रस-२.३२ ।।

गोलान्विधाय संशोष्य घर्मे भूयोऽपि पूर्ववत् ।
भूयः किट्टं समाहृत्य मृदित्वा सत्त्वमाहरेत् ।। रस-२.३३ ।।

## अभ्र > सत्त्व > शोधन

अथ सत्त्वकणांस्तांस्तु क्वाथयित्वाम्लकाञ्जिकैः ।
शोधनीयगणोपेतं मूषामध्ये निरुध्य च ।। रस-२.३४ ।।

सम्यग्द्रुतं समाहृत्य द्विवारं प्रधमेद् घनम् ।
इति शुद्धं भवेत्सत्त्वं योज्यं रसरसायने ।। रस-२.३५ ।।

## अभ्र > सत्त्व > मृदूकरण

मधुतैलवसाज्येषु द्रावितं परिवापितम् ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- परिवापितं प्रक्षिप्तम् ।। रसबोध-२.३६कख;१

मृदु स्याद्दशवारेण सत्त्वं लोहादिकं खरम् ।। रस-२.३६ ।।

## अभ्र > मारण

पट्टचूर्णं विधायाथ गोघृतेन परिप्लुतम् ।
भर्जयेत्सप्तवाराणि चुल्लीसंस्थितखर्परे ।। रस-२.३७ ।।

अग्निवर्णं भवेद्यावद्वारं वारं विचूर्णयेत् ।
तृणं क्षिप्त्वा दहेद्यावत्तावद्वा भर्जनं चरेत् ।। रस-२.३८ ।।

ततः सगन्धकं पिष्ट्वा वटमूलकषायतः ।
पुटेद्विंशतिवारेण वाराहेण पुटेन हि ।। रस-२.३९ ।।

पुनर्विंशतिवाराणि त्रिफलोत्थकषायतः ।
त्रिफलामुण्डिकाभृङ्गपत्रपथ्याक्षमूलकैः ।। रस-२.४० ।।

भावयित्वा प्रयोक्तव्यं सर्वरोगेषु मात्रया ।
सत्त्वाभ्रात्किंचिदपरं निर्विकारं गुणाधिकम् ।। रस-२.४१ ।।

एवं चेच्छतवाराणि पुटपाकेन साधितम् ।
गुणवज्जायतेऽत्यर्थं परं पाचनदीपनम् ।। रस-२.४२ ।।

## अभ्र > मारण > निश्चन्द्रिक

गन्धर्वपत्त्रतोयेन गुडेन सह भावितम् ।
अधोर्ध्वं वटपत्राणि निश्चन्द्रं त्रिपुटैः खगम् ।। रस-२.४३ ।।

क्षुधं करोति चात्यर्थं गुञ्जार्धमितिसेवया ।
तत्तद्रोगहरैर्योगैः सर्वरोगहरं परम् ।। रस-२.४४ ।।

### अभ्र > सत्त्व > शोधन

सत्त्वस्य गोलकं ध्मातं सस्यसंयुक्तकाञ्जिके ।
निर्वाप्य तत्क्षणेनैव कुट्टयेल्लोहपारया ।। रस-२.४५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- लोहपारया लोहमुसलेन ।। रसबोध-२.४५;१

सम्प्रताप्य घनस्थूलकणान् क्षिप्त्वाथ काञ्जिके ।
तत्क्षणेन समाहृत्य कुट्टयित्वा रजश्चरेत् ।। रस-२.४६ ।।

गोघृतेन च तच्चूर्णं भर्जयेत् पूर्ववत् त्रिधा ।
धात्रीफलरसैस्तद्वद्धात्रीपत्ररसेन वा ।। रस-२.४७ ।।

भर्जने भर्जने कार्यं शिलापट्टेन पेषणम् ।
ततः पुनर्नवावासारसैः काञ्जिकमिश्रितैः ।। रस-२.४८ ।।

प्रपुटेद्दशवाराणि दशवाराणि गन्धकैः ।
एवं संशोधितं व्योमसत्त्वं सर्वगुणोत्तरम् ।
यथेष्टं विनियोक्तव्यं जारणे च रसायने ।। रस-२.४९ ।।

### अभ्र > द्रुति

द्रुतयो नैव निर्दिष्टाः शास्त्रे दृष्टा अपि दृढम् ।
विना शंभोः प्रसादेन न सिध्यन्ति कदाचन ।। रस-२.५० ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वल्लः द्विगुञ्जा गुञ्जात्रयम् इति लीलावती सार्धगुञ्जेति राजनिघण्टुः ।। रसबोध-२.५०;१

### अभ्र > मृत > आयुर्वेदीय गुण, अप्प्लिचतिओन्

वेल्लव्योषसमन्वितं घृतयुतं वल्लोन्मितं सेवितं दिव्याभ्रं क्षयपाण्डुरुग्ग्रहणिकाशूलामकुष्ठामयम् ।
जूर्तिं श्वासगदं प्रमेहमरुचिं कासामयं दुर्धरं मन्दाग्निं जठरव्यथां विजयते योगैरशेषामयान् ।। रस-२.५१ ।।

### वैक्रान्त > परीक्षा > गोओद् ऋउअलित्य्

अष्टास्रश् चाष्टफलकः षट्कोणो मसृणो गुरुः ।
शुद्धमिश्रितवर्णैश्च युक्तो वैक्रान्त उच्यते ।। रस-२.५२ ।।

### वैक्रान्त > सुब्त्य्पेस् > चोलोउर्

श्वेतो रक्तश्च पीतश्च नीलः पारापतच्छविः ।
श्यामलः कृष्णवर्णश्च कर्बुरश्चाष्टधा हि सः ।। रस-२.५३ ।।

### वैक्रान्त > आयुर्वेदीय गुण

आयुःप्रदश्च बलवर्णकरोऽतिवृष्यः प्रज्ञाप्रदः सकलदोषगदापहारी ।
दीप्ताग्निकृत् पविसमानगुणस्तरस्वी वैक्रान्तकः खलु वपुर्बललोहकारी ।। रस-२.५४ ।।

रसायनेषु सर्वेषु पूर्वगण्यः प्रतापवान् ।
वज्रस्थाने नियोक्तव्यो वैक्रान्तः सर्वदोषहा ।। रस-२.५५ ।।

### वैक्रान्त > मिथकीय उत्पत्ति

दैत्येन्द्रो माहिषः सिद्धः सहदेवसमुद्भवः ।
दुर्गा भगवती देवी तं शूलेन व्यमर्दयत् ।। रस-२.५६ ।।

तस्य रक्तं तु पतितं यत्र यत्र स्थितं भुवि ।
तत्र तत्र तु वैक्रान्तं वज्राकारं महारसम् ।। रस-२.५७ ।।

### वैक्रान्त > लोचल् दिस्त्रिबुतिओन्

विन्ध्यस्य दक्षिणे वास्ति ह्य् उत्तरे वास्ति सर्वतः ।

### वैक्रान्त > निरुक्ति

विकृन्तयति लोहानि तेन वैक्रान्तकः स्मृतः ।। रस-२.५८ ।।

### वैक्रान्त > सुब्त्य्पेस् > चोलोउर्

श्वेतः पीतस्तथा रक्तो नीलः पारावतप्रभः ।
मयूरकण्ठसदृशश्चान्यो मरकतप्रभः ।। रस-२.५९ ।।

देहसिद्धिकरं कृष्णं पीते पीतं सिते सितम् ।
सर्वार्थसिद्धिदं रक्तं तथा मरकतप्रभम् ।
शेषे द्वे निष्फले वर्ज्ये वैक्रान्तमिति सप्तधा ।। रस-२.६० ।।

यत्र क्षेत्रे स्थितं चैव वैक्रान्तं तत्र भैरवम् ।
विनायकं च सम्पूज्य गृह्णीयाच्छुद्धमानसः ।। रस-२.६१ ।।

## वैक्रान्त > आयुर्वेदीय गुण

वैक्रान्तो वज्रसदृशो देहलोहकरो मतः ।
विषघ्नो रसराजश्च ज्वरकुष्ठक्षयप्रणुत् ।। रस-२.६२ ।।

## वैक्रान्त > शोधन

वैक्रान्तकाः स्युस्त्रिदिनं विशुद्धाः संस्वेदिताः क्षारपटूनि दत्त्वा ।
अम्लेषु मूत्रेषु कुलत्थरम्भानीरेऽथवा कोद्रववारिपक्वाः ।। रस-२.६३ ।।

## वैक्रान्त > शोधन

कुलत्थक्वाथसंस्विन्नो वैक्रान्तः परिशुध्यति ।

## वैक्रान्त > मारण

म्रियतेऽष्टपुटैर् गन्धनिम्बुकद्रवसंयुतः ।। रस-२.६४ ।।

## वैक्रान्त > मारण

वैक्रान्तेषु च तप्तेषु हयमूत्रं विनिक्षिपेत् ।
पौनःपुन्येन वा कुर्याद्द्रवं दत्त्वा पुटं त्वनु ।
भस्मीभूतं तु वैक्रान्तं वज्रस्थाने नियोजयेत् ।। रस-२.६५ ।।

## वैक्रान्त > सत्त्वपातन

मोचमोरटपालाशक्षारगोमूत्रभावितम् ।
वज्रकन्दनिशाकल्कफलचूर्णसमन्वितम् ।। रस-२.६६ ।।

तत्कल्कं टङ्कणं लाक्षाचूर्णं वैक्रान्तसंभवम् ।
नवसारसमायुक्तं मेषशृङ्गीद्रवान्वितं ।। रस-२.६७ ।।

पिण्डितं मूकमूषस्थं ध्मापितं च हठाग्निना ।
तत्रैव पतते सत्त्वं वैक्रान्तस्य न संशयः ।। रस-२.६८ ।।

## वैक्रान्त > सत्त्वपातन

सत्त्वपातनयोगेन मर्दितश्च वटीकृतः ।
मूषास्थो घटिकाध्मातो वैक्रान्तः सत्त्वमुत्सृजेत् ।। रस-२.६९ ।।

## वैक्रान्त > fओर्मुलतिओन्स्

भस्मत्वं समुपागतो विकृतको हेम्ना मृतेनान्वितः पादांशेन कणाज्यवेल्लसहितो गुञ्जामितः सेवितः ।
यक्ष्माणं जरणं च पाण्डुगुदजं श्वासं च कासामयं दुष्टां च ग्रहणीम् उरःक्षतमुखान् रोगाञ्जयेद् देहकृत् ।। रस-२.७० ।।

सूतभस्मार्धसंयुक्तं नीलवैक्रान्तभस्मकं ।
मृताभ्रसत्त्वमुभयोस्तुलितं परिमर्दितम् ।। रस-२.७१ ।।

क्षौद्राज्यसंयुतं प्रातर्गुञ्जामात्रं निषेवितम् ।
निहन्ति सकलान्रोगान्दुर्जयानन्यभेषजैः ।
त्रिःसप्तदिवसैर् नृणां गङ्गाम्भ इव पातकम् ।। रस-२.७२ ।।

## माक्षिक > मिथकीय उत्पत्ति

सुवर्णशैलप्रभवो विष्णुना काञ्चनो रसः ।
ताप्यां किरातचीनेषु यवनेषु च निर्मितः ।

## माक्षिक > तिमे ओ्f ओरिगिन्

ताप्यः सूर्यांशुसंतप्तो माधवे मासि दृश्यते ।। रस-२.७३ ।।

## माक्षिक > आयुर्वेदीय गुण

मधुरः काञ्चनाभासः साम्लो रजतसंनिभः ।
किंचित्कषायमधुरः शीतः पाके कटुर्लघुः ।
तत्सेवनाज्जराव्याधिविषैर्न परिभूयते ।। रस-२.७४ ।।

## माक्षिक > सुब्त्य्पेस्

माक्षिको द्विविधो हेममाक्षिकस्तारमाक्षिकः ।

## स्वर्णमाक्षिक

तत्राद्यं माक्षिकं कान्यकुब्जोत्थं स्वर्णसंनिभम् ।। रस-२.७५ ।।

## तारमाक्षिक

तपतीतीरसम्भूतं पञ्चवर्णसुवर्णवत् ।
पाषाणबहलः प्रोक्तस्ताराख्योऽल्पगुणात्मकः ।। रस-२.७६ ।।

माक्षीकधातुः सकलामयघ्नः प्राणो रसेन्द्रस्य परं हि वृष्यः ।
दुर्मेललोहद्वयमेलनश् च गुणोत्तरः सर्वरसायनाग्र्यः ।। रस-२.७७ ।।

## माक्षिक > शोधन

एरण्डतैललुङ्गाम्बुसिद्धं शुध्यति माक्षिकम् ।

## माक्षिक > शोधन

सिद्धं वा कदलीकन्दतोयेन घटिकाद्वयम् ।
तप्तं क्षिप्तं वराक्वाथे शुद्धिमायाति माक्षिकम् ।। रस-२.७८ ।।

**माक्षिक > मारण**

मातुलुङ्गाम्बुगन्धाभ्यां पिष्टं मूषोदरे स्थितम् ।
पञ्चक्रोडपुटैर् दग्धं म्रियते माक्षिकं खलु ।। रस-२.७९ ।।

**माक्षिक > मारण**

एरण्डस्नेहगव्याजैर् मातुलुङ्गरसेन वा ।
खर्परस्थं दृढं पक्वं जायते धातुसंनिभम् ।
एवं मृतं रसे योज्यं रसायनविधाव् अपि ।। रस-२.८० ।।

**माक्षिक > सत्त्वपातन**

त्रिंशांशनागसंयुक्तं क्षारैर् अम्लैश्च वर्तितम् ।
ध्मातं प्रकटमूषायां सत्त्वं मुञ्चति माक्षिकम् ।। रस-२.८१ ।।

**माक्षिक > सत्त्व > नागग्रास**

सप्तवारं परिद्राव्य क्षिप्तं निर्गुण्डिकारसे ।
माक्षीकसत्त्वसंमिश्रं नागं नश्यति निश्चितम् ।। रस-२.८२ ।।

**माक्षिक > सत्त्वपातन**

क्षौद्रगन्धर्वतैलाभ्यां गोमूत्रेण घृतेन च ।
कदलीकन्दसारेण भावितं माक्षिकं मुहुः ।
मूषायां मुञ्चति ध्मातं सत्त्वं शुल्बनिभं मृदु ।। रस-२.८३ ।।

**माक्षिक > सत्त्व > गुण**

गुञ्जाबीजसमच्छायं द्रुतद्रावं च शीतलम् ।
ताप्यसत्त्वं विशुद्धं तद्देहलोहकरं परम् ।। रस-२.८४ ।।

**माक्षिक > सत्त्व > मेदिचिनेस्**

माक्षीकसत्त्वेन रसेन्द्रपिष्टं कृत्वा विलीने च बलिं निधाय ।
संमिश्र्य संमर्द्य च खल्वमध्ये निक्षिप्य सत्त्वं द्रुतिमभ्रकस्य ।। रस-२.८५ ।।

विधाय गोलं लवणाख्ययन्त्रे पचेद्दिनार्धं मृदुवह्निना च ।
स्वतः सुशीतं परिचूर्ण्य सम्यग्वल्लोन्मितं व्योषविडङ्गयुक्तम् ।। रस-२.८६ ।।

संसेवितं क्षौद्रयुतं निहन्ति जरां सरोगां त्वपमृत्युमेव ।

दुःसाध्यरोगानपि सप्तवासरैर्नैतेन तुल्योऽस्ति सुधारसोऽपि ।। रस-२.८७ ।।

एरण्डोत्थेन तैलेन गुञ्जाक्षौद्रं च टङ्कणम् ।
मर्दितं तस्य वापेन सत्त्वं माक्षीकजं द्रवेत् ।। रस-२.८८ ।।

### विमल > सुब्त्य्पेस्

विमलस्त्रिविधः प्रोक्तो हेमाद्यस्तारपूर्वकः ।
तृतीयः कांस्यविमलस्तत्तत्कान्त्या स लक्ष्यते ।। रस-२.८९ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- विमलस्य भेदमाह विमल इति ।। रसबोध-२.८९;१
- विमलः माक्षिकविशेषः ।। रसबोध-२.८९;२
- तत्तत्कान्त्या हेमादीनां प्रभया ।। रसबोध-२.८९;३
- पर्यायमुक्तावलीकृता विमलशब्देन रौप्यमाक्षिकं गृहीतम् ।। रसबोध-२.८९;४

### विमल > फ्य्स्. गुण

वर्तुलः कोणसंयुक्तः स्निग्धश्च फलकान्वितः ।

### विमल > आयुर्वेदीय गुण

मरुत्पित्तहरो वृष्यो विमलोऽतिरसायनः ।। रस-२.९० ।।

### विमल > सुब्त्य्पेस् > उसे

पूर्वो हेमक्रियासूक्तो द्वितीयो रूप्यकृन्मतः ।
तृतीयो भेषजे तेषु पूर्वपूर्वो गुणोत्तरः ।। रस-२.९१ ।।

### विमल > शोधन

आटरूषजले स्विन्नो विमलो विमलो भवेत् ।
जम्बीरस्वरसे स्विन्नो मेषशृङ्गीरसेऽथवा ।
आयाति शुद्धिं विमलो धातवश्च यथा परे ।। रस-२.९२ ।।

### विमल > मारण

गन्धाश्मलकुचाम्लैश्च म्रियते दशभिः पुटैः ।। रस-२.९३ ।।

### विमल > सत्त्वपातन

सटङ्कलकुचद्रावैर्मेषशृङ्ग्याश्च भस्मना ।
पिष्टो मूषोदरे लिप्तः संशोष्य च निरुध्य च ।। रस-२.९४ ।।

षट्प्रस्थकोकिलैर्ध्मातो विमलः सीससंनिभः ।
सत्त्वं मुञ्चति तद्युक्तो रसः स्यात्स रसायनः ।। रस-२.९५ ।।

### विमल > सत्त्वपातन

विमलं शिग्रुतोयेन काङ्क्षीकासीसटङ्कणम् ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- काङ्क्षी सौराष्ट्रमृत्तिका ।। रसबोध-२.९६कख;१

वज्रकन्दसमायुक्तं भावितं कदलीरसैः ।। रस-२.९६ ।।

मोक्षकक्षारसंयुक्तं ध्मापितं मूकमूषगम् ।
सत्त्वं चन्द्रार्कसंकाशं पतते नात्र संशयः ।। रस-२.९७ ।।

### विमल > सत्त्व > आयुर्वेदीय उसे

तत्सत्त्वं सूतसंयुक्तं पिष्टं कृत्वा सुमर्दितम् ।
विलीने गन्धके क्षिप्त्वा जारयेत्त्रिगुणालकं ।। रस-२.९८ ।।

शिलां पञ्चगुणां चापि वालुकायन्त्रके खलु ।
तारभस्मदशांशेन तावद्वैक्रान्तकं मृतं ।। रस-२.९९ ।।

सर्वमेकत्र संचूर्ण्य पटेन परिगाल्य च ।
निक्षिप्य कूपिकामध्ये परिपूर्य प्रयत्नतः ।। रस-२.१०० ।।

लीढो व्योषवरान्वितो विमलको युक्तो घृतैः सेवितो हन्याद्दुर्भगकृज्ज्वराञ्श्वयथुकं पाण्डुप्रमेहारुचीः ।
मूलार्तिं ग्रहणीं च शूलमतुलं यक्ष्मामयं कामलां सर्वान्पित्तमरुद्गदान्क्रिमपरैर्योगैरशेषामयान् ।। रस-२.१०१ ।।

### शिलाजतु > सुब्त्य्पेस्

शिलाधातुर् द्विधा प्रोक्तो गोमूत्राद्यो रसायनः ।
कर्पूरपूर्वकश्चान्यस्तत्राद्यो द्विविधः पुनः ।
ससत्त्वश्चैव निःसत्त्वस्तयोः पूर्वो गुणाधिकः ।। रस-२.१०२ ।।

### शिलाजतु > ओरिगिन् दुरिन्ग् सुम्मेर्

ग्रीष्मे तीव्रार्कतप्तेभ्यः पादेभ्यो हिमभूभृतः ।
स्वर्णरूप्यार्कगर्भेभ्यः शिलाधातुर्विनिःसरेत् ।। रस-२.१०३ ।।

## शिलाजतु > fरोम् गोल्द्

स्वर्णगर्भगिरेर्जातो जपापुष्पनिभो गुरुः ।
सस्वल्पतिक्तः सुस्वादुः परमं तद्रसायनम् ।। रस-२.१०४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- तत्रादौ स्वर्णादिभ्य उत्पत्तिभेदेन त्रिविधस्य गोमूत्रगन्धिनः तस्य लक्षणादिकमाह स्वर्णेति ।। रसबोध-२.१०४;१
- तन्त्रान्तरे तु उत्पत्तिभेदेन भिन्नस्य तस्य चातुर्विध्यमुक्तं यथा चरके ।
- नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य संभवः ।
- हेम्नोऽथ रजतात्ताम्रात् वरं कालायसादपि ।। रसबोध-२.१०४;२
- इति ।। रसबोध-२.१०४;३
- अत्र तु आयसं नोक्तं तल्लक्षणमपि तत्रैव द्रष्टव्यं यथा ।
- यत्तु गुग्गुलुसंकाशं तिक्तकं लवणान्वितम् ।
- विपाके कटु शीतं च सर्वश्रेष्ठं तदायसं ।। रसबोध-२.१०४;४
- गोमूत्रगन्धि सर्वेषां सर्वकर्मसु यौगिकम् ।
- रसायनप्रयोगेषु पश्चिमं तु विशिष्यते ।। रसबोध-२.१०४;५
- इति ।। रसबोध-२.१०४;६
- अत्र हैमशिलाजतुनो परमरसायनत्वेनोक्तत्वाद् आयसस्यापि मुख्यतः रसायनगुणत्वेन एककार्यकत्वाद् आयसं पृथङ्नोक्तमिति मन्तव्यम् ।। रसबोध-२.१०४;७

## शिलाजतु > fरोम् सिल्वेर्

रूप्यगर्भगिरेर्जातं मधुरं पाण्डुरं गुरु ।
शिलाजं पित्तरोगघ्नं विशेषात्पाण्डुरोगहृत् ।। रस-२.१०५ ।।

## शिलाजतु > fरोम् चोप्पेर्

ताम्रगर्भं गिरेर्जातं नीलवर्णं घनं गुरु ।
शिलाजं कफवातघ्नं तिक्तोष्णं क्षयरोगहृत् ।। रस-२.१०६ ।।

## शिलाजतु > परीक्षा > शुद्ध

वह्नौ क्षिप्तं भवेद्यत्तल्लिङ्गाकारमधूमकम् ।
सलिलेऽथ विलीनं च तच्छुद्धं हि शिलाजतु ।। रस-२.१०७ ।।

## शिलाजतु > आयुर्वेदीय गुण

नूनं सज्वरपाण्डुशोफशमनं मेहाग्निमान्द्यापहं मेदश्छेदकरं च यक्ष्मशमनं शूलामयोन्मूलनम् ।
गुल्मप्लीहविनाशनं जठरहृच्छूलघ्नमामापहं सर्वत्वग्गदनाशनं किमपरं देहे च लोहे हितम् ।। रस-२.१०८ ।।

### शिलाजतु > पोस्सेस्सेस् गुण ओf इत्स् सोउर्चेस्

रसोपरससूतेन्द्ररत्नलोहेषु ये गुणाः ।
वसन्ति ते शिलाधातौ जरामृत्युजिगीषया ।। रस-२.१०९ ।।

### शिलाजतु > शोधन

क्षाराम्लगोजलैर् धौतं शुध्यत्येव शिलाजतु ।। रस-२.११० ।।

### शिलाजतु > शोधन

शिलाधातुं च दुग्धेन त्रिफलामार्कवद्रवैः ।
लोहपात्रे विनिक्षिप्य शोधयेदतियत्नतः ।। रस-२.१११ ।।

### शिलाजतु > शोधन

क्षाराम्लगुग्गुलोपेतैः स्वेदनीयन्त्रमध्यगैः ।
स्वेदितं घटिकामानाच्छिलाधातु विशुध्यति ।। रस-२.११२ ।।

### शिलाजतु > मारण

शिलया गन्धतालाभ्यां मातुलुङ्गरसेन च ।
पुटितं हि शिलाधातु म्रियतेऽष्टगिरिण्डकैः ।। रस-२.११३ ।।

### शिलाजतु > आयुर्वेदीय अप्प्लिचतिओन्

भस्मीभूतशिलोद्भवं समतुलं कान्तं च वैक्रान्तकं युक्तं च त्रिफलाकटुत्रिकघृतैर्वल्लेन तुल्यं भजेत् ।
पाण्डौ यक्ष्मगदे तथाग्निसदने मेहेषु मूलामये गुल्मप्लीहमहोदरे बहुविधे शूले च योन्यामये ।। रस-२.११४ ।।

सेवेत यदि षण्मासं रसायनविधानतः ।
वलीपलितनिर्मुक्तो जीवेद्वर्षशतं सुखी ।। रस-२.११५ ।।

### शिलाजतु > सत्त्वपातन

पिष्टं द्रावणवर्गेण साम्लेन गिरिसंभवम् ।
क्षिप्त्वा मूषोदरे रुद्ध्वा गाढैर्ध्मातं हि कोकिलैः ।
सत्त्वं मुञ्चेच्छिलाधातुः श्वसनैर्लोहसंनिभम् ।। रस-२.११६ ।।

### कर्पूरशिलाजतु > फ्य्स्. गुण

पाण्डुरं सिकताकारं कर्पूराद्यं शिलाजतु ।

## कर्पूरशिलाजतु > आयुर्वेदीय गुण

मूत्रकृच्छ्राश्मरीमेहकामलापाण्डुनाशनम् ।। रस-२.११७ ।।

## कर्पूरशिलाजतु > शोधन

एलातोयेन संभिन्नं सिद्धं शुद्धिमुपैति तत् ।

## कर्पूरशिलाजतु > मारण, सत्त्वपातन

नैतस्य मारणं सत्त्वपातनं विहितं बुधैः ।। रस-२.११८ ।।

## सस्यक > मिथकीय उत्पत्ति

पीत्वा हालाहलं वान्तं पीतामृतगरुत्मता ।
विषेणामृतयुक्तेन गिरौ मरकताह्वये ।
तद्वान्तं हि घनीभूतं संजातं सस्यकं खलु ।। रस-२.११९ ।।

## सस्यक > परीक्षा > गोओद् ऋ़उअलित्य्

मयूरकण्ठसच्छायं भाराढ्यमतिशस्यते ।। रस-२.१२० ।।

द्रव्यं विषयुतं यत्तद्द्रव्याधिकगुणं भवेत् ।
हालाहलं सुधायुक्तं सुधाधिकगुणं तथा ।। रस-२.१२१ ।।

## मयूरतुत्थ > आयुर्वेदीय गुण

निःशेषदोषविषहृद्गदशूलमूलकुष्ठाम्लपैत्तिकविबन्धहरं परं च ।
रसायनं वमनरेककरं गरघ्नं श्वित्रापहं गदितमत्र मयूरतुत्थम् ।। रस-२.१२२ ।।

## सस्यक > शोधन

सस्यकं शुद्धिमाप्नोति रक्तवर्गेण भावितम् ।। रस-२.१२३ ।।

स्नेहवर्गेण संसिक्तं सप्तवारमदूषितम् ।
दोलायन्त्रेण सुस्विन्नं सस्यकं प्रहरत्रयम् ।
गोमहिष्याजमूत्रेषु शुध्यते पञ्चखर्परम् ।। रस-२.१२४ ।।

## तुत्थखर्पर > मारण

लकुचद्रावगन्धाश्मटङ्कणेन समन्वितम् ।
निरुध्य मूषिकामध्ये म्रियते कौक्कुटैः पुटैः ।। रस-२.१२५ ।।

### खर्पर > सत्त्वपातन

सस्यकस्य तु चूर्णं तु पादसौभाग्यसंयुतम् ।
करञ्जतैलमध्यस्थं दिनमेकं निधापयेत् ।। रस-२.१२६ ।।

अन्धमूषास्यमध्यस्थं ध्मापयेत्कोकिलत्रयम् ।
इन्द्रगोपाकृति चैव सत्त्वं भवति शोभनम् ।। रस-२.१२७ ।।

### खर्पर > सत्त्वपातन

निम्बुद्रवाल्पटङ्काभ्यां मूषामध्ये निरुध्य च ।
ताम्ररूपं परिध्मातं सत्त्वं मुञ्चति सस्यकम् ।। रस-२.१२८ ।।

### खर्पर > सत्त्वपातन

शुद्धं सस्यं शिलाक्रान्तं पूर्वभेषजसंयुतम् ।
नानाविधानयोगेन सत्त्वं मुञ्चति निश्चितम् ।। रस-२.१२९ ।।

सत्त्वमेतत्समादाय खरभूनागसत्त्वभुक् ।
तन्मुद्रिका कृतस्पर्शा शूलघ्नी तत्क्षणाद् भवेत् ।। रस-२.१३० ।।

चराचरं विषं भूतडाकिनीदृग्गतं जयेत् ।
मुद्रिकेयं विधातव्या दृष्टप्रत्ययकारिका ।। रस-२.१३१ ।।

रामवत् सोमसेनानीर् मुद्रितेऽपि तथाक्षरम् ।
हिमालयोत्तरे पार्श्वे अश्वकर्णो महाद्रुमः ।
तत्र शूलं समुत्पन्नं तत्रैव विलयं गतम् ।। रस-२.१३२ ।।

मन्त्रेणानेन मुद्राम्भो निपीतं ससमन्त्रितम् ।
सद्यः शूलहरं प्रोक्तमिति भालुकिभाषितम् ।। रस-२.१३३ ।।

अनया मुद्रया तप्तं तैलमग्नौ सुनिश्चितम् ।
लेपितं हन्ति वेगेन शूलं यत्र क्वचिद्भवेत् ।
सद्यः सूतिकरं नार्याः सद्यो नेत्ररुजापहम् ।। रस-२.१३४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- चपलः यशदः दस्तेति लोके ।। रसबोध-२.१३४;१

### चपल > सुब्त्य्पेस्

गौरः श्वेतोऽरुणः कृष्णश्चपलस्तु चतुर्विधः ।
हेमाभश्चैव ताराभो विशेषाद्रसबन्धनः ।। रस-२.१३५ ।।

शेषौ तु मध्यौ लाक्षावच्छीघ्रद्रावौ तु निष्फलौ ।

---

- टीका रससरत्नसमुच्चयटीका:
- अथोद्देशक्रमानुरोधेन तुत्थवर्णनान्तरं चपलं वर्णयति गौर इति ।। रसटी-२.१३६कख;१
- अयं पदार्थो व्यावहारिकनाम्नास्मिन् देशे लोके न प्रसिद्धः ।। रसटी-२.१३६कख;२
- पाषाणविशेषोऽयं जसदखनिसंनिहितभूगर्भे उपलभ्यत इत्यनुमीयते ।। रसटी-२.१३६कख;३
- आङ्ग्लभाषायां रेडियम् इति नाम्नोपलब्धः पदार्थोऽयम् एवेति केचित् ।। रसटी-२.१३६कख;४
- कृत्रिमस्तु परिभाषाध्याये वक्ष्यमाणः ।। रसटी-२.१३६कख;५

### चपल > निरुक्ति

वङ्गवद्द्रवते वह्नौ चपलस्तेन कीर्तितः ।। रस-२.१३६ ।।

### चपल > आयुर्वेदीय गुण

चपलो लेखनः स्निग्धो देहलोहकरो मतः ।
रसराजसहायः स्यात्तिक्तोष्णमधुरो मतः ।। रस-२.१३७ ।।

### चपल > फ्य्स्. गुण

चपलः स्फटिकच्छायः षडस्री स्निग्धको गुरुः ।

### चपल > आयुर्वेदीय गुण

त्रिदोषघ्नोऽतिवृष्यश्च रसबन्धविधायकः ।। रस-२.१३८ ।।

### चपल > एलेमेन्त् ओf महारस

महारसेषु कैश्चिद्धि चपलः परिकीर्तितः ।। रस-२.१३९ ।।

### चपल > शोधन

जम्बीरकर्कोटकशृङ्गवेरैर् विभावनाभिश्चपलस्य शुद्धिः ।। रस-२.१४० ।।

### चपल > सत्त्वपातन

शैलं तु चूर्णयित्वा तु धान्याम्लोपविषैर् विषैः ।
पिण्डं बद्ध्वा तु विधिवत्पातयेच्चपलं तथा ।। रस-२.१४१ ।।

### रसक > सुब्त्य्पेस्

रसको द्विविधः प्रोक्तो दुर्दुरः कारवेल्लकः ।
सदलो दुर्दुरः प्रोक्तो निर्दलः कारवेल्लकः ।। रस-२.१४२ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- रसकस्य द्वैविध्यं लक्षणं चाह रसक इति ।। रसबोध-२.१४२;१
- रसकः खर्परीतुत्थकविशेषः यद् उक्तं भावप्रकाशे ।
- खर्परीतुत्थकं तुत्थाद् अन्यत् तद् रसकं स्मृतम् ।
- ये गुणास्तुत्थके प्रोक्तास्ते गुणाः रसके स्मृताः ।। रसबोध-२.१४२;२
- इति ।। रसबोध-२.१४२;३
- सदलः सपत्रः वंशपत्त्रहरितालवद् इति भावः ।। रसबोध-२.१४२;४

$

- टीका रससरत्नसमुच्चयटीका:
- अथोद्देशक्रमप्राप्तं रसकं वर्णयति रसक इति ।। रसटी-२.१४२;१
- रसको जसदोपादानखनिजमृत्तिका ।। रसटी-२.१४२;२
- तत्सत्त्वं जसदतुल्यम् एवोत्पद्यते ।। रसटी-२.१४२;३

सत्त्वपाते शुभः पूर्वो द्वितीयश्चौषधादिषु ।

## रसक > आयुर्वेदीय गुण

रसकः सर्वमेहघ्नः कफपित्तविनाशनः ।
नेत्ररोगक्षयघ्नश्च लोहपारदरञ्जनः ।। रस-२.१४३ ।।

नागार्जुनेन संदिष्टौ रसश्च रसकावुभौ ।
श्रेष्ठौ सिद्धरसौ ख्यातौ देहलोहकरौ परम् ।। रस-२.१४४ ।।

रसश्च रसकश्चोभौ येनाग्निसहनौ कृतौ ।
देहलोहमयी सिद्धिर्दासी तस्य न संशयः ।। रस-२.१४५ ।।

## रसक > शोधन

कटुकालाबुनिर्यास आलोड्य रसकं पचेत् ।
शुद्धं दोषविनिर्मुक्तं पीतवर्णं तु जायते ।। रस-२.१४६ ।।

## रसक > शोधन

खर्परः परिसंतप्तः सप्तवारं निमज्जितः ।
बीजपूररसस्यान्तर्निर्मलत्वं समश्नुते ।। रस-२.१४७ ।।

**रसक > शोधन**

नृमूत्रे वाश्वमूत्रे वा तक्रे वा काञ्जिकेऽथवा ।
प्रताप्य मज्जितं सम्यक्खर्परं परिशुध्यति ।। रस-२.१४८ ।।

**रसक > शोधन**

नरमूत्रे स्थितो मासं रसको रञ्जयेद्ध्रुवम् ।
शुद्धताम्रं रसं तारं शुद्धस्वर्णप्रभं यथा ।। रस-२.१४९ ।।

**रसक > सत्त्वपातन**

हरिद्रात्रिफलारालासिन्धुधूमैः सटङ्कणैः ।
सारुष्करैश्च पादांशैः साम्लैः संमर्द्य खर्परम् ।। रस-२.१५० ।।

लिप्तं वृन्ताकमूषायां शोषयित्वा निरुध्य च ।
मूषामुखोपरि न्यस्य खर्परं प्रधमेत्ततः ।। रस-२.१५१ ।।

खर्परे प्रहृते ज्वाला भवेन्नीला सिता यदि ।
तदा संदंशतो मूषां धृत्वा कृत्वा त्वधोमुखीम् ।। रस-२.१५२ ।।

शनैरास्फालयेद्भूमौ यथा नालं न भज्यते ।
वङ्गाभं पतितं सत्त्वं समादाय नियोजयेत् ।
एवं त्रिचतुरैर्वारैः सर्वं सत्त्वं विनिःसरेत् ।। रस-२.१५३ ।।

**रसक > सत्त्वपातन**

साभयाजतुभूनागनिशाधूमजटङ्कणम् ।
मूकमूषागतं ध्मातं शुद्धं सत्त्वं विमुञ्चति ।। रस-२.१५४ ।।

**रसक > सत्त्वपातन**

लाक्षागुडासुरीपथ्याहरिद्रासर्जटङ्कणैः ।
सम्यक्संचूर्ण्य तत्पक्वं गोदुग्धेन घृतेन च ।। रस-२.१५५ ।।

वृन्ताकमूषिकामध्ये निरुध्य गुटिकाकृतिम् ।
ध्मात्वा ध्मात्वा समाकृष्य ढालयित्वा शिलातले ।
सत्त्वं वङ्गाकृतिं ग्राह्यं रसकस्य मनोहरम् ।। रस-२.१५६ ।।

**रसक > सत्त्वपातन**

यद्वा जलयुतां स्थालीं निखनेत्कोष्ठिकोदरे ।
सच्छिद्रं तन्मुखे मल्लं तन्मुखेऽधोमुखीं क्षिपेत् ।। रस-२.१५७ ।।

मूषोपरि शिखित्रांश्च प्रक्षिप्य प्रधमेद्दृढम् ।
पतितं स्थालिकानीरे सत्त्वमादाय योजयेत् ।। रस-२.१५८ ।।

## रसक > सत्त्व > मारण

तत्सत्त्वं तालकोपेतं प्रक्षिप्य खलु खर्परे ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- खर्परे मृत्कटाहे इत्यर्थः ।। रसबोध-२.१५९कख;१

मर्दयेल्लोहदण्डेन भस्मीभवति निश्चितम् ।। रस-२.१५९ ।।

## रसक > सत्त्व > मृत > आयुर्वेदीय उसे

तद्भस्म मृतकान्तेन समेन सह योजयेत् ।
अष्टगुञ्जामितं चूर्णं त्रिफलाक्वाथसंयुतम् ।। रस-२.१६० ।।

कान्तपात्रस्थितं रात्रौ तिलजप्रतिवापकम् ।
निषेवितं निहन्त्याशु मधुमेहमपि ध्रुवम् ।। रस-२.१६१ ।।

पित्तं क्षयं च पाण्डुं च श्वयथुं गुल्ममेव च ।
रक्तगुल्मं च नारीणां प्रदरं सोमरोगकम् ।। रस-२.१६२ ।।

योनिरोगानशेषांश्च विषमांश्च ज्वरानपि ।
रजःशूलं च नारीणां कासं श्वासं च हिध्मिकाम् ।। रस-२.१६३ ।।

# रसरत्नसमुच्चय : अध्याय 03

https://sa.wikisource.org/s/80m

गन्धाश्मगैरिकासीसकाङ्क्षीतालशिलाञ्जनम् ।
कङ्कुष्ठं चेत्युपरसाश्चाष्टौ पारदकर्मणि ।। रस-३.१ ।।

पार्वत्युवाच ।
गन्धकस्य तु माहात्म्यं तद्गुह्यं वद मे प्रभो ।। रस-३.२ ।।

ईश्वर उवाच ।

### सुल्ँउर् > मिथकीय उत्पत्ति

श्वेतद्वीपे पुरा देवि सर्वरत्नविभूषिते ।
सर्वकाममये रम्ये तीरे क्षीरपयोनिधेः ।। रस-३.३ ।।

विद्याधरादिमुख्याभिरङ्गनाभिश्च योगिनाम् ।
सिद्धाङ्गनाभिः श्रेष्ठाभिस्तथैवाप्सरसां गणैः ।। रस-३.४ ।।

देवाङ्गनाभी रम्याभिः क्रीडिताभिर्मनोहरैः ।
गीतैर्नृत्यैर्विचित्रैश्च वाद्यैर्नानाविधैस्तथा ।। रस-३.५ ।।

एवं संक्रीडमानायाः प्राभवत् प्रसृतं रजः ।
तद्रजोऽतीव सुश्रोणि सुगन्धि सुमनोहरम् ।। रस-३.६ ।।

रजसश्चातिबाहुल्याद्वासस्ते रक्ततां ययौ ।
तत्र त्यक्त्वा तु तद्वस्त्रं सुस्नाता क्षीरसागरे ।। रस-३.७ ।।

वृता देवाङ्गनाभिस्त्वं कैलासं पुनरागता ।
ऊर्मिभिस्तद्रजोवस्त्रं नीतं मध्ये पयोनिधेः ।। रस-३.८ ।।

एवं ते शोणितं भद्रे प्रविष्टं क्षीरसागरे ।
क्षीराब्धिमथने चैतदमृतेन सहोत्थितम् ।। रस-३.९ ।।

निजगन्धेन तान्सर्वान्हर्षयन्सर्वदानवान् ।
ततो देवगणैरुक्तं गन्धकाख्यो भवत्वयम् ।। रस-३.१० ।।

रसस्य बन्धनार्थाय जारणाय भवत्वयम् ।
ये गुणाः पारदे प्रोक्तास्ते चैवात्र भवन्त्विति ।। रस-३.११ ।।

इति देवगणैः प्रीतैः पुरा प्रोक्तं सुरेश्वरि ।
तेनायं गन्धको नाम विख्यातः क्षितिमण्डले ।। रस-३.१२ ।।

### गन्धकभेदाः

स चापि त्रिविधो देवि शुकचञ्चुनिभो वरः ।
मध्यमः पीतवर्णः स्याच्छुक्लवर्णोऽधमः प्रिये ।। रस-३.१३ ।।

### गन्धकभेदाः (२)

चतुर्धा गन्धको ज्ञेयो वर्णैः श्वेतादिभिः खलु ।
श्वेतोऽत्र खटिकाप्रोक्तो लेपने लोहमारणे ।। रस-३.१४ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- खठिका खडु चास् इति नाम्ना लोके प्रसिद्धा ।। रसटी-३.१४;१

तथा चामलसारः स्याद्यो भवेत्पीतवर्णवान् ।
शुकपिच्छः स एव स्याच्छ्रेष्ठो रसरसायने ।। रस-३.१५ ।।

रक्तश्च शुकतुण्डाख्यो धातुवादविधौ वरः ।
दुर्लभः कृष्णवर्णश्च स जरामृत्युनाशनः ।। रस-३.१६ ।।

### गन्धकगुणाः

गन्धाश्मातिरसायनः सुमधुरः पाके कटूष्णो मतः कण्डूकुष्ठविसर्पदद्रुदलनो दीप्तानलः पाचनः ।
आमोन्मोचनशोषणो विषहरः सूतेन्द्रवीर्यप्रदो गौरीपुष्पभवस्तथा कृमिहरः सत्यात्मकः सूतजित् ।। रस-३.१७ ।।

## सुल्fउर् > ओरिगिन् fरोम् Bअलि

बलिना सेवितः पूर्वं प्रभूतबलहेतवे ।। रस-३.१८ ।।

वासुकिं कर्षतस्तस्य तन्मुखज्वालया द्रुता ।
वसा गन्धकगन्धाढ्या सर्वतो निःसृता तनोः ।। रस-३.१९ ।।

गन्धकत्वं च सम्प्राप्ता गन्धोऽभूत्सविषः स्मृतः ।
तस्माद् बलिवसेत्युक्तो गन्धकोऽतिमनोहरः ।। रस-३.२० ।।

### गन्धकशोधन

पयःस्विन्नो घटीमात्रं वारिधौतो हि गन्धकः ।
गव्याज्यविद्रुतो वस्त्राद्गालितः शुद्धिमृच्छति ।। रस-३.२१ ।।

एवं संशोधितः सोऽयं पाषाणान् अम्बरे त्यजेत् ।
घृते विषं तुषाकारं स्वयं पिण्डत्वमेव च ।। रस-३.२२ ।।

इति शुद्धो हि गन्धाश्मा नापथ्यैर्विकृतिं व्रजेत् ।
अपथ्यादन्यथा हन्यात्पीतं हालाहलं यथा ।। रस-३.२३ ।।

### सुल्फ़ुर् > शोधन

गन्धको द्रावितो भृङ्गरसे क्षिप्तो विशुध्यति ।
तद्रसैः सप्तधा भिन्नो गन्धकः परिशुध्यति ।। रस-३.२४ ।।

### गन्धकशोधन (२)

स्थाल्यां दुग्धं विनिक्षिप्य मुखे वस्त्रं निबध्य च ।
गन्धकं तत्र निक्षिप्य चूर्णितं सिकताकृति ।। रस-३.२५ ।।

छादयेत्पृथुदीर्घेण खर्परेणैव गन्धकम् ।
ज्वालयेत्खर्परस्योर्ध्वं वनछाणैस् तथोपलैः ।। रस-३.२६ ।।

दुग्धे निपतितो गन्धो गलितः परिशुध्यति ।
शतवारं कृतं चैव निर्गन्धो जायते ध्रुवम् ।। रस-३.२७ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- मतान्तरमाह स्थाल्यामिति ।। रसबोध-३.२७;१
- ज्वालयेदित्यत्र वह्निमिति शेषः ।। रसबोध-३.२७;२
- वनच्छाणैः वनोपलैः ।। रसबोध-३.२७;३
- उपलैः गृहजातशुष्कगोमयपिण्डैः ।। रसबोध-३.२७;४

### शुद्धगन्धकप्रयोग

इत्थं विशुद्धस्त्रिफलाज्यभृङ्गमध्वन्वितः शाणमितो हि लीढः ।
गृध्राक्षितुल्यं कुरुतेऽक्षियुग्मं करोति रोगोज्झितदीर्घमायुः ।। रस-३.२८ ।।

### सुल्फ़ुर् > गन्धतैल

कलांशव्योषसंयुक्तं गन्धकं श्लक्ष्णचूर्णितम् ।
अरत्निमात्रे वस्त्रे तद् विप्रकीर्य विवेष्ट्य तत् ।। रस-३.२९ ।।

सूत्रेण वेष्टयित्वाथ यामं तैले निमज्जयेत् ।
धृत्वा संदंशतो वर्तिमध्यं प्रज्वालयेच्च तम् ।
द्रुतो निपतितो गन्धो बिन्दुशः काचभाजने ।। रस-३.३० ।।

### सुल्फ़ुर् > गन्धतैल > अप्प्लिचतिओन्

तां द्रुतिं प्रक्षिपेत् पत्रे नागवल्ल्यास् त्रिबिन्दुकाम् ।
वल्लेन प्रमितं स्वच्छं सूतेन्द्रं च विमर्दयेत् ।। रस-३.३१ ।।

अङ्गुल्याथ सपत्रां तां द्रुतिं सूतं च भक्षयेत् ।
करोति दीपनं तीव्रं क्षयं पाण्डुं च नाशयेत् ।। रस-३.३२ ।।

कासं श्वासं च शूलार्तिग्रहणीम् अतिदुर्धराम् ।
आमं विनाशयत्याशु लघुत्वं प्रकरोति च ।। रस-३.३३ ।।

## सुल्फ़ुर् > गन्धतैल > अप्प्लिचतिओन्

घृताक्ते लोहपात्रे तु विद्रुतं शुद्धगन्धकम् ।
घृताक्तदर्विकाक्षिप्तं द्विनिष्कप्रमितं भजेत् ।
हन्ति क्षयमुखान् रोगान् कुष्ठरोगं विशेषतः ।। रस-३.३४ ।।

क्षाराम्लतैलसौवीरविदाहि द्विदलं तथा ।
शुद्धगन्धकसेवायां त्यजेद्योगयुतेन हि ।। रस-३.३५ ।।

गन्धकस्तुल्यमरिचः षड्गुणत्रिफलान्वितः ।
घृष्टः शम्याकमूलेन पीतश्चाखिलकुष्ठहा ।। रस-३.३६ ।।

तन्मूलं सलिले पिष्टं लेपयेत्प्रत्यहम् तनौ ।
दृष्टप्रत्यययोगोऽयं सर्वत्र प्रतिवीर्यवान् ।
श्रीमता सोमदेवेन सम्यगत्र प्रकीर्तितः ।। रस-३.३७ ।।

द्विनिष्कप्रमितं गन्धं पिष्ट्वा तैलेन संयुतम् ।
अथापामार्गतोयेन सतैलमरिचेन हि ।। रस-३.३८ ।।

विलिप्य सकलं देहं तिष्ठेद्धर्मे ततः परम् ।
तक्रभक्तं च भुञ्जीत तृतीये प्रहरे खलु ।। रस-३.३९ ।।

भजेद्रात्रौ तथा वह्निं समुत्थाय तथा प्रगे ।
महिषीछगणम् लिप्त्वा स्नायाच्छीतेन वारिणा ।। रस-३.४० ।।

ततोऽभ्यज्य घृतैर्देहं स्नायादिष्टोष्णवारिणा ।
अमुना क्रमयोगेन विनश्यत्यतिवेगतः ।
दुर्जया बहुकालीना पामा कण्डुः सुनिश्चितम् ।। रस-३.४१ ।।

गन्धकस्य प्रयोगाणां शतं तन्न प्रकीर्तितम् ।
ग्रन्थविस्तारभीतेन सोमदेवेन भूभुजा ।। रस-३.४२ ।।

## सुल्फ़ुर् > गन्धतैल

अथवार्कस्नुहीक्षीरैर् वस्त्रं लेप्यं तु सप्तधा ।
गन्धकं नवनीतेन पिष्ट्वा वस्त्रं लिपेद्धनम् ।। रस-३.४३ ।।

तद्वर्तिं ज्वलितां दंशे धृतां कुर्याद् अधोमुखीम् ।
तैलं पतेदधोभाण्डे ग्राह्यं योगेषु योजयेत् ।। रस-३.४४ ।।

## सुल्फ़उर् > शुद्ध > आयुर्वेदीय गुण

शुद्धगन्धो हरेद्रोगान्कुष्ठमृत्युजरादिकान् ।
अग्निकारी महानुष्णो वीर्यवृद्धिं करोति च ।। रस-३.४५ ।।

## गैरिक > सुब्त्य्पेस्

पाषाणगैरिकं चैकं द्वितीयं स्वर्णगैरिकम् ।। रस-३.४६ ।।

## पाषाणगैरिक > गुण

पाषाणगैरिकं प्रोक्तं कठिनम् ताम्रवर्णकम् ।

## स्वर्णगैरिक > गुण

अत्यन्तशोणितं स्निग्धं मसृणं स्वर्णगैरिकम् ।। रस-३.४७ ।।

## स्वर्णगैरिक > आयुर्वेदीय गुण

स्वादु स्निग्धं हिमं नेत्र्यं कषायं रक्तपित्तनुत् ।
हिध्मावमिविषघ्नं च रक्तघ्नं स्वर्णगैरिकम् ।

## पाषाणगैरिक > आयुर्वेदीय गुण

पाषाणगैरिकं चान्यत्पूर्वस्मादल्पकं गुणैः ।। रस-३.४८ ।।

## गैरिक > शोधन

गैरिकं तु गवां दुग्धैर्भावितं शुद्धिम् ऋच्छति ।। रस-३.४९ ।।

## गैरिक > सत्त्व

गैरिकं सत्त्वरूपं हि नन्दिना परिकीर्तितम् ।। रस-३.५० ।।

कैर् अप्युक्तं पतेत्सत्त्वं क्षाराम्लक्लिन्नगैरिकात् ।
उपतिष्ठति सूतेन्द्रमेकत्वं गुणवत्तरम् ।। रस-३.५१ ।।

## कासीस > सुब्त्य्पेस्

कासीसं वालुकाद्येकं पुष्पपूर्वम् अथापरम् ।। रस-३.५२ ।।

## कासीस > आयुर्वेदीय गुण

क्षाराम्लागरुधूमाभं सोष्णवीर्यं विषापहम् ।
वालुकापुष्पकासीसं श्वित्रघ्नं केशरञ्जनम् ।। रस-३.५३ ।।

## पुष्पकासीस > आयुर्वेदीय गुण

पुष्पादिकासीसमतिप्रशस्तं सोष्णं कषायाम्लम् अतीव नेत्र्यम् ।
विषानिलश्लेष्मगदव्रणघ्नं श्वित्रक्षयघ्नं कचरञ्जनं च ।। रस-३.५४ ।।

## कासीस > शोधन

सकृद्भृङ्गाम्बुना क्लिन्नं कासीसं निर्मलं भवेत् ।। रस-३.५५ ।।

## कासीस > सत्त्वपातन

तुवरीसत्त्ववत्सत्त्वमेतस्यापि समाहरेत् ।। रस-३.५६ ।।

## कासीस > शोधन

कासीसं शुद्धिमाप्नोति पित्तैश्च रजसा स्त्रियाः ।। रस-३.५७ ।।

बलिना हतकासीसं क्रान्तं कासीसमारितम् ।
उभयं समभागं हि त्रिफलावेल्लसंयुतम् ।। रस-३.५८ ।।

विषमांशघृतक्षौद्रप्लुतं शाणमितं प्रगे ।
सेवितं हन्ति वेगेन श्वित्रं पाण्डुक्षयामयम् ।। रस-३.५९ ।।

गुल्मप्लीहगदं शूलं मूलरोगं विशेषतः ।
रसायनविधानेन सेवितं वत्सरावधि ।। रस-३.६० ।।

आमसंशोषणं श्रेष्ठं मन्दाग्निपरिदीपनम् ।
पलितं वलिभिः सार्धं विनाशयति निश्चितम् ।। रस-३.६१ ।।

## तुवरी

सौराष्ट्राश्मनि सम्भूता सा तुवरी मता ।
वस्त्रेषु लिप्यते यासौ मञ्जिष्ठारागबन्धिनी ।। रस-३.६२ ।।

## तुवरी > सुब्त्य्पेस्

फटकी फुल्लिका चेति द्वितीया परिकीर्तिता ।। रस-३.६३ ।।

### फटकी > आयुर्वेदीय गुण

ईषत्पीता गुरुः स्निग्धा पीतिका विषनाशनी ।
व्रणकुष्ठहरा सर्वकुष्ठघ्नी च विशेषतः ।। रस-३.६४ ।।

### फुल्लिका > आयुर्वेदीय गुण

निर्भारा शुभ्रवर्णा च स्निग्धा साम्लापरा मता ।
सा फुल्लतुवरी प्रोक्ता लेपात्ताम्रं चरेदयः ।। रस-३.६५ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- तद्भेदावाह स्फटिकी पीतिकेति ।। रसटी-३.६५;१
- स्फटिकीलेपाच्छतवारं ताम्रपत्रं लोहपत्रं प्रति वा लिप्ता सती तत्पश्चात् चरेत् पारदेन प्रयोज्यकर्त्रा चारयेद् भक्षितां कारयेद् इत्यर्थः ।। रसटी-३.६५;२
- यतो जारणायाम् अस्या विडद्रव्यत्वेनोपयोगात् ।। रसटी-३.६५;३
- अन्तर्भावितण्यर्थोऽत्र चरधातुः ।। रसटी-३.६५;४

$

- टीका रससरत्नसमुच्चयबोधिनी:
- लेपाद् इति ।। रसबोध-३.६५;१
- फुल्लतुवरीलेपेन ताम्रं लौहांशम् उज्झति ताम्रे यः लौहांशः विद्यते स निर्गच्छतीत्यर्थः ताम्रं लौहवत् काठिन्यं गच्छतीत्यर्थो वा ।। रसबोध-३.६५;२

काङ्क्षी कषाया कटुकाम्लकण्ठ्या केश्या व्रणघ्नी विषनाशनी च ।
श्वित्रापहा नेत्रहिता त्रिदोषशान्तिप्रदा पारदजारणी च ।। रस-३.६६ ।।

### तुवरी > शोधन

तुवरी काञ्जिके क्षिप्त्वा त्रिदिनाच्छुद्धिमृच्छति ।। रस-३.६७ ।।

### तुवरी > सत्त्वपातन

क्षाराम्लैर् मर्दिता ध्माता सत्त्वं मुञ्चति निश्चितम् ।। रस-३.६८ ।।

### तुवरी > सत्त्वपातन

गोपित्तेन शतं वारान् सौराष्ट्रीं भावयेत्ततः ।
धमित्वा पातयेत्सत्त्वं क्रामणं चातिगुह्यकम् ।। रस-३.६९ ।।

### हरिताल > सुब्त्य्पेस्

हरितालं द्विधा प्रोक्तं पत्राख्यं पिण्डसंज्ञकम् ।। रस-३.७० ।।

### पत्रतालक

स्वर्णवर्णं गुरु स्निग्धं तनुपत्त्रं च भासुरम् ।
तत् पत्त्रतालकं प्रोक्तं बहुपत्त्रं रसायनम् ।। रस-३.७१ ।।

### पिण्डतालक

निष्पत्त्रं पिण्डसदृशम् स्वल्पसत्त्वं तथागुरु ।
स्त्रीपुष्पहरणं तत्तु गुणाल्पं पिण्डतालकम् ।। रस-३.७२ ।।

### हरिताल > आयुर्वेदीय गुण

श्लेष्मरक्तविषवातभूतनुत्केवलं च खलु पुष्पहृत्स्त्रियः ।
स्निग्धमुष्णकटुकं च दीपनं कुष्ठहारि हरितालमुच्यते ।। रस-३.७३ ।।

### हरिताल > शोधन

स्निग्धं कूष्माण्डतोये वा तिलक्षारजले अपि वा ।
तोये वा चूर्णसंयुक्ते दोलायन्त्रेण शुध्यति ।। रस-३.७४ ।।

### हरिताल > अशुद्ध > आयुर्वेदीय गुण

अशुद्धं तालमायुघ्नं कफमारुतमेहकृत् ।
तापस्फोटाङ्गसंकोचं कुरुते तेन शोधयेत् ।। रस-३.७५ ।।

### हरिताल > शोधन

तालकं कणशः कृत्वा दशांशेन च टङ्कणम् ।
जम्बीरोत्थद्रवैः क्षाल्यं काञ्जिकैः क्षालयेत्ततः ।। रस-३.७६ ।।

वस्त्रे चतुर्गुणे बद्ध्वा दोलायन्त्रे दिनं पचेत् ।
सचूर्णेनारनालेन दिनं कूष्माण्डजे रसे ।
स्वेद्यं वा शाल्मलीतोयैस्तालकं शुद्धिमाप्नुयात् ।। रस-३.७७ ।।

### हरिताल > शोधन

मधुतुल्ये घनीभूते कषाये ब्रह्ममूलजे ।
त्रिवारं तालकं भाव्यं पिष्ट्वा मूत्रेऽथ माहिषे ।। रस-३.७८ ।।

उपलैर्दशभिर्देयं पुटं रुद्ध्वाथ पेषयेत् ।
एवं द्वादशधा पाच्यं शुद्धं योगेषु योजयेत् ।। रस-३.७९ ।।

## हरिताल > सत्त्वपातन

कुलित्थक्वाथसौभाग्यमहिष्याज्यमधुप्लुतम् ।
स्थाल्यां क्षिप्त्वा विदध्याच्च त्व् अम्लेन छिद्रयोगिना ।। रस-३.८० ।।

सम्यङ्निरुध्य शिखिनं ज्वालयेत्क्रमवर्धितम् ।
एकप्रहरमात्रं हि रन्ध्रमाच्छाद्य गोमयैः ।। रस-३.८१ ।।

यामान्ते छिद्रमुद्घाट्य दृष्टे धूमे च पाण्डुरे ।
शीतां स्थालीं समुत्तार्य सत्त्वमुत्कृष्य चाहरेत् ।। रस-३.८२ ।।

सर्वपाषाणसत्त्वानां प्रकाराः सन्ति कोटिशः ।
ग्रन्थविस्तारभीत्यातो लिखिता न मया खलु ।। रस-३.८३ ।।

## हरिताल > सत्त्वपातन

पलालकं रवेर्दुग्धैर्दिनमेकं विमर्दयेत् ।
क्षिप्त्वा षोडशिकातैले मिश्रयित्वा ततः पचेत् ।। रस-३.८४ ।।

अनावृतप्रदेशे च सप्तयामावधि ध्रुवम् ।
स्वाङ्गशीतमधस्थं च सत्त्वं श्वेतं समाहरेत् ।। रस-३.८५ ।।

## हरिताल > सत्त्वपातन

छागलस्याथ बालस्य बलिना च समन्वितम् ।
तालकं दिवसद्वंद्वं मर्दयित्वातियत्नतः ।। रस-३.८६ ।।

युक्तं द्रावणवर्गेण काचकुप्यां विनिक्षिपेत् ।
त्रिधा तां च मृदा लिप्त्वा परिशोष्य खरातपे ।। रस-३.८७ ।।

ततः खर्परकच्छिद्रे तामर्धां चैव कूपिकाम् ।
प्रवेश्य ज्वालयेदग्निं द्वादशप्रहरावधि ।
कूपिकण्ठस्थितं शीतं शुद्धं सत्त्वं समाहरेत् ।। रस-३.८८ ।।

## हरिताल > सत्त्वपातन

पलार्धप्रमितं तालं बद्ध्वा वस्त्रे सिते दृढे ।
बलिनालिप्य यत्नेन त्रिवारं परिशोष्य च ।। रस-३.८९ ।।

द्राविते त्रिफले ताम्रे क्षिपेत्तालकपोटलीम् ।
भस्मना छादयेच्छीघ्रं ताम्रेणावेष्टितं सितम् ।
मृदुलं सत्त्वमादद्यात्प्रोक्तं रसरसायने ।। रस-३.९० ।।

## मनःशिला > सुब्त्य्पेस्

मनःशिला त्रिधा प्रोक्ता श्यामाङ्गी कणवीरका ।
खण्डाख्या चेति तद्रूपं विविच्य परिकथ्यते ।। रस-३.९१ ।।

## मनःशिला > श्यामाङ्गी

श्यामा रक्ता सगौरा च भाराढ्या श्यामिका मता ।

## मनःशिला > कणवीरक

तेजस्विनी च निर्गौरा ताम्राभा कणवीरका ।। रस-३.९२ ।।

## मनःशिला > खण्ड

चूर्णीभूतातिरक्ताङ्गी सभारा खण्डपूर्विका ।
उत्तरोक्तगुणैः श्रेष्ठा भूरिसत्त्वा प्रकीर्तिता ।। रस-३.९३ ।।

## मनःशिलागुणाः

मनःशिला सर्वरसायनाग्र्या तिक्ता कटूष्णा कफवातहन्त्री ।
सत्त्वात्मिका भूतविषाग्निमान्द्यकण्डूतिकासक्षयहारिणी च ।। रस-३.९४ ।।

## मनःशिला > अशुद्ध > आयुर्वेदीय गुण

अश्मरीं मूत्रकृच्छ्रं च अशुद्धा कुरुते शिला ।
मन्दाग्निं मलबन्धं च शुद्धा सर्वरुजापहा ।। रस-३.९५ ।।

## मनःशिलाशोधनम्

अगस्त्यपत्त्रतोयेन भाविता सप्तवारकम् ।
शृङ्गवेररसैर् वापि विशुध्यति मनःशिला ।। रस-३.९६ ।।

## मनःशिला > शोधन

जयन्तीभृङ्गराजोत्थरक्तागस्त्यरसैः शिलाम् ।
दोलायन्त्रे पचेद्यामं यामं छागोत्थमूत्रकैः ।
क्षालयेदारनालेन सर्वरोगेषु योजयेत् ।। रस-३.९७ ।।

## मनःशिलासत्त्वपातन (१)

अष्टमांशेन किट्टेन गुडगुग्गुलुसर्पिषा ।
कोष्ठ्यां रुद्ध्वा दृढं ध्माता सत्त्वं मुञ्चेन्मनःशिला ।। रस-३.९८ ।।

## मनःशिलासत्त्वपातन (२)

भूनागधौतसौभाग्यमदनैश्च विमर्दितैः ।
कारवल्लीदलाम्भोभिर्मूषां कृत्वात्र निक्षिपेत् ।। रस-३.९९ ।।

शिलां क्षाराम्लनिष्पिष्टां प्रधमेत्तदनन्तरम् ।
कोकिलाद्वयमात्रं हि ध्मानात्सत्त्वं त्यजत्यसौ ।। रस-३.१०० ।।

## अञ्जन > सुब्त्य्पेस्

सौवीरमञ्जनं प्रोक्तं रसाञ्जनमतः परम् ।
स्रोतोञ्जनं तदन्यच्च पुष्पाञ्जनकमेव च ।
नीलाञ्जनं च तेषां हि स्वरूपमिह वर्ण्यते ।। रस-३.१०१ ।।

## सौवीर

सौवीरमञ्जनं धूम्रं रक्तपित्तहरं हिमम् ।
विषहिध्माक्षिरोगघ्नं व्रणशोधनरोपणम् ।। रस-३.१०२ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- सौवीरं कृष्णवर्णसुर्मा इति लोकभाषायाम् ।। रसटी-३.१०२;१

## रसाञ्जन

रसाञ्जनं च पीताभं विषवक्त्रगदापहम् ।
श्वासहिध्मापहं वर्ण्यं वातपित्तास्रनाशनम् ।। रस-३.१०३ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- रसाञ्जनमिति ।। रसटी-३.१०३;१
- एतद् रसोद् इति ब्रिजभाषायाम् उत्तरदेशे प्रसिद्धम् ।। रसटी-३.१०३;२
- एतद् रीतिकिट्टजन्यं दारुहरिद्राकषायाजदुग्धपाकजन्यं तु रसाञ्जनम् इत्यपि वदन्ति ।। रसटी-३.१०३;३

## स्रोतोञ्जन

स्रोतोञ्जनं हिमं स्निग्धं कषायं स्वादु लेखनम् ।
नेत्र्यं हिध्माविषछर्दिकफपित्तास्ररोगनुत् ।। रस-३.१०४ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- स्रोतोञ्जनमिति ।। रसटी-३.१०४;१

- श्वेतवर्णसुर्मा इति लोके प्रसिद्धम् ।। रसटी-३.१०४;२

### पुष्पाञ्जन

पुष्पाञ्जनं सितं स्निग्धं हिमं सर्वाक्षिरोगनुत् ।
अतिदुर्धरहिध्माघ्नं विषज्वरगदापहम् ।। रस-३.१०५ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- पुष्पाञ्जनमिति ।। रसटी-३.१०५;१
- एतद् रीतिपुष्पजन्यम् ।। रसटी-३.१०५;२
- जस्तफूल् इति महाराष्ट्रभाषायां प्रसिद्धम् ।। रसटी-३.१०५;३

### नीलाञ्जन

नीलाञ्जनं गुरु स्निग्धं नेत्र्यं दोषत्रयापहम् ।
रसायनं सुवर्णघ्नं लोहमार्दवकारकम् ।। रस-३.१०६ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- नीलाञ्जनमिति ।। रसटी-३.१०६;१
- नीलवर्णसुर्मा इति लोके प्रसिद्धः ।। रसटी-३.१०६;२

### अञ्जन > शोधन

अञ्जनानि विशुध्यन्ति भृङ्गराजनिजद्रवैः ।। रस-३.१०७ ।।

### अञ्जन > सत्त्वपातन

मनोह्वासत्त्ववत् सत्त्वम् अञ्जनानां समाहरेत् ।। रस-३.१०८ ।।

### स्रोतोञ्जन > फ्य्स्. गुण

वल्मीकशिखराकारं भङ्गे नीलोत्पलद्युति ।
घृष्टं तु गैरिकच्छायं स्रोतोजं लक्षयेद्बुधः ।। रस-३.१०९ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वल्मीकशिखराकारं वल्मीकवत् उन्नतावनतबहुशिखरविशिष्टम् ।। रसबोध-३.१०९;१

### स्रोतोञ्जन > प्रेपरतिओन् fओर् रसबन्धन

गोशकृद्रसमूत्रेषु घृतक्षौद्रवसासु च ।
भावितं बहुशस्तच्च शीघ्रं बध्नाति सूतकम् ।। रस-३.११० ।।

### रसाञ्जन > शोधन

सूर्यावर्तादियोगेन शुद्धिमेति रसाञ्जनम् ।। रस-३.१११ ।।

### स्रोतोञ्जन > सत्त्वपातन

राजावर्तकवत्सत्त्वं ग्राह्यं स्रोतोञ्जनादपि ।। रस-३.११२ ।।

### कङ्कुष्ठ

हिमवत्पादशिखरे कङ्कुष्ठमुपजायते ।

### कङ्कुष्ठ > सुब्त्य्पेस्

तत्रैकं नालिकाख्यं हि तदन्यद्रेणुकं मतम् ।। रस-३.११३ ।।

### नालिक

पीतप्रभं गुरु स्निग्धं श्रेष्ठं कङ्कुष्ठमादिमम् ।

### रेणुक

श्यामपीतं लघु त्यक्तसत्त्वं नेष्टं हि रेणुकम् ।। रस-३.११४ ।।

### कङ्कुष्ठ > ओरिगिन् fरोम् दिff. अनिमल्स्

केचिद्वदन्ति कङ्कुष्ठं सद्योजातस्य दन्तिनः ।
वर्चश्च श्यामपीताभं रेचनं परिकथ्यते ।। रस-३.११५ ।।

कतिचित् तेजिवाहानां नालं कङ्कुष्ठसंज्ञकम् ।

---

- टीका रससरत्नसमुच्चयटीका:
- मतान्तरमाह कतिचिदिति ।। रसटी-३.११६कख;१

- कतिचिद्वदन्ति किं तेजिवाहानां प्रबलवेगसामर्थ्यविशिष्टाश्वानां नालं सद्योजातानां तेषां नाभिनालं कङ्कुष्ठमिति ।। रसटी-३.११६कख;२

वदन्ति श्वेतपीताभं तददतीव विरेचनम् ।। रस-३.११६ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ क्रमप्राप्तं कङ्कुष्ठं वर्णयति हिमवदिति ।। रसटी-३.११६;१
- स च पीतवर्णः ।। रसटी-३.११६;२
- श्लक्ष्णानेकसचाकचिक्यफलकविशिष्टः खनिजः क्षुद्रपाषाणः प्राणिजश्च ।। रसटी-३.११६;३
- उभयमपि द्विविधं नलिका रेणुकश्चेति खनिजभेदौ ।। रसटी-३.११६;४

रसे रसायनं श्रेष्ठं निःसत्त्वं बहुवैकृतम् ।। रस-३.११७ ।।

### कङ्कुष्ठ > आयुर्वेदीय गुण

कङ्कुष्ठं तिक्तकटुकं वीर्योष्णं चातिरेचनम् ।
व्रणोदावर्तशूलार्तिगुल्मप्लीहगुदार्तिनुत् ।। रस-३.११८ ।।

### महारस, उपरस > शोधन, सत्त्वपातन

सूर्यावर्तककदली वन्ध्या कोशातकी च सुरदाली ।
शिग्रुश्च वज्रकन्दो निरङ्कणा काकमाची च ।। रस-३.११९ ।।

आसामेकरसेन तु लवणक्षाराम्लभावितं बहुशः ।
शुध्यन्ति रसोपरसा ध्माता मुञ्चन्ति सत्त्वानि ।। रस-३.१२० ।।

### कङ्कुष्ठ > शोधन

कङ्कुष्ठं शुद्धिमायाति त्रिधा शुण्ठ्यम्बुभावितम् ।। रस-३.१२१ ।।

### कङ्कुष्ठ > सत्त्वपातन

सत्त्वाकर्षोऽस्य न प्रोक्तो यस्मात्सत्त्वमयं हि तत् ।। रस-३.१२२ ।।

भजेदेनं विरेकार्थं ग्राहिभिर्यवमात्रया ।
नाशयेदामपूर्तिं च विरेच्य क्षणमात्रतः ।। रस-३.१२३ ।।

भक्षितः सह ताम्बूलैर्विरिच्यासून्विनाशयेत् ।। रस-३.१२४ ।।

बर्बुरीमूलिकाक्वाथजीरसौभाग्यकं समम् ।
कङ्कुष्ठं विषनाशाय भूयो भूयः पिबेन्नरः ।। रस-३.१२५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- गौरीपाषाणः शुक्लपाषाणः फुल्खडि इति लोके ।। रसबोध-३.१२५;१

$

- टीका रससरत्नसमुच्चयटीका:
- कम्पिल्लः क्षुद्रपाषाणविशेषः कपिलेति नाम्ना लोके प्रसिद्धो गौरीपाषाणो दारुणविषरूपोऽयं पाषाणविशेषः सोमल इति महाराष्ट्रभाषायां प्रसिद्धः ।। रसटी-३.१२५;१

### साधारणरसाः

कम्पिल्लश्चपलो गौरीपाषाणो नवसारकः ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वह्निजारः स्वनामख्यातः पश्चिमसागरसम्भूत औषधिविशेषः ।। रसबोध-३.१२६कख;१

$

- टीका रससरत्नसमुच्चयटीका:
- अग्निजारो बहिर् अर्णवोज्झितो विशिष्टनक्रजरायुः ।। रसटी-३.१२६कख;१

कपर्दो वह्निजारश्च गिरिसिन्दूरहिङ्गुलौ ।। रस-३.१२६ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- गिरिसिन्दूरः पर्वतपाषाणोदरे रक्तवर्णः पदार्थविशेषः ।। रसटी-३.१२६;१
- हिङ्गुलश्चूर्णपारदः स्वनाम्नैव लोके प्रसिद्धः ।। रसटी-३.१२६;२

$

- टीका रससरत्नसमुच्चयबोधिनी:
- मृद्दारशृङ्गं सीसकसमुत्पन्नः पार्वतीयधातुविशेषः ।। रसबोध-३.१२६;१

$

- टीका रससरत्नसमुच्चयटीका:
- मोद्दारशृङ्गं मुर्दाशिंगेति लोके प्रसिद्धम् ।। रसटी-३.१२६;१

मोदारशृङ्गम् इत्यष्टौ साधारणरसाः स्मृताः ।
रससिद्धकराः प्रोक्ता नागार्जुनपुरःसरैः ।। रस-३.१२७ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- चन्द्रिकाढ्यः चाकचक्यविशिष्टः सचन्द्राभ्रवद् उज्ज्वलकणाबहुलः इत्यर्थः ।। रसबोध-३.१२७;१

### कम्पिल्लकः

इष्टिकाचूर्णसंकाशश्चन्द्रिकाढ्योऽतिरेचनः ।
सौराष्ट्रदेशे चोत्पन्नः स हि कम्पिल्लकः स्मृतः ।। रस-३.१२८ ।।

### कम्पिल्ल > आयुर्वेदीय गुण

पित्तव्रणाध्मानविबन्धनिघ्नः श्लेष्मोदरार्तिकृमिगुल्मवैरी ।
मूलामशोफज्वरशूलहारी कम्पिल्लको रेच्यगदापहारी ।। रस-३.१२९ ।।

### गौरीपाषाणकः

गौरीपाषाणकः पीतो विकटो हतचूर्णकः ।
स्फटिकाभश्च शङ्खाभो हरिद्राभस् त्रयः स्मृताः ।। रस-३.१३० ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- गौरीपाषाणस्य पर्यायान् वर्णभेदेन त्रैविध्यं चाह गौरीति ।। रसबोध-३.१३०;१
- पीतविकटहतचूर्णकाः इति इमे त्रयः पर्यायाः ।। रसबोध-३.१३०;२
- पूर्व इति ।। रसबोध-३.१३०;३
- पूर्वः पूर्वः हरिद्राभगौरीपाषाणात् शङ्खाभः शङ्खाभपाषाणात् स्फटिकाभः श्रेष्ठः ।। रसबोध-३.१३०;४

$

- टीका रससरत्नसमुच्चयटीका:
- त्रिविधस्य तस्य स्वरूपमाह यः किंचित् पीतवर्णो विकटकराल आहतः संचूर्णरूपो भवति स गौरीपाषाण इत्युच्यते ।। रसटी-३.१३०;१
- अयम् एव स्फटिकसमानचाकचिक्यविशिष्टः ।। रसटी-३.१३०;२
- एतद् विशेषणं द्वितीयभेदस्यापि सम्भवति ।। रसटी-३.१३०;३
- द्वितीयः शङ्खाभः सोऽपि चाकचिक्यविशिष्टः ।। रसटी-३.१३०;४
- तृतीयभेदापन्नो यः स तु हरिद्राभो हरिद्रासमानः पूर्णपीतवर्णः ।। रसटी-३.१३०;५
- त्रिविधमध्य उत्तरोत्तरात् पूर्वपूर्वः श्रेष्ठः ।। रसटी-३.१३०;६

## गौरीपाषाण > शोधन

पूर्वं पूर्वं गुणैः श्रेष्ठः कारवल्लीफले क्षिपेत् ।
स्वेदयेद्धण्डिकामध्ये शुद्धो भवति मूषकः ।। रस-३.१३१ ।।

## गौरीपाषाण > सत्त्वपातन

तालवद्ग्राहयेत्सत्त्वं शुद्धं शुभ्रं प्रयोजयेत् ।। रस-३.१३२ ।।

## गौरीपाषाण > आयुर्वेदीय गुण

रसबन्धकरः स्निग्धो दोषघ्नो रसवीर्यकृत् ।। रस-३.१३३ ।।

## नवसार > प्रोदुच्तिओन्

करीरपीलुकाष्ठेषु पच्यमानेषु चोद्भवः ।
क्षारोऽसौ नवसारः स्याच्चूलिकालवणाभिधः ।। रस-३.१३४ ।।

इष्टिकादहने जातं पाण्डुरं लवणं लघु ।
तदुक्तं नवसाराख्यं चूलिकालवणं च तत् ।। रस-३.१३५ ।।

## नवसार > अल्छेम्. गुण

रसेन्द्रजारणं लोहद्रावणं जठराग्निकृत् ।

## नवसार > आयुर्वेदीय गुण

गुल्मप्लीहास्यशोषघ्नं भुक्तमांसादिजारणम् ।
विडाख्यं च त्रिदोषघ्नं चूलिकालवणम् मतम् ।। रस-३.१३६ ।।

## वराटिका

पीताभा ग्रन्थिका पृष्ठे दीर्घवृत्ता वराटिका ।
रसवैद्यैर्विनिर्दिष्टा सा चराचरसंज्ञिका ।। रस-३.१३७ ।।

## वराटिक > wएइघ्त्

सार्धनिष्कभरा श्रेष्ठा निष्कभारा च मध्यमा ।
पादोननिष्कभारा च कनिष्ठा परिकीर्तिता ।। रस-३.१३८ ।।

## वराटिका > आयुर्वेदीय गुण

परिणामादिशूलघ्नी ग्रहणीक्षयनाशिनी ।
कटूष्णा दीपनी वृष्या नेत्र्या वातकफापहा ।

### वराटिका > अल्छेम्. गुण

रसेन्द्रजारणे प्रोक्ता विडद्रव्येषु शस्यते ।। रस-३.१३९ ।।

### वराटिका > आयुर्वेदीय गुण ओf बद् स्पेचिमेन्स्

तदन्ये तु वराटाः स्युर् गुरवः श्लेष्मपित्तलाः ।। रस-३.१४० ।।

### वराटिका > शोधन

वराटाः काञ्जिके स्विन्ना यामाच्छुद्धिमवाप्नुयुः ।। रस-३.१४१ ।।

### अग्निजार

समुद्रेणाग्निनक्रस्य जरायुर् बहिरुज्झितः ।
संशुष्को भानुतापेन सोऽग्निजार इति स्मृतः ।। रस-३.१४२ ।।

### अग्निजार > आयुर्वेदीय गुण

अग्निजारस्त्रिदोषघ्नो धनुर्वातादिवातनुत् ।
वर्धनो रसवीर्यस्य दीपनो जारणस्तथा ।। रस-३.१४३ ।।

### अग्निजार > शोधन

तद् अब्धिक्षारसंशुद्धं तस्माच्छुद्धिर्न हीष्यते ।। रस-३.१४४ ।।

### गिरिसिन्दूर

महागिरिषु चाल्पीयःपाषाणान्तःस्थितो रसः ।
शुष्कशोणः स निर्दिष्टो गिरिसिन्दूरसंज्ञया ।। रस-३.१४५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- गिरिसिन्दूरस्य स्वरूपलक्षणम् आह महेति ।। रसबोध-३.१४५;१
- हिमालयादिबृहत्पर्वतान्तर्वर्तिक्षुद्रपाषाणद्वयमध्यनिसृतः रक्तवर्णरसविशेषः शुष्कीभूतः गिरिसिन्दूर इति ख्यातः ।। रसबोध-३.१४५;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथ गिरिसिन्दूरम् आह महागिरिष्विति ।। रसटी-३.१४५;१
- अल्पीयोऽत्यल्पः ।। रसटी-३.१४५;२
- अयं लोके प्रायो नोपलभ्यते ।। रसटी-३.१४५;३
- केचितु कामियां सिन्दूर इति नाम्ना प्रसिद्धोऽयं पदार्थोऽतिरक्तवर्ण इति वदन्ति ।। रसटी-३.१४५;४

- लोकेऽतिप्रसिद्धस्तु नागसंभव एव ।। रसटी-३.१४५;५
- स एव चात्र ग्राह्य इति रावणमतम् ।। रसटी-३.१४५;६
- सिन्दूरो नागसंभव इति तद्वचनादिति ।। रसटी-३.१४५;७

## गिरिसिन्दूर > आयुर्वेदीय गुण

त्रिदोषशमनम् भेदि रसबन्धनमग्रिमम् ।
देहलोहकरं नेत्र्यं गिरिसिन्दूरमीरितम् ।। रस-३.१४६ ।।

## हिङ्गुल

हिङ्गुलः शुकतुण्डाख्यो हंसपाकस्तथापरः ।। रस-३.१४७ ।।

## हिङ्गुल > शुकतुण्ड

प्रथमोऽल्पगुणस्तत्र चर्मारः स निगद्यते ।। रस-३.१४८ ।।

## हिङ्गुल > हंसपाक

श्वेतरेखः प्रवालाभो हंसपाकः स ईरितः ।। रस-३.१४९ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथोद्देशक्रमप्राप्तं हिङ्गुलं वर्णयति हिङ्गुल इति ।। रसटी-३.१४९;१
- अयं रसः पारदखनिजमृद्विशेषः ।। रसटी-३.१४९;२
- अत एव प्रथमाध्याय उक्तम् ।
- तां मृदं पातनायन्त्रे पातयन्ति रसं ततः ।
- इति ।। रसटी-३.१४९;३
- कृत्रिमोऽपि लोके दृश्यते पारदगन्धकनवसागरपाकजन्यः ।। रसटी-३.१४९;४
- खनिजोऽयं द्विविधः ।। रसटी-३.१४९;५
- तस्य चोत्तमस्य लक्षणमाह श्वेतरेष इति ।। रसटी-३.१४९;६
- स च हंसपाक इति नाम्ना कथितः पाकेन व्यवस्थितः ।। रसटी-३.१४९;७
- श्वेतरक्तवर्णविशिष्टत्वात् ।। रसटी-३.१४९;८
- अयं उत्तमः ।। रसटी-३.१४९;९
- प्रथमस्तु हीनश्वेतरेषोऽल्पगुणः ।। रसटी-३.१४९;१०
- स तु चर्मार इति निगद्यते ।। रसटी-३.१४९;११

## हिङ्गुल > आयुर्वेदीय गुण

हिङ्गुलः सर्वदोषघ्नो दीपनोऽतिरसायनः ।
सर्वरोगहरो वृष्यो जारणायातिशस्यते ।। रस-३.१५० ।।

## हिङ्गुलाकृष्ट

एतस्मादाहृतः सूतो जीर्णगन्धसमो गुणैः ।। रस-३.१५१ ।।

## हिङ्गुलाकृष्ट > शोधन

सप्तकृत्वार्द्रकद्रावैर्लकुचस्याम्बुनापि वा ।
शोषितो भावयित्वा च निर्दोषो जायते खलु ।। रस-३.१५२ ।।

## हिङ्गुल > गोल्द्-प्रोदुच्तिओन्

किमत्र चित्रं दरदः सुभावितः क्षीरेण मेष्या बहुशोऽम्लवर्गैः ।
एवं सुवर्णं बहुघर्मतापितं करोति साक्षाद्वरकुङ्कुमप्रभम् ।। रस-३.१५३ ।।

## हिङ्गुल > सत्त्वपातन

दरदः पातनायन्त्रे पातितश्च जलाश्रये ।
तत्सत्त्वं सूतसंकाशं पातयेन्नात्र संशयः ।। रस-३.१५४ ।।

## मृद्दारशृङ्गक

सदलं पीतवर्णं च भवेद्गुर्जरमण्डले ।
अर्बुदस्य गिरेः पार्श्वे जातं मृद्दारशृङ्गकम् ।। रस-३.१५५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- मृद्दारशृङ्गस्य लक्षणम् उत्पत्तिस्थानं चाह सदलमिति ।। रसबोध-३.१५५;१
- वंशपत्त्रहरितालवत् पटलविशिष्टम् ।। रसबोध-३.१५५;२
- मृद्दारशृङ्गस्य पर्यायादिकं निघण्ट्वादौ अन्यत्र वा कुत्रापि ग्रन्थे न परिदृश्यते परं तु अस्मद्देशे यन्मुद्राशङ्ख इति नाम्ना प्रसिद्धं पश्चिमदेशे तत् मुर्दार्शिङ् इति नाम्ना तत्रत्यैरभिधीयते अतो मन्ये मृद्दारशृङ्गकं मुद्राशङ्ख एव इति ।। रसबोध-३.१५५;३

$

- टीका रससरत्नसमुच्चयटीका:
- गुर्जरमण्डले गुर्जरदेशे ।। रसटी-३.१५५;१
- अर्बुदगिरेः पार्श्वे नागखनिस्थानभूते च जातम् उत्पन्नं यद् विशिष्टं क्षुद्रपाषाणात्मकं द्रव्यं सदलपीतवर्णात्मकं तन्मृद्दारशृङ्गनाम्ना प्रथितं भवेत् ।। रसटी-३.१५५;२
- तद्गुणानाह सीससत्त्वमिति ।। रसटी-३.१५५;३

- सीससत्त्वस्योपादानं कारणम् ।। रसटी-३.१५५;४

## मृद्दारशृङ्ग > आयुर्वेदीय गुण

सीससत्त्वं गुरु श्लेष्मशमनं पुंगदापहम् ।
रसबन्धनमुत्कृष्टं केशरञ्जनमुत्तमम् ।। रस-३.१५६ ।।

## साधारणरस > शोधन

साधारणरसाः सर्वे मातुलुङ्गार्द्रकाम्बुना ।
त्रिरात्रं भाविताः शुष्का भवेयुर्दोषवर्जिताः ।। रस-३.१५७ ।।

यानि कानि च सत्त्वानि तानि शुध्यन्त्यशेषतः ।
ध्मातानि शुद्धिवर्गेण मिलन्ति च परस्परम् ।। रस-३.१५८ ।।

इति करवालभैरवः ।

## राजावर्त

राजावर्तोऽल्परक्तोरुनीलिकामिश्रितप्रभः ।
गुरुत्वमसृणः श्रेष्ठस्तदन्यो मध्यमः स्मृतः ।। रस-३.१५९ ।।

## राजावर्त > आयुर्वेदीय गुण

प्रमेहक्षयदुर्नामपाण्डुश्लेष्मानिलापहः ।
दीपनः पाचनो वृष्यो राजावर्तो रसायनः ।। रस-३.१६० ।।

## राजावर्त > शोधन

निम्बुद्रवैः सगोमूत्रैः सक्षारैः स्वेदिताः खलु ।
द्वित्रिवारेण शुध्यन्ति राजावर्तादिधातवः ।। रस-३.१६१ ।।

## राजावर्त > शोधन

शिरीषपुष्पार्द्ररसै राजावर्तं विशोधयेत् ।। रस-३.१६२ ।।

## राजावर्त > मारण

लुङ्गाम्बुगन्धकोपेतो राजावर्तो विचूर्णितः ।
पुटनात्सप्तवारेण राजावर्तो मृतो भवेत् ।। रस-३.१६३ ।।

### राजावर्त > सत्त्वपातन

राजावर्तस्य चूर्णं तु कुनटीघृतमिश्रितम् ।
विपचेदायसे पात्रे महिषीक्षीरसंयुतम् ।। रस-३.१६४ ।।

सौभाग्यपञ्चगव्येन पिण्डीबद्धं तु जारयेत् ।
ध्मापितं खदिराङ्गारैः सत्त्वं मुञ्चति शोभनम् ।। रस-३.१६५ ।।

### गैरिक > शोधन

अनेन क्रमयोगेन गैरिकं विमलं भवेत् ।

### गैरिक > सत्त्वपातन

क्रमात् पीतं च रक्तं च सत्त्वं पतति शोभनम् ।। रस-३.१६६ ।।

# रसरत्नसमुच्चय : अध्याय 04

https://sa.wikisource.org/s/80n

**मणयः**

मणयोऽपि च विज्ञेयाः सूतबन्धस्य कारकाः ।। रस-४.१ ।।

वैक्रान्तः सूर्यकान्तश्च हीरकं मौक्तिकं मणिः ।। रस-४.२ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- राजावर्तो राउटी इति ब्रिजभाषायाम् ।। रसटी-४.२;१

चन्द्रकान्तस्तथा चैव राजावर्तश्च सप्तमः ।

---

- टीका रससरत्नसमुच्चयटीका:
- गरुडोद्गारकं तार्क्ष्यं मरकत इत्यपरपर्यायद्वयम् ।। रसटी-४.३कख;१
- पन्ना इति लोके प्रसिद्धम् ।। रसटी-४.३कख;२

गरुडोद्गारकश्चैव ज्ञातव्या मणयस्त्वमी ।। रस-४.३ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- पुष्परागं पुखराज् इति लोके प्रसिद्धम् ।। रसटी-४.४कख;१

$

- टीका रससरत्नसमुच्चयटीका:
- महानीलमिन्द्रनीलम् ।। रसटी-४.४कख;१

$

- टीका रससरत्नसमुच्चयटीका:
- पद्मरागं माणिक्यम् ।। रसटी-४.४कख;१

पुष्परागं महानीलं पद्मरागं प्रवालकम् ।

---

- टीका रससरत्नसमुच्चयटीका:
- वैडूर्यं तद् यदाकाशे सजलमेघशब्दाद् अङ्कुरविशिष्टं भवति ।। रसटी-४.४कख;१
- अत एवास्याभ्रलोहम् इति पर्यायान्तरम् ।। रसटी-४.४कख;२
- एतत् पिरोजा इति लोके प्रसिद्धम् ।। रसटी-४.४कख;३

वैडूर्यं च तथा नीलमेते च मणयो मताः ।
यत्नतः संग्रहीतव्या रसबन्धस्य कारणात् ।। रस-४.४ ।।

### पञ्चरत्न (?)

पद्मरागेन्द्रनीलाख्यौ तथा मरकतोत्तमः ।
पुष्परागः सवज्राख्यः पञ्च रत्नवराः स्मृताः ।। रस-४.५ ।।

### जेwएल्स् > नवग्रह

माणिक्यमुक्ताफलविद्रुमाणि तार्क्ष्यं च पुष्पं भिदुरं च नीलम् ।
गोमेदकं चाथ विदूरकं च क्रमेण रत्नानि नवग्रहाणाम् ।। रस-४.६ ।।

ग्रहानुमैत्र्या कुरुविन्दपुष्पप्रवालमुक्ताफलतार्क्ष्यवज्रम् ।
नीलाख्यगोमेदविदूरकं च क्रमेण मुद्राधृतमिष्टसिद्ध्यै ।। रस-४.७ ।।

रसे रसायने दाने धारणे देवतार्चने ।
सुरक्ष्याणि सुजातीनि रत्नान्युक्तानि सिद्धये ।। रस-४.८ ।।

### माणिक्य

माणिक्यं पद्मरागाख्यं द्वितीयं नीलगन्धि च ।। रस-४.९ ।।

### माणिक्य > परीक्षा

कुशेशयदलच्छायं स्वच्छं स्निग्धं महत्स्फुटम् ।
वृत्तायतं समं गात्रं माणिक्यं श्रेष्ठमुच्यते ।। रस-४.१० ।।

### माणिक्य > नीलगन्धि

नीलं गङ्गाम्बुसम्भूतं नीलगर्भारुणच्छवि ।
पूर्वमाणिक्यवच्छ्रेष्ठमाणिक्यं नीलगन्धि तत् ।। रस-४.११ ।।

### माणिक्य > परीक्षा

रन्ध्रकार्कश्यमालिन्यरौक्ष्यावैशद्यसंयुतम् ।
चिपिटं लघु वक्रं च माणिक्यं दुष्टमष्टधा ।। रस-४.१२ ।।

### माणिक्य > आयुर्वेदीय गुण

माणिक्यं दीपनं वृष्यं कफवातक्षयार्तिनुत् ।
भूतवेतालपापघ्नं कर्मजव्याधिनाशनम् ।। रस-४.१३ ।।

### मौक्तिक > परीक्षा

ह्लादि श्वेतं लघु स्निग्धं रश्मिवन्निर्मलं महत् ।
ख्यातं तोयप्रभं वृत्तं मौक्तिकं नवधा शुभम् ।। रस-४.१४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- तोयप्रभं जलाभं यत्र तिष्ठति तत्र दूरतो जलभ्रमोत्पादकम् इत्यर्थः यद्वा जलवत् तरलच्छायं लावण्यविशिष्टम् इति यावत् ।। रसबोध-४.१४;१

### मौक्तिक > आयुर्वेदीय गुण

मुक्ताफलं लघु हिमं मधुरं च कान्तिदृष्ट्यग्निपुष्टिकरणं विषहारि भेदि ।
वीर्यप्रदं जलनिधेर्जनिता च शुक्तिर्दीप्ता च पक्तिरुजमाशु हरेदवश्यम् ।। रस-४.१५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- निर्जलं निर्जडं डलयोर् ऐक्यात् अशिशिरमित्यर्थः उष्णमिति यावद् यद्वा विच्छायं दृश्यते च लावण्ये जलशब्दोपचारः मुक्ताफलस्य तरलच्छाया एव लावण्यशब्दबोधिका यदुक्तं ।
- मुक्ताफलेषु छायायास्तरलत्वम् इवान्तरा ।
- प्रतिभाति यदङ्गेषु तल्लावण्यम् इहोच्यते ।। रसबोध-४.१५;१
- इति ।। रसबोध-४.१५;२
- अत्र जलशब्देन मुक्ताफलगततरलच्छाया बोध्या ।। रसबोध-४.१५;३

### मौक्तिक > परीक्षा > बद् ॠउअलित्य्

रूक्षाङ्गं निर्जलं श्यावं ताम्राभं लवणोपमम् ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- विकटं विषमगात्रम् ।। रसबोध-४.१६कख;१

अर्धशुभ्रं च विकटं ग्रन्थिलं मौक्तिकं त्यजेत् ।। रस-४.१६ ।।

### मौक्तिक > आयुर्वेदीय गुण

कफपित्तक्षयध्वंसि कासश्वासाग्निमान्द्यनुत् ।
पुष्टिदं वृष्यमायुष्यं दाहघ्नं मौक्तिकं मतम् ।। रस-४.१७ ।।

### प्रवाल > परीक्षा > गोओद् ऋउअलित्य्

पक्वबिम्बफलच्छायं वृत्तायतमवक्रकम् ।
स्निग्धमव्रणकं स्थूलं प्रवालं सप्तधा शुभम् ।। रस-४.१८ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- पाण्डुरं श्वेतपीतमिश्रवर्णम् ।। रसबोध-४.१८;१

$

- टीका रससरत्नसमुच्चयबोधिनी:
- धूसरं श्वेतकृष्णमिश्रवर्णम् ।। रसबोध-४.१८;१

### प्रवाल > परीक्षा > बद् ऋउअलित्य्

पाण्डुरं धूसरं सूक्ष्मं सव्रणं कण्डरान्वितम् ।

---

- टीका रससरत्नसमुच्चयटीका:
- कण्डरान्वितं सिरावृतम् ।। रसटी-४.१९कख;१

निर्भारं शुल्बवर्णं च प्रवालं नेष्यतेऽष्टधा ।। रस-४.१९ ।।

### प्रवाल > आयुर्वेदीय गुण

क्षयपित्तास्रकासघ्नं दीपनं पाचनं लघु ।
विषभूतादिशमनं विद्रुमं नेत्ररोगनुत् ।। रस-४.२० ।।

### तार्क्ष्य > परीक्षा > गोओद् ऋउअलित्य्

हरिद्वर्णं गुरु स्निग्धं स्फुरद्रश्मिचयं शुभम् ।
मसृणं भासुरं तार्क्ष्यं गात्रं सप्तगुणं मतम् ।। रस-४.२१ ।।

### तार्क्ष्य > परीक्षा > बद् ऋउअलित्य्

कपिलं कर्कशं नीलं पाण्डु कृष्णं च लाघवम् ।
चिपिटं विकटं कृष्णं रूक्षं तार्क्ष्यं न शस्यते ।। रस-४.२२ ।।

### ताक्ष्र्य > आयुर्वेदीय गुण

ज्वरच्छर्दिविषश्वाससंनिपाताग्निमान्द्यनुत् ।
दुर्नामपाण्डुशोफघ्नं ताक्ष्र्यमोजोविवर्धनम् ।। रस-४.२३ ।।

### पुष्पराग > परीक्षा

पुष्परागं गुरु स्वच्छं स्निग्धं स्थूलं समं मृदु ।
कर्णिकारप्रसूनाभं मसृणं शुभमष्टधा ।। रस-४.२४ ।।

### पुष्पराग > परीक्षा > बद् ॠउअलित्य्

निष्प्रभं कर्कशं रूक्षं पीतं श्यामं नतोन्नतम् ।
कपिशं कपिलं पाण्डु पुष्परागं परित्यजेत् ।। रस-४.२५ ।।

### पुष्पराग > आयुर्वेदीय गुण

पुष्परागं विषच्छर्दिकफवाताग्निमान्द्यनुत् ।
दाहकुष्ठास्रशमनं दीपनं पाचनं लघु ।। रस-४.२६ ।।

### वज्र > सुब्त्य्पेस्

वज्रं च त्रिविधं प्रोक्तं नरो नारी नपुंसकम् ।
पूर्वं पूर्वमिह श्रेष्ठं रसवीर्यविपाकतः ।। रस-४.२७ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- अष्टफलकम् अष्टधारम् अस्त्रादीनाम् अग्रभागवत् सूक्ष्माग्रम् इत्यर्थः ।। रसबोध-४.२७;१

### पुंवज्र

अष्टास्रं वाष्टफलकं षट्कोणमतिभासुरम् ।
अम्बुदेन्द्रधनुर्वारितरं पुंवज्रमुच्यते ।। रस-४.२८ ।।

### स्त्रीवज्र

तदेव चिपिटाकारं स्त्रीवज्रं वर्तुलायतम् ।

### नपुंसक

वर्तुलं कुण्ठकोणाग्रं किंचिद्गुरु नपुंसकम् ।। रस-४.२९ ।।

स्त्रीपुंनपुंसकं वज्रं योज्यं स्त्रीपुंनपुंसके ।
व्यत्यासान्नैव फलदं पुंवज्रेण विना क्वचित् ।। रस-४.३० ।।

### वज्र > सुब्त्य्पेस् > चोलोर्

श्वेतादिवर्णभेदेन तदेकैकं चतुर्विधम् ।
ब्रह्मक्षत्रियविट्शूद्रं स्वस्ववर्णफलप्रदम् ।। रस-४.३१ ।।

उत्तमोत्तमवर्णं हि नीचवर्णफलप्रदम् ।
न्यायोऽयं भैरवेणोक्तः पदार्थेष्वखिलेष्वपि ।। रस-४.३२ ।।

### वज्र > आयुर्वेदीय गुण

आयुःप्रदं झटिति सद्गुणदं च वृष्यं दोषत्रयप्रशमनम् सकलामयघ्नम् ।
सूतेन्द्रबन्धवधसद्गुणकृत्प्रदीपनं मृत्युंजयं तदमृतोपममेव वज्रम् ।। रस-४.३३ ।।

### जेwएल्स् > ५ दोषस्

गौरत्रासश्च बिन्दुश्च रेखा च जलगर्भता ।
सर्वरत्नेष्वमी पञ्च दोषाः साधारणा मताः ।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ साधारणान् सर्वरत्नदोषान् आह ग्रासस्त्रासश्चेति ।। रसटी-४.३४अ-द्;१
- ग्रासो ग्रसितैकदेशत्वम् ।। रसटी-४.३४अ-द्;२
- त्रासः सबाह्याभ्यन्तरमलविशिष्टत्वम् ।। रसटी-४.३४अ-द्;३
- बिन्दुः प्रसिद्धः ।। रसटी-४.३४अ-द्;४
- स चानेकविधः ।। रसटी-४.३४अ-द्;५
- रेखा प्रसिद्धा ।। रसटी-४.३४अ-द्;६
- जलगर्भता ।। रसटी-४.३४अ-द्;७
- यत्रान्तः कोटर इवान्तः शुषिरविशिष्टजलाभासो भवति तादृशत्वम् ।। रसटी-४.३४अ-द्;८

क्षेत्रतोयभवा दोषा रत्नेषु न लगन्ति ते ।। रस-४.३४ ।।

### वज्र > शोधन

कुलत्थक्वाथके स्विन्नं कोद्रवक्वथितेन वा ।
एकयामावधि स्विन्नं वज्रं शुध्यति निश्चितम् ।। रस-४.३५ ।।

**वज्र > मारण**

वज्रं मत्कुणरक्तेन चतुर्वारं विभावितम् ।
सुगन्धिमूषिकामांसैर्वर्तितैर्मर्द्य वेष्टयेत् ।। रस-४.३६ ।।

पुटेत्पुटैर्वराहाख्यैस्त्रिंशद्वारं ततः परम् ।
ध्मात्वा ध्मात्वा शतं वारान्कुलत्थक्वाथके क्षिपेत् ।
अन्यैरुक्तः शतं वारान्कर्तव्योऽयं विधिक्रमः ।। रस-४.३७ ।।

**वज्र > मारण**

कुलत्थक्वाथसंयुक्तलकुचद्रवपिष्टया ।
शिलया लिप्तमूषायां वज्रं क्षिप्त्वा निरुध्य च ।। रस-४.३८ ।।

अष्टवारं पुटेत्सम्यग्विशुष्कैश्च वनोत्पलैः ।
शतवारं ततो ध्मात्वा निक्षिप्तं शुद्धपारदे ।
निश्चितं म्रियते वज्रं भस्म वारितरं भवेत् ।। रस-४.३९ ।।

सत्यवाक् सोमसेनानीर् एतद्वज्रस्य मारणम् ।
दृष्टप्रत्ययसंयुक्तमुक्तवान्रसकौतुकी ।। रस-४.४० ।।

**वज्र > मारण**

विलिप्तं मत्कुणस्यास्रे सप्तवारं विशोषितम् ।
कासमर्दरसापूर्णे लोहपात्रे निवेशितम् ।। रस-४.४१ ।।

सप्तवारं परिध्मातं वज्रभस्म भवेत्खलु ।
ब्रह्मज्योतिर्मुनीन्द्रेण क्रमोऽयं परिकीर्तितः ।। रस-४.४२ ।।

**वज्र > मारण**

नीलज्योतिर्लताकन्दे घृष्टं घर्मे विशोषितम् ।
वज्रं भस्मत्वमायाति कर्मवज्ज्ञानवह्निना ।। रस-४.४३ ।।

**वज्र > मारण**

मदनस्य फलोद्भूतरसेन क्षोणिनागकैः ।
कृतकल्केन संलिप्य पुटेद्विंशतिवारकम् ।
वज्रचूर्णं भवेद्वर्यं योजयेच्च रसादिषु ।। रस-४.४४ ।।

**वज्र > मारण**

तद्वज्रं चूर्णयित्वाथ किंचिट् टङ्कणसंयुतम् ।
खरभूनागसत्त्वेन विंशेनावर्तते ध्रुवम् ।
तुल्यस्वर्णेन तद्ध्मातं योजनीयं रसादिषु ।। रस-४.४५ ।।

त्रिगुणेन रसेनैव संमर्द्य गुटिकीकृतम् ।
मुखे धृतं करोत्याशु चलद्दन्तविबन्धनम् ।। रस-४.४६ ।।

त्रिंशद्भागमितं हि वज्रभसितं स्वर्णं कलाभागिकं तारं चाष्टगुणं सितामृतवरं रुद्रांशकं चाभ्रकम् ।
पादांशं खलु ताप्यकं वसुगुणं वैक्रान्तकं षड्गुणं भागोऽप्युक्तरसै रसोऽयमुदितः षाड्गुण्यसंसिद्धये ।। रस-४.४७ ।।

### नील

जलनीलेन्द्रनीलं च शक्रनीलं तयोर्वरम् ।। रस-४.४८ ।।

### जलनील > फ्य्स्. गुण

श्वैत्यगर्भितनीलाभं लघु तज्जलनीलकम् ।

### इन्द्रनील > फ्य्स्. गुण

काष्ण्र्यगर्भितनीलाभं सभारं शक्रनीलकम् ।। रस-४.४९ ।।

### नील > परीक्षा > गोओद्

एकच्छायं गुरु स्निग्धं स्वच्छं पिण्डितविग्रहम् ।
मृदु मध्ये लसज्ज्योतिः सप्तधा नीलमुत्तमम् ।। रस-४.५० ।।

### जलनील > परीक्षा

कोमलं विहितं रूक्षं निर्भारं रक्तगन्धि च ।
चिपिटाभं ससूक्ष्मं च जलनीलं च सप्तधा ।। रस-४.५१ ।।

### नील > आयुर्वेदीय गुण

श्वासकासहरं वृष्यं त्रिदोषघ्नं सुदीपनम् ।
विषमज्वरदुर्नामपापघ्नं नीलमीरितम् ।। रस-४.५२ ।।

### गोमेद

गोमेदःसमरागत्वाद्गोमेदं रत्नमुच्यते ।। रस-४.५३ ।।

### गोमेद > परीक्षा

सुस्वच्छगोजलच्छायं स्वच्छं स्निग्धं समं गुरु ।

- टीका रससरत्नसमुच्चयबोधिनी:
- निर्दलं निष्पत्त्रम् अशुभगोमेदस्य सपटलत्वाद् अत्र शुभगोमेदस्य निर्दलत्वावतारणम् ।। रसबोध-४.५४कख;१

निर्दलं मसृणं दीप्तं गोमेदं शुभमष्टधा ।। रस-४.५४ ।।

## गोमेद > परीक्षा > बद् ऋउअलित्य्

विच्छायं लघु रूक्षाङ्गं चिपिटं पटलान्वितम् ।
निष्प्रभं पीतकाचाभं गोमेदं न शुभावहम् ।। रस-४.५५ ।।

## गोमेद > आयुर्वेदीय गुण

गोमेदं कफपित्तघ्नं क्षयपाण्डुक्षयंकरम् ।
दीपनं पाचनं रुच्यं त्वच्यं बुद्धिप्रबोधनम् ।। रस-४.५६ ।।

## वैडूर्य > परीक्षा > गोओद् ऋउअलित्य्

वैदूर्यं श्यामशुभ्राभं समं स्वच्छं गुरु स्फुटम् ।
भ्रमच्छुभ्रोत्तरीयेण गर्भितं शुभमीरितम् ।। रस-४.५७ ।।

## वैडूर्य > परीक्षा > बद् ऋउअलित्य्

श्यामं तोयसमच्छायं चिपिटं लघु कर्कशम् ।
रक्तगर्भोत्तरीयं च वैदूर्यं नैव शस्यते ।। रस-४.५८ ।।

## वैडूर्य > आयुर्वेदीय गुण

वैदूर्यं रक्तपित्तघ्नं प्रज्ञायुर्बलवर्धनम् ।
पित्तप्रधानरोगघ्नं दीपनं मलमोचनम् ।। रस-४.५९ ।।

## रत्न > शोधन

शुध्यत्यम्लेन माणिक्यं जयन्त्या मौक्तिकं तथा ।
विद्रुमं क्षारवर्गेण ताक्ष्र्यं गोदुग्धकैस्तथा ।। रस-४.६० ।।

पुष्परागं च संधानैः कुलत्थक्वाथसंपुटैः ।
तण्डुलीयजलैर् वज्रं नीलं नीलीरसेन च ।
रोचनाभिश्च गोमेदं वैदूर्यं त्रिफलाजलैः ।। रस-४.६१ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:

- लकुचः डहुकः ।। रसबोध-४.६१;१

### रत्न > मारण

लकुचद्रावसम्पिष्टैः शिलागन्धकतालकैः ।
वज्रं विनान्यरत्नानि म्रियन्तेऽष्टपुटैः खलु ।। रस-४.६२ ।।

### रत्न > द्रावण

रामठं पञ्चलवणं क्षाराणां त्रितयं तथा ।
मांसद्रवोऽम्लवेतश्च चूलिकालवणं तथा ।। रस-४.६३ ।।

स्थूलं कुम्भीफलं पक्वं तथा ज्वालामुखी शुभा ।
द्रवन्ती च रुदन्ती च पयस्या चित्रमूलकम् ।। रस-४.६४ ।।

दुग्धं स्नुह्यास्तथार्कस्य सर्वं संमर्द्य यत्नतः ।
गोलं विधाय तन्मध्ये प्रक्षिपेत्तदनन्तरम् ।। रस-४.६५ ।।

गुणवन्नवरत्नानि जातिमन्ति शुभानि च ।
भूर्जे तं गोलकं कृत्वा सूत्रेणावेष्ट्य यत्नतः ।। रस-४.६६ ।।

पुनर्वस्त्रेण संवेष्ट्य दोलायन्त्रे निधाय च ।
सर्वाम्लयुक्तसंधानपरिपूर्णघटोदरे ।। रस-४.६७ ।।

अहोरात्रत्रयं यावत् स्वेदयेत् तीव्रवह्निना ।
तस्मादाहृत्य संक्षाल्य रत्नजां द्रुतिमाहरेत् ।
रत्नतुल्यप्रभा लघ्वी देहलोहकरी शुभा ।। रस-४.६८ ।।

### पेअर्ल् > द्रावण

मुक्ताचूर्णं तु सप्ताहं वेतसाम्लेन मर्दितम् ।
जम्बीरोदरमध्ये तु धान्यराशौ विनिक्षिपेत् ।
सप्ताहादुद्धृतं चैव पुटे धृत्वा द्रुतिर्भवेत् ।। रस-४.६९ ।।

### वज्र > द्रावण

वज्रवल्ल्यन्तरस्थं च कृत्वा वज्रं निरोधयेत् ।
अम्लभाण्डगतं स्वेद्यं सप्ताहाद् द्रवताम् व्रजेत् ।। रस-४.७० ।।

### वैक्रान्त > द्रावण

श्वेतवर्णं तु वैक्रान्तमम्लवेतसभावितम् ।
सप्ताहान्नात्र संदेहः खरघर्मे द्रवत्यसौ ।। रस-४.७१ ।।

### वैक्रान्त > द्रावण

केतकीस्वरसं ग्राह्यं सैन्धवं स्वर्णपुष्पिका ।
इन्द्रगोपकसंयुक्तं सर्वं भाण्डे विनिक्षिपेत् ।
सप्ताहं स्वेदयेत्तस्मिन्वैक्रान्तं द्रवतां व्रजेत् ।। रस-४.७२ ।।

### रत्न > द्रावण

लोहाष्टके तथा वज्रवापनात् स्वेदनाद् द्रुतिः ।
जायते नात्र संदेहो योगस्यास्य प्रभावतः ।। रस-४.७३ ।।

कुरुते योगराजोऽयं रत्नानां द्रावणं परम् ।। रस-४.७४ ।।

### द्रुतीनां दीर्घकालरक्षणोपायः

कुसुम्भतैलमध्ये तु संस्थाप्या द्रुतयः पृथक् ।
तिष्ठन्ति चिरकालं तु प्राप्ते कार्ये नियोजयेत् ।। रस-४.७५ ।।

### रत्न > good properties

सूर्यादिग्रहनिग्रहापहरणं दीर्घायुरारोग्यदं ।
सौभाग्योदयभाग्यवश्यविभवोत्साहप्रदं धैर्यकृत् ।। रस-४.७६ ।।

दुश्छायाचलधूलिसंगतिभवालक्ष्मीहरं सर्वदा ।
रत्नानां परिधारणं निगदितं भूतादिनिर्नाशनम् ।। रस-४.७७ ।।

# रसरत्नसमुच्चय : अध्याय 05

https://sa.wikisource.org/s/800
शुद्धं लोहं कनकरजतं भानुलोहाश्मसारं पूतीलोहं द्वितयमुदितं नागवंगाभिधानम् ।
मिश्रं लोहं त्रितयमुदितं पित्तलं कांस्यवर्तं धातुर् लोहे लुह इति मतः सोऽप्यनेकार्थवाची ।। रस-५.१ ।।

### स्वर्ण > सुब्त्य्पेस्

प्राकृतं सहजं वह्निसम्भूतं खनिसंभवम् ।
रसेंद्रवेधसंजातं स्वर्णं पञ्चविधं स्मृतम् ।। रस-५.२ ।।

### स्वर्ण > आयुर्वेदीय गुण

आयुर्लक्ष्मीप्रभाधीस्मृतिकरमखिलव्याधिविध्वंसि पुण्यं भूतावेशप्रशान्तिस्मरभरसुखदं सौख्यपुष्टिप्रकाशि ।
गाङ्गेयं चाथ रूप्यं गदहरमजराकारि मेहापहारि क्षीणानां पुष्टिकारि स्फुटमतिकरणं वीर्यवृद्धिप्रकारि ।। रस-५.३ ।।

### स्वर्ण > प्राकृत

ब्रह्माण्डं संवृतं येन रजोगुणभुवा खलु ।
तत्प्राकृतमिति प्रोक्तं देवानामपि दुर्लभम् ।। रस-५.४ ।।

### स्वर्ण > सहज

ब्रह्मा येनावृतो जातः सुवर्णेन जरायुणा ।
तन्मेरुरूपतां यातं सुवर्णं सहजं हि तत् ।। रस-५.५ ।।

### स्वर्ण > वह्निसंभव

विसृष्टमग्निना शैवं तेजः पीतं सुदुःसहम् ।
अभूत्सर्वं समुद्दिष्टं सुवर्णं वह्निसंभवम् ।। रस-५.६ ।।

एतत्स्वर्णत्रयं दिव्यं वर्णैः षोडशभिर्युतम् ।
धारणादेव तत्कुर्याच्छरीरमजरामरम् ।। रस-५.७ ।।

### स्वर्ण > खनिज

तत्र तत्र गिरीणां हि जातं खनिषु यद्भवेत् ।
तच्चतुर्दशवर्णाढ्यं भक्षितं सर्वरोगहृत् ।। रस-५.८ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- तत्त्रिविधं षोडशवर्णयुक्तम् ।। रसटी-५.८;१

- ते च वर्णा ग्रन्थान्तरे विशिष्टद्रव्यसाम्यम् उदाहृत्य पृथक्प्रदर्शिताः ।। रसटी-५.८;२
- श्वेतः श्वेतजपापुष्पे बलक्षः कदलीसुमे ।
- स्यादर्जुनस्तु कुमुदे विद्वद्भिः परिकीर्तितः ।। रसटी-५.८;३
- पाण्डुवर्णो भवेद्रेणौ केतकीपुष्पजे तथा ।
- हरिणः पीतशबलशुक्लद्रव्ये सुनिर्दिशेत् ।। रसटी-५.८;४
- धूसरो बकुले पुष्पे कृष्णः स्याद् अतसीसुमे ।
- हरिच्छिरीषजे पत्त्रे रक्तो रक्तोत्पले स्मृतः ।। रसटी-५.८;५
- कृष्णमिश्रे लोहिते स्याद् अरुणः श्वेतरक्तके ।
- पाटलोऽथो मर्कटे तु कपिशः कृष्णलोहिते ।। रसटी-५.८;६
- भवेद् धूम्रो रोचनाभः पिङ्गोऽथो स्यात्पिशङ्गकः ।
- पद्मधूलौ कर्बुरश्च स्मृतश्चेन्द्रधनुःसमः ।। रसटी-५.८;७
- इति ।। रसटी-५.८;८

## स्वर्ण > वेधज

रसेंद्रवेधसम्भूतं तद्वेधजमुदाहृतम् ।
रसायनं महाश्रेष्ठं पवित्रं वेधजं हि तत् ।। रस-५.९ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- प्रसिद्धस्वर्णं खनिसंभवम् आह तत्र तत्रेति ।। रसटी-५.९;१
- गिरीणाम् ।। रसटी-५.९;२
- एते च गिरयो हिमालयविन्ध्यसह्यकर्णाटकस्थनीलगिरिप्रभृतयः स्वर्णखनिस्थानत्वेन प्रसिद्धाः सन्ति ।। रसटी-५.९;३
- काष्ठां प्राप्तौ पीतरक्तवर्णौ परिपूर्णौ विहाय चतुर्दशवर्णपूर्णं खनिजं भवति ।। रसटी-५.९;४
- रत्नपरीक्षकैस्तेषामेव वर्णानाम् उत्कर्षविभाजका यावच्छतं विकल्पिताः कक्षा लोके प्रसिद्धाः ।। रसटी-५.९;५

## स्वर्ण > आयुर्वेदीय गुण

स्निग्धं मेध्यं विषगदहरं बृंहणं वृष्यमग्र्यं यक्ष्मोन्मादप्रशमनपरं देहरोगप्रमाथि ।
मेधाबुद्धिस्मृतिसुखकरं सर्वदोषामयघ्नं रुच्यं दीपि प्रशमितरुजं स्वादुपाकं सुवर्णम् ।। रस-५.१० ।।

## स्वर्ण > अशुद्ध > आयुर्वेदीय गुण

सौख्यं वीर्यं बलं हन्ति रोगवर्गं करोति च ।
अशुद्धममृतं स्वर्णं तस्माच्छुद्धं च मारयेत् ।। रस-५.११ ।।

## स्वर्ण > चोलोउरिन्ग् (सुवर्णसम्पादन)

कर्षप्रमाणं तु सुवर्णपत्रं शरावरुद्धं पटुधातुयुक्तम् ।
अङ्गारसंस्थं प्रहरार्धमानं ध्मानेन तत्स्यान्ननु पूर्णवर्णम् ।। रस-५.१२ ।।

लोहानां मारणं श्रेष्ठं सर्वेषां रसभस्मना ।
मूलीभिर्मध्यमं प्राहुः कनिष्ठं गन्धकादिभिः ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- अरिलोहेन लोहारिणा हरितालेनेति यावत् ।। रसबोध-५.१३अ-द;१

अरिलोहेन लोहस्य मारणं दुर्गुणप्रदम् ।। रस-५.१३ ।।

### स्वर्ण > मारण

कृत्वा कण्टकवेध्यानि स्वर्णपत्राणि लेपयेत् ।
लुंगांबुभस्मसूतेन म्रियते दशभिः पुटैः ।। रस-५.१४ ।।

### स्वर्ण > मारण

द्रुते विनिक्षिपेत्स्वर्णे लोहमानं मृतं रसम् ।
विचूर्ण्य लुङ्गतोयेन दरदेन समन्वितम् ।
जायते कुंकुमच्छायं स्वर्णं द्वादशभिः पुटैः ।। रस-५.१५ ।।

### स्वर्ण > मारण

हेम्नः पादं मृतं सूतं पिष्टमम्लेन केनचित् ।
पत्रे लिप्त्वा पुटैः पच्यादष्टभिर्म्रियते ध्रुवम् ।। रस-५.१६ ।।

### स्वर्ण > द्रावण

मंडूकास्थिवसाटंकहयलालेन्द्रगोपकैः ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- प्रतिवापः गलितस्य धातोः द्रव्यान्तरेण अवचूर्णनम् ।। रसबोध-५.१७कख;१

प्रतिवापेन कनकं सुचिरं तिष्ठति द्रुतम् ।। रस-५.१७ ।।

### स्वर्ण > द्रावण

चूर्णं सुरेन्द्रगोपानां देवदालीफलद्रवैः ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- देवदाली हस्तिघोषकः ।। रसबोध-५.१८कख;१

भावितं सद्दशं हेम करोति जलवद्द्रुतम् ।। रस-५.१८ ।।

## स्वर्ण > भस्मन् > आयुर्वेदीय अप्प्लिचतिओन्

एतद्भस्म सुवर्णजं कटुघृतोपेतं द्विगुंजोन्मितं लीढं हन्ति नृणां क्षयाग्निसदनं श्वासं च कासारुचिम् ।
ओजोधातुविवर्धनं बलकरं पाण्ड्वामयध्वंसनं पथ्यं सर्वविषापहं गरहरं दुष्टग्रहण्यादिनुत् ।। रस-५.१९ ।।

## स्वर्ण > अमारित > आयुर्वेदीय गुण

बलं च वीर्यं हरते नराणां रोगव्रजं कोपयतीव काये ।
असौख्यकारं च सदैव हेमापक्वं सदोषं मरणं करोति ।। रस-५.२० ।।

## सिल्वेर् > सुब्त्य्पेस्

सहजं खनिसंजातं कृत्रिमं त्रिविधं मतम् ।
रजतं पूर्वपूर्वं हि स्वगुणैरुत्तरोत्तरम् ।। रस-५.२१ ।।

## सिल्वेर् > सहज

कैलासाद्यद्रिसम्भूतं सहजं रजतं भवेत् ।
तत्स्पृष्टं हि सकृद्व्याधिनाशनं देहिनां भवेत् ।। रस-५.२२ ।।

## सिल्वेर् > खनिज

हिमालयादिकूटेषु यद्रूपं जायते हि तत् ।
खनिजं कथ्यते तज्ज्ञैः परमं हि रसायनम् ।। रस-५.२३ ।।

## सिल्वेर् > पादरूप्य

श्रीरामपादुकान्यस्तं वंगं यद्रूप्यतां गतम् ।
तत्पादरूप्यमित्युक्तं कृत्रिमं सर्वरोगनुत् ।। रस-५.२४ ।।

## सिल्वेर् > परीक्षा > गोओद् ॠउअलित्य्

घनं स्वच्छं गुरु स्निग्धं दाहे छेदे सितं मृदु ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- स्फोटरहितं व्रणवत् गण्डरहितम् ।। रसबोध-५.२५कख;१

शंखाभं मसृणं स्फोटरहितं रजतं शुभम् ।। रस-५.२५ ।।

## सिल्वेर् > परीक्षा > बद् ॠउअलित्य्

दाहे रक्तं च पीतं च कृष्णं रूक्षं स्फुटं लघु ।
स्थूलाङ्गं कर्कशाङ्गं च रजतं त्याज्यमष्टधा ।। रस-५.२६ ।।

## सिल्वेर् > आयुर्वेदीय गुण

रूप्यं विपाकमधुरं तुवराम्लसारं शीतं सरं परमलेखनकं च रूप्यम् ।
स्निग्धं च वातकफजिज्जठराग्निदीपि बल्यं परं स्थिरवयस्करणं च मेध्यम् ।। रस-५.२७ ।।

## सिल्वेर् > आयुर्वेदीय गुण (२)

रौप्यं शीतं कषायाम्लं स्निग्धं वातहरं गुरु ।
रसायनविधानेन सर्वरोगापहारकम् ।। रस-५.२८ ।।

## सिल्वेर् > शोधन

तैले तक्रे गवां मूत्रे ह्यारनाले कुलत्थजे ।
क्रमान्निषेचयेत्तप्तं द्रावे द्रावे तु सप्तधा ।
स्वर्णादिलोहपत्राणां शुद्धिरेषा प्रशस्यते ।। रस-५.२९ ।।

## सिल्वेर् > अशुद्ध > आयुर्वेदीय गुण

आयुः शुक्रं बलं हन्ति तापविड्बन्धरोगकृत् ।
अशुद्धं न मृतं तारं शुद्धं मार्यमतो बुधैः ।। रस-५.३० ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वापितं कल्कीकृतं पिष्टमित्यर्थः ।। रसबोध-५.३०;१

## सिल्वेर् > शोधन

नागेन टंकणेनैव वापितं शुद्धिमृच्छति ।
तारं त्रिवारं निक्षिप्तं तैले ज्योतिष्मतीभवे ।। रस-५.३१ ।।

## सिल्वेर् > शोधन

खर्परे भस्मचूर्णाभ्यां परितः पालिकां चरेत् ।
तत्र रूप्यं विनिक्षिप्य समसीससमन्वितम् ।। रस-५.३२ ।।

जातसीसक्षयं यावद्धमेत्तावत्पुनः पुनः ।
इत्थं संशोधितं रूप्यं योजनीयं रसादिषु ।। रस-५.३३ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- मतान्तरमाह खर्परे इति ।। रसबोध-५.३३;१
- भस्मचूर्णाभ्यां सीसकभस्मटङ्कणचूर्णाभ्यां पालिकाम् आलवालम् ।। रसबोध-५.३३;२
- अत्रायं विधिः नागभस्मटङ्कणचूर्णे जलेन पिष्ट्वा तत्पिण्डेन मृत्खर्परं परितः आलवालं रचयित्वा तन्मध्ये समसीसचूर्णपिष्टरौप्यं निक्षिप्य तावत् भस्त्रया धमेत् यावत् सीसक्षयो न भवेदिति ।। रसबोध-५.३३;३

## सिल्वेर् > मारण

लकुचद्रवसूताभ्यां तारपत्रं प्रलेपयेत् ।
ऊर्ध्वाधो गन्धकं दत्त्वा मूषामध्ये निरुध्य च ।। रस-५.३४ ।।

स्वेदयेद्वालुकायन्त्रे दिनमेकं दृढाग्निना ।
स्वांगशीतां च तां पिष्टिं साम्लतालेन मर्दिताम् ।
पुटेद्द्वादशवाराणि भस्मीभवति रूप्यकम् ।। रस-५.३५ ।।

## सिल्वेर् > मारण

माक्षीकचूर्णलुंगाम्लमर्दितं पुटितं शनैः ।
त्रिंशद्वारेण तत्तारं भस्मसाज्जायतेतराम् ।। रस-५.३६ ।।

## सिल्वेर् > निरुत्थीकरण

भाव्यं ताप्यं स्नुहीक्षीरैस्तारपत्राणि लेपयेत् ।
मारयेत्पुटयोगेन निरुत्थं जायते ध्रुवम् ।। रस-५.३७ ।।

## सिल्वेर् > मारण > निरुत्थ

तारपत्रं चतुर्भागं भागैकं शुद्धतालकम् ।
मर्द्यं जम्बीरजद्रावैस्तारपत्राणि लेपयेत् ।। रस-५.३८ ।।

शोधयेद् अन्धयन्त्रे च त्रिंशदुत्पलकैः पचेत् ।
चतुर्दशपुटैरेवं निरुत्थं जायते ध्रुवम् ।। रस-५.३९ ।।

## सिल्वेर्, स्वर्ण > द्रावण

सप्तधा नरमूत्रेण भावयेद्देवदालिकाम् ।
तच्चूर्णावापमात्रेण द्रुतिः स्यात्स्वर्णतारयोः ।। रस-५.४० ।।

## सिल्वेर् > आयुर्वेदीय अप्प्लिचतिओन्

भस्मीभूतं रजतममलं तत्समौ व्योमभानू सर्वैस्तुल्यं त्रिकटु सवरं सारघाज्येन युक्तम् ।
लीढं प्रातः क्षपयतितरां यक्ष्मपाण्डूदरार्शः श्वासं कासं नयनजरुजः पित्तरोगानशेषान् ।। रस-५.४१ ।।

## चोप्पेर् > सुब्त्य्पेस्

म्लेच्छं नेपालकं चेति तयोर्नेपालकं वरम् ।
नेपालादन्यखन्युत्थं म्लेच्छमित्यभिधीयते ।। रस-५.४२ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- ताम्रस्य खनिद्वयं वर्तते ।। रसटी-५.४२;१
- तत्रैकखनिस्थं नेपालम् इति ख्यातम् ।। रसटी-५.४२;२
- नेपाली कुनटी ।। रसटी-५.४२;३
- तत्समरक्तवर्णत्वात् ।। रसटी-५.४२;४
- खनेर् नेपालदेशसंनिहितत्वाद् वा नेपालेति संज्ञा ।। रसटी-५.४२;५
- अथवा रूढसंज्ञेयम् ।। रसटी-५.४२;६
- ततोऽन्यखनिस्थं तु म्लेच्छम् इत्यभिधीयते ।। रसटी-५.४२;७
- यथा म्लेच्छधातुर् अस्पष्टशब्दे तथा स्पष्टशब्दरक्तवर्णत्वान्म्लेच्छम् इति संज्ञा ।। रसटी-५.४२;८

## चोप्पेर् > म्लेच्छ > गुण

सितकृष्णारुणच्छायम् अतिवामि कठोरकम् ।
क्षालितं च पुनः कृष्णम् एतन्म्लेच्छकताम्रकम् ।। रस-५.४३ ।।

## चोप्पेर् > नेपाल > परीक्षा

सुस्निग्धं मृदुलं शोणं घनाघातक्षमं गुरु ।
निर्विकारं गुणश्रेष्ठं ताम्रं नेपालमुच्यते ।। रस-५.४४ ।।

## चोप्पेर् > परीक्षा > बद् ॠउअलित्य्

पाण्डुरं कृष्णशोणं च लघुस्फुटनसंयुतम् ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- सदलं सपत्त्रं पटलसंयुतम् इति यावत् दलं जोर् इति लोके इति भावमिश्रः ।। रसबोध-५.४५कख;१

रूक्षाङ्गं सदलं ताम्रं नेष्यते रसकर्मणि ।। रस-५.४५ ।।

## चोप्पेर् > आयुर्वेदीय गुण

ताम्रं तिक्तकषायकं च मधुरं पाकेऽथ वीर्योष्णकं साम्लं पित्तकफापहं जठररुक्कुष्ठामजन्त्वन्तकृत् ।
ऊर्ध्वाधः परिशोधनं विषयकृत् स्थौल्यापहं क्षुत्करं दुर्नामक्षयपाण्डुरोगशमनं नेत्र्यं परं लेखनम् ।। रस-५.४६ ।।

## चोप्पेर् > अशुद्ध > आयुर्वेदीय गुण

अशुद्धं ताम्रमायुर्घ्नं कान्तिवीर्यबलापहम् ।
वान्तिमूर्च्छाभ्रमोत्क्लेदं कुष्ठं शूलं करोति तत् ।। रस-५.४७ ।।

उत्क्लेदभेदभ्रमदाहमोहास्ताम्रस्य दोषाः खलु दुर्धरास्ते ।
विशोधनात्तद्विगतस्वदोषं सुधासमं स्याद् रसवीर्यपाके ।। रस-५.४८ ।।

## चोप्पेर् > शोधन

ताम्रं क्षाराम्लसंयुक्तं द्रावितं दत्तगैरिकम् ।
निक्षिप्तं महिषीतक्रे छगणे सप्तवारकम् ।
पञ्चदोषविनिर्मुक्तं भस्मयोग्यं हि जायते ।। रस-५.४९ ।।

## चोप्पेर् > शोधन

ताम्रनिर्मलपत्राणि लिप्त्वा निम्ब्वम्बुसिन्धुना ।
ध्मात्वा सौवीरकक्षेपाद्विशुध्यत्यष्टवारतः ।। रस-५.५० ।।

## चोप्पेर् > शोधन

निम्ब्वम्बुपटुलिप्तानि तापितान्यष्टवारकम् ।
विशुध्यन्त्यर्कपत्राणि निर्गुंड्यारसमज्जनात् ।। रस-५.५१ ।।

## चोप्पेर् > शोधन

गोमूत्रेण पचेद्यामं ताम्रपत्रं दृढाग्निना ।
शुध्यते नात्र संदेहो मारणं चाप्यथोच्यते ।। रस-५.५२ ।।

## चोप्पेर् > मारण

जम्बीररससम्पिष्टरसगन्धकलेपितम् ।
शुल्बपत्रं शरावस्थं त्रिपुटैर्याति पञ्चताम् ।। रस-५.५३ ।।

### चोप्पेर् > मारण

अथवा मारितं ताम्रमम्लेनैकेन मर्दितम् ।
तद्गोलं सूरणस्यान्ता रुद्ध्वा सर्वत्र लेपयेत् ।। रस-५.५४ ।।

शुष्कं गजपुटे पच्यात्सर्वदोषहरं भवेत् ।
वान्तिं भ्रान्तिं विरेकं च न करोति कदाचन ।। रस-५.५५ ।।

### चोप्पेर् > मारण

ताम्रपत्राणि सूक्ष्माणि गोमूत्रे पञ्चयामकम् ।
क्षिप्त्वा रसेन भाण्डे तद्द्विगुणं देहि गन्धकम् ।। रस-५.५६ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- अम्लपर्णी चाङ्गेरी ।। रसबोध-५.५६;१

अम्लपर्णीं प्रपिष्याथ ह्यभितो देहि ताम्रकम् ।
सम्यङ् निरुध्य भाण्डे तमग्निं ज्वालय यामकम् ।
भस्मीभवति ताम्रं तद्यथेष्टं विनियोजयेत् ।। रस-५.५७ ।।

### चोप्पेर् > आयुर्वेदीय अप्प्लिचतिओन्

सूताद् द्विगुणितं ताम्रपत्रं कन्यारसैः प्लुतम् ।
पिष्ट्वा तुल्येन बलिना भाण्डमध्ये विनिक्षिपेत् ।। रस-५.५८ ।।

छन्नं शरावकेणैतत्तदूर्ध्वं लवणं त्यजेत् ।
मुखे शरावकं दत्त्वा वह्निं यामचतुष्टयम् ।। रस-५.५९ ।।

अवचूर्ण्यैव तच्छुल्बं वल्लमात्रं प्रयोजयेत् ।
पिप्पलीमधुना सार्धं सर्वरोगेषु योजयेत् ।। रस-५.६० ।।

श्वासं कासं क्षयं पाण्डुमग्निमांद्यमरोचकम् ।
गुल्मप्लीहयकृन्मूर्च्छाशूलपक्त्यर्थम् उत्तमम् ।। रस-५.६१ ।।

दोषत्रयसमुद्भूतानामयाञ्जयति ध्रुवम् ।
रोगानुपानसहितं जयेद्धातुगतं ज्वरम् ।
रसे रसायने ताम्रं योजयेद्युक्तमात्रया ।। रस-५.६२ ।।

### सोमनाथ

शुल्बतुल्येन सूतेन बलिना तत्समेन च ।
तदर्धांशेन तालेन शिलया च तदर्धया ।। रस-५.६३ ।।

विधाय कज्जलीं श्लक्ष्णां भिन्नकज्जलसन्निभाम् ।
यन्त्राध्यायविनिर्दिष्टगर्भयन्त्रोदरान्तरे ।। रस-५.६४ ।।

कज्जलीं ताम्रपत्राणि पर्यायेण विनिक्षिपेत् ।
प्रपचेद्यामपर्यन्तं स्वांगशीतं विचूर्णयेत् ।। रस-५.६५ ।।

तत्तद्रोगहरानुपानसहितताम्रं द्विवल्लोन्मितं संलीढं परिणामशूलमुदरं शूलं च पाण्डुज्वरम् ।
गुल्मप्लीहयकृत्क्षयाग्निसदनं मेहं च मूलामयं दुष्टां च ग्रहणीं हरेद् ध्रुवम् इदं श्रीसोमनाथाभिधम् ।। रस-५.६६ ।।

### इरोन् > सुब्त्य्पेस्

मुंडं तीक्ष्णं च कांतं च त्रिप्रकारमयः स्मृतम् ।। रस-५.६७ ।।

### मुण्ड > सुब्त्य्पेस्

मृदु कुण्ठं कडारं च त्रिविधं मुण्डमुच्यते ।। रस-५.६८ ।।

### मृदु > फ्य्स्. गुण

द्रुतद्रावमविस्फोटं चिक्कणं मृदु तच्छुभम् ।। रस-५.६९ ।।

### कुण्ठ > फ्य्स्. गुण

हतं यत्प्रसरेद् दुःखात्तत्कुण्ठं मध्यमं स्मृतम् ।। रस-५.७० ।।

### कडार > फ्य्स्. गुण

यद्धतं भज्यते भंगे कृष्णं स्यात्तत्कडारकम् ।। रस-५.७१ ।।

### मुण्ड > आयुर्वेदीय गुण

मुण्डं परं मृदुलकं कफवातशूलमूलाममेहगदकामलपाण्डुहारि ।
गुल्मामवातजठरार्तिहरं प्रदीपि शोफापहं रुधिरकृत्खलु कोष्ठशोधि ।। रस-५.७२ ।।

### इरोन् > अशुद्ध > आयुर्वेदीय गुण

अशुद्धलोहं न हितं निषेवणाद् आयुर्बलं कान्तिविनाशि निश्चितम् ।
हृदि प्रपीडां तनुते ह्यपाटवं रुजं करोत्येव विशोध्य मारयेत् ।। रस-५.७३ ।।

### तीक्ष्णलोह > सुब्त्य्पेस्

खरं सारं च हृन्नालं तारावट्टं च वाजिरम् ।
काललोहाभिधानं च षड्विधं तीक्ष्णमुच्यते ।। रस-५.७४ ।।

### खरलोह > फ्य्स्. गुण

परुषं पोगरोन्मुक्तं भंगे पारदवच्छवि ।
नमने भङ्गुरं यत्तत्खरलोहमुदाहृतम् ।। रस-५.७५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- पोगरं कुञ्चितालकवत् तरङ्गायितं तेन उन्मुक्तं तद्रहितम् इत्यर्थः ।। रसबोध-५.७५;१

$

- टीका रससरत्नसमुच्चयटीका:
- यत् परुषं कठोरं पोगरोन्मुक्तं पोगरम् अलकवत् कुटिलरेखास् ताभिर् मुक्तं तद्रहितम् इत्यर्थः ।। रसटी-५.७५;१

### सार

वेगभङ्गुरधारं यत्सारलोहं तदीरितम् ।
पोगराभासकं पाण्डुभूमिजं सारमुच्यते ।। रस-५.७६ ।।

### हृन्नाल

कृष्णपाण्डुवपुश्चञ्चुबीजतुल्योरुपोगरम् ।
छेदने चातिपरुषं हृन्नालमिति कथ्यते ।। रस-५.७७ ।।

### पोगर

अङ्गक्षया च वङ्गं च पोगरस्याभिधात्रयम् ।
चिकुरं भङ्गुरं लोहात् पोगरं तत्परं मतम् ।। रस-५.७८ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- खरलक्षणे पोगरोन्मुक्तम् इत्युक्तम् अतः पोगरस्य पर्यायादिकम् आह अङ्गक्षयेति ।। रसबोध-५.७८;१
- त्रित्वं चात्र पोगरम् अपेक्ष्य बोध्यं तेन अङ्गक्षया वङ्गं पोगरं च इत्येकार्थम् ।। रसबोध-५.७८;२
- पोगरस्य स्वरूपलक्षणमाह चिकुरम् इति ।। रसबोध-५.७८;३
- लोहात् लौहगात्रे इत्यर्थः ।। रसबोध-५.७८;४
- अत्र सप्तम्यर्थे पञ्चमीति बोद्धव्यम् यत् चिकुरं भङ्गुरं कुञ्चितकुन्तलवद्भङ्गीविशेषः इत्यर्थः ।। रसबोध-५.७८;५

$

- टीका रससरत्नसमुच्चयटीका:

- पोगरशब्दोऽत्रागतः ।। रसटी-५.७८;१
- स चाप्रतिसिद्धार्थः ।। रसटी-५.७८;२
- अतो बोधार्थं तत्पर्यायान् आह अङ्गछाया च वङ्गं चिकुरं च इति पोगरस्याभिधात्रयं नामत्रयम् अस्ति ।। रसटी-५.७८;३
- एवं च नामान्येतानि विशिष्टाकारतेजस इत्यर्थः ।। रसटी-५.७८;४
- वङ्गस्येव रेखानां श्वेतच्छायात्वाद् वङ्गमिति संज्ञा ।। रसटी-५.७८;५
- कान्तीनां चिकुराकारत्वात् केशाकारत्वाच्चिकुरम् इत्यपि नाम ।। रसटी-५.७८;६
- यद् उक्तम् एव खरलोहं तद्यदि लोहाद्भङ्गुरं लोहमयघनघातेन भङ्गुरं भवति परंतु पोगरं पोगरविशिष्टं दृश्येत तर्हि तत् खरलोहम् अपि परमुत्तमं मतम् ।। रसटी-५.७८;७

## वाजिर

पोगरैर्वज्रसंकाशैः सूक्ष्मरेखैश्च सान्द्रकैः ।
निचितं श्यामलाङ्गं च वाजीरं तत्प्रकीर्त्यते ।। रस-५.७९ ।।

## कालायस

नीलकृष्णप्रभं सान्द्रं मसृणं गुरु भासुरम् ।
लोहाघातेऽप्यभङ्गात्मधारं कालायसं मतम् ।। रस-५.८० ।।

## तीक्ष्णलोह > खर > आयुर्वेदीय गुण

रूक्षं स्यात् खरलोहकं समधुरं पाकेऽथ वीर्ये हिमं तिक्तोष्णं कफपित्तकुष्ठजठरप्लीहामपांड्वर्तिनुत् ।
सद्यः शूलयकृद्गदक्षयजरामेहामवातापहं दीप्तं चातिरसायनं बलकरं दुर्नामदाहापहम् ।। रस-५.८१ ।।

खरलोहात्परं सर्वमेकैकस्माच्छतोत्तरम् ।। रस-५.८२ ।।

## कान्त > सुब्त्य्पेस्

भ्रामकं चुम्बकं चैव कर्षकं द्रावकं तथा ।
एवं चतुर्विधं कान्तं रोमकान्तं च पञ्चमम् ।। रस-५.८३ ।।

## कान्त > सुब्त्य्पेस् > मुख

एकद्वित्रिचतुष्पञ्चसर्वतोमुखम् एव तत् ।

---

- टीका रससरत्नसमुच्चयटीका:
- तस्य चोक्तो व्यस्तः समस्तो वा भेदोऽयं जारणायां सकलधातुभक्षणार्थं पारदस्य मुखरूपो भवतीत्याह एकद्वित्रीति ।। रसटी-५.८४कख;१
- केवलभ्रामकसत्त्वस्य प्रथमं यथाविधिजारणेनापि पारदस्य मुखं भवति ।। रसटी-५.८४कख;२
- ततः पारदः सर्वाल्लोहादीन् ग्रसति ।। रसटी-५.८४कख;३
- अत एकभेदोऽपि कश्चित्पारदमुखं भवति ।। रसटी-५.८४कख;४

- यस्य तद् एकमुखम् ।। रसटी-५.८४कख;५
- भ्रामकचुम्बकयोः सत्वद्वयस्यैकीकृतस्य यथाविधिजारणेन पारदमुखं कृतं चेत् संयुक्तभेदद्वयविशिष्टं तत् कान्तं द्विमुखम् उच्यते ।। रसटी-५.८४कख;६
- एवम् एवार्थस्त्रिमुखादौ बोध्यः ।। रसटी-५.८४कख;७
- विजातीयद्रव्यग्रासान्तरसहितम् अप्येतत् प्रथमं जारितं चेन्मुखं भवतीत्यतः सर्वतोमुखम् इत्युक्तम् ।। रसटी-५.८४कख;८
- सजातीयविजातीयव्यस्तसमस्तं भेदविशिष्टम् एतन्मुखं भवतीत्यर्थः ।। रसटी-५.८४कख;९

### कान्त > सुब्त्य्पेस् > चोलोउर्

पीतं कृष्णं तथा रक्तं त्रिवर्णं स्यात्पृथक् पृथक् ।
क्रमेण देवतास्तत्र ब्रह्मविष्णुमहेश्वराः ।। रस-५.८४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- स्पर्शवेधि स्पर्शमात्रेणैव वेधकारकं रसेन्द्रस्य वेधाख्यसंस्कारसंपादकं वा इत्यर्थः ।। रसबोध-५.८४;१

स्पर्शवेधि भवेत्पीतं कृष्णं श्रेष्ठं रसायने ।
रक्तवर्णं तथा चापि रसबन्धे प्रशस्यते ।। रस-५.८५ ।।

भ्रामकं तु कनिष्ठं स्याच्चुम्बकं मध्यमं तथा ।
उत्तमं कर्षकं चैव द्रावकं चोत्तमोत्तमम् ।। रस-५.८६ ।।

### भ्रामक

भ्रामयेल्लोहजातं यत्तत्कान्तं भ्रामकं मतम् ।। रस-५.८७ ।।

चुम्बयेच्चुम्बकं कान्तं कर्षयेत्कर्षकं तथा ।। रस-५.८८ ।।

### द्रावक

साक्षाद् यद्द्रावयेल्लोहं तत्कान्तं द्रावकं भवेत् ।। रस-५.८९ ।।

### रोमकान्त

तद्रोमकान्तं स्फुटिताद् यतो रोमोद्गमो भवेत् ।। रस-५.९० ।।

### कान्त > सुब्त्य्पेस् > मुख

कनिष्ठं स्यादेकमुखं मध्यं द्वित्रिमुखं भवेत् ।
चतुष्पञ्चमुखं श्रेष्ठमुत्तमं सर्वतोमुखम् ।। रस-५.९१ ।।

### कान्त > सुब्त्य्पेस् > आयुर्वेदीय गुण

भ्रामकं चुम्बकं चैव व्याधिनाशे प्रशस्यते ।
रसे रसायने चैव कर्षकं द्रावकं हितम् ।। रस-५.९२ ।।

मदोन्मत्तगजः सूतः कान्तम् अङ्कुशमुच्यते ।। रस-५.९३ ।।

### कान्त > चोल्लेच्तिन्ग्

क्षेत्रं ज्ञात्वा ग्रहीतव्यं तत्प्रयत्नेन धीमता ।
मारुतातपविक्षिप्तं वर्जयेन्नात्र संशयः ।। रस-५.९४ ।।

### कान्त > परीक्षा (?)

पात्रे यस्य प्रसरति जले तैलबिन्दुर्न लिप्तो गन्धं हिङ्गुस्त्यजति च तथा तिक्ततां निम्बकल्कः ।
पाके दुग्धं भवति शिखराकारकं नैति भूमौ कान्तं लौहं तदिदमुदितं लक्षणोक्तं च नान्यत् ।। रस-५.९५ ।।

### कान्त > आयुर्वेदीय गुण

कान्तायोऽतिरसायनोत्तरतरं स्वस्थे चिरायुःप्रदं स्निग्धं मेहहरं त्रिदोषशमनं शूलाममूलापहम् ।
गुल्मप्लीहयकृत्क्षयामयहरं पाण्डूदरव्याधिनुत् तिक्तोष्णं हिमवीर्यकं किमपरं योगेन सर्वार्तिनुत् ।। रस-५.९६ ।।

सम्यगौषधकल्पानां लोहकल्पः प्रशस्यते ।
तस्मात्सर्वप्रयत्नेन शुद्धं लोहं च मारयेत् ।। रस-५.९७ ।।

नायः पचेत्पञ्चपलाद् अर्वाग् ऊर्ध्वं त्रयोदशात् ।। रस-५.९८ ।।

आदौ मन्त्रस्ततः कर्म कर्तव्यं मन्त्र उच्यते ।। रस-५.९९ ।।

ओं अमृतोद्भवाय स्वाहा अनेन मन्त्रेण लोहमारणम् ।
लक्षोत्तरगुणं सर्वं लोहं स्यादुत्तरोत्तरम् ।
कान्तं कोटिगुणं तत्र तदप्येवं गुणोत्तरम् ।। रस-५.१०० ।।

### इरोन् > शोधन

शशक्षतजसंलिप्तं त्रिवारं परितापितम् ।
मुण्डादिसकलं लोहं सर्वदोषान् विमुञ्चति ।। रस-५.१०१ ।।

### इरोन् > शोधन > गिरिदोष

क्वाथ्यमष्टगुणे तोये त्रिफलाषोडशं पलम् ।
तत्क्वाथे पादशेषे तु लोहस्य पलपञ्चकम् ।। रस-५.१०२ ।।

कृत्वा पत्राणि तप्तानि सप्तवारं निषेचयेत् ।
एवं प्रलीयते दोषो गिरिजो लोहसम्भवः ।। रस-५.१०३ ।।

## इरोन् > शोधन > गिरिदोष

सामुद्रलवणोपेतं तप्तं निर्वापितं खलु ।
त्रिफलाक्वथिते नूनं गिरिदोषम् अयस्त्यजेत् ।। रस-५.१०४ ।।

## इरोन् > शोधन > गिरिदोष

चिञ्चाफलजलक्वाथादयो दोषम् उदस्यति ।। रस-५.१०५ ।।

## इरोन् > मारण > वारितर

यद्वा फलत्रयोपेतं गोमूत्रे क्वथितं क्षणम् ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- रेचितं स्रावितम् ।। रसबोध-५.१०५;१

रेचितं घृतसंयुक्तं क्षिप्त्वायः खर्परे पचेत् ।। रस-५.१०६ ।।

चालयेल्लोहदण्डेन यावत्क्षिप्तं तृणं दहेत् ।
पिष्ट्वा पिष्ट्वा पचेदेवं पञ्चवारमतः परम् ।। रस-५.१०७ ।।

धात्रीफलरसैर् यद्वा त्रिफलाक्वथितोदकैः ।
पुटेल्लोहं चतुर्वारं भवेद्वारितरं खलु ।। रस-५.१०८ ।।

## इरोन् > मारण

स्नेहाक्तं लोहरजो मूत्रे स्वरसेऽपि रात्रिधात्रीणाम् ।
पृथगेवं सप्तकृत्वो भर्जितमखिलामये योज्यम् ।। रस-५.१०९ ।।

## तीक्ष्णलोह > मारण

तीक्ष्णलोहस्य पत्राणि निर्दलानि दृढेऽनले ।
ध्मात्वा क्षिपेज्जले सद्यः पाषाणोलूखलोदरे ।। रस-५.११० ।।

कण्डयेद्गाढनिर्घातैः स्थूलया लोहपारया ।
तन्मध्यात्स्थूलखण्डानि रुद्ध्वा मल्लद्वयान्तरे ।। रस-५.१११ ।।

ध्मात्वा क्षिप्त्वा जले सम्यक् पूर्ववत्कण्डयेत्खलु ।
तच्चूर्णं सूतगन्धाभ्यां पुटेद्विंशतिवारकम् ।। रस-५.११२ ।।

पुटे पुटे विधातव्यं पेषणं दृढवत्तरम् ।
एवं भस्मीकृतं लोहं तत्तद्रोगेषु योजयेत् ।। रस-५.११३ ।।

## कान्त > आयुर्वेदीय गुण

कान्तायः कमनीयकान्तिजननं पाण्ड्वामयोन्मूलनम् ।
यक्ष्मव्याधिनिबर्हणं गरहरं दोषत्रयोन्मूलनम् ।
नानाकुष्ठनिबर्हणं बलकरं वृष्यं वयःस्तम्भनम् ।
सर्वव्याधिहरं रसायनवरं भौमामृतं नापरम् ।। रस-५.११४ ।।

## इरोन् (गेन्.) > मारण

हिङ्गुलस्य पलान्पञ्च नारीस्तन्येन पेषयेत् ।
तेन लोहस्य पत्राणि लेपयेत्पलपञ्चकम् ।। रस-५.११५ ।।

रुद्ध्वा गजपुटे पच्यात्कषायैस्त्रैफलैः पुनः ।
जम्बीरैरारनालैर्वा विंशत्यंशेन हिङ्गुलम् ।। रस-५.११६ ।।

पिष्ट्वा रुद्ध्वा पचेल्लोहं तद्द्रवैः पाचयेत्पुनः ।
चत्वारिंशत्पुटैरेवं कान्तं तीक्ष्णं च मुण्डकम् ।
म्रियते नात्र संदेहो दत्त्वा दत्त्वैव हिङ्गुलम् ।। रस-५.११७ ।।

## तीक्ष्णलोह > मारण

अथ पूर्वोदितं तीक्ष्णं वसुभल्लकवासयोः ।
पुटितं पत्रतोयेन त्रिंशद्वाराणि यत्नतः ।
शोणितं जायते भस्म कृतसिन्दूरविभ्रमम् ।। रस-५.११८ ।।

## तीक्ष्णलोह > मारण

यद्वा तीक्ष्णदलोद्भूतं रजश्च त्रिफलाजलैः ।
पिष्ट्वा दत्त्वौदनं किंचिच्चक्रिकां प्रविधाय च ।। रस-५.११९ ।।

शोषयित्वातियत्नेन प्रपचेत्पञ्चभिः पुटैः ।
रक्तवर्णं हि तद्भस्म योजनीयं यथायथम् ।। रस-५.१२० ।।

## इरोन् (गेन्.) > मारण > निरुत्थ

मत्स्याक्षीगन्धबाह्लीकैर्लकुचद्रवपेषितैः ।
विलिप्य सकलं लोहं मत्स्याक्षीकल्कलेपितम् ।। रस-५.१२१ ।।

भस्त्राभ्यां सुदृढं ध्मात्वा त्रिशूलीनिर्गमावधि ।

- टीका रससरत्नसमुच्चयबोधिनी:
- त्रिशूली त्रिशूलवच्चटिकात्रयम् इत्यर्थः ।। रसबोध-५.१२२कख;१

अथोद्धृत्य क्षिपेत्क्वाथे त्रिफलागोजलात्मके ।। रस-५.१२२ ।।

तस्मादाहृत्य संताड्य मृतमादाय लोहकम् ।
पुनश्च पूर्ववद् ध्मात्वा मारयेदखिलायसम् ।। रस-५.१२३ ।।

खण्डयित्वा ततो गन्धगुडत्रिफलया सह ।
पुटेत्त्रिंशतिवाराणि निरुत्थं भस्म जायते ।। रस-५.१२४ ।।

### इरोन् (गेन्.) > मारण

समगन्धम् अयश्चूर्णं कुमारीवारिभावितम् ।
पुटीकृतं कियत्कालमवश्यं म्रियते ह्ययः ।। रस-५.१२५ ।।

### इरोन् (गेन्.) > मारण

जम्बीररससंयुक्ते दरदे तप्तमायसम् ।
बहुवारं विनिक्षिप्तं म्रियते नात्र संशयः ।। रस-५.१२६ ।।

### इरोन् (गेन्.) > मारण

गोमूत्रैस्त्रिफला क्वाथ्या तत्कषायेण भावयेत् ।
त्रिःसप्ताहं प्रयत्नेन दिनैकं मर्दयेत्पुनः ।। रस-५.१२७ ।।

रुद्ध्वा गजपुटे पच्याद्दिनं क्वाथेन मर्दयेत् ।
दिवा मर्द्यं पुटेद्रात्रावेकविंशद्दिनावधि ।
एकविंशत्पुटैरेवं म्रियते त्रिविधं ह्ययः ।। रस-५.१२८ ।।

### कान्तलोह > शोधन

यत्पात्राध्युषिते तोये तैलबिन्दुर्न सर्पति ।
तारेणावर्तते यत्तत्कान्तलोहं तनूकृतम् ।। रस-५.१२९ ।।

अयसामुत्तमं सिञ्चेत्तप्तं तप्तं वरारसे ।
एवं शुद्धानि लोहानि पिष्टान्यम्लेन केनचित् ।। रस-५.१३० ।।

मृतसूतस्य पादेन प्रलिप्तानि पुटानले ।
पचेत्तुल्येन वा ताप्यगन्धाश्महरतेजसा ।। रस-५.१३१ ।।

तप्तं क्षाराम्लसंलिप्तं शशरक्ते निधापितम् ।
कान्तलोहं भवेद्भस्म सर्वदोषविवर्जितम् ।। रस-५.१३२ ।।

### इरोन् > मारण > वारितर

शुद्धं सूतं द्विधा गन्धं खल्लेन कृतकज्जलम् ।
द्वयोः समं लोहचूर्णं मर्दयेत्कन्यकाद्रवैः ।। रस-५.१३३ ।।

यामद्वयात्समुद्धृत्य यद्गोलं ताम्रपात्रके ।
आच्छाद्यैरंडपत्रैश्च यामार्धेऽत्युष्णतां व्रजेत् ।। रस-५.१३४ ।।

धान्यराशौ न्यसेत्पश्चात्त्रिदिनान्ते समुद्धरेत् ।
संपेष्य गालयेद्वस्त्रे सत्यं वारितरं भवेत् ।
कान्तं तीक्ष्णं च मुंडं च निरुत्थं जायते मृतम् ।। रस-५.१३५ ।।

### मेतल्स् > मारण

स्वर्णादीन्मारयेदेवं चूर्णं कृत्वा च लोहवत् ।
सिद्धयोगो ह्ययं ख्यातः सिद्धानां सुमुखागतः ।। रस-५.१३६ ।।

अनुभूतं मया सत्यं सर्वरोगजरापहम् ।
त्रिफलामधुसंयुक्तं सर्वरोगेषु योजयेत् ।। रस-५.१३७ ।।

एतस्माद् अपुनर्भवं हि भसितं लोहस्य दिव्यामृतं सम्यक् सिद्धरसायनं त्रिकटुकीवेल्लाज्यमध्वन्वितम् ।
हन्यान्निष्कमितं जरामरणजव्याधींश्च सत्पुत्रदं दिष्टे श्रीगिरिशेन कालयवनोद्भूत्यै पुरा तत्पितुः ।। रस-५.१३८ ।।

### इरोन् > मृत > आयुर्वेदीय गुण

लोहं जन्तुविकारपाण्डुपवनक्षीणत्वपित्तामयस्थौल्यार्शोग्रहणीज्वरार्तिकफजिच्छोफप्रमेहप्रणुत् ।
गुल्मप्लीहविषापहं बलकरं कुष्ठाग्निमान्द्यप्रणुत् सौख्यालम्बिरसायनं मृतिहरं किट्टं च कान्तादिवत् ।। रस-५.१३९ ।।

मृतानि लोहानि रसीभवन्ति निघ्नन्ति युक्तानि महामयांश्च ।
अभ्यासयोगाद् दृढदेहसिद्धिं कुर्वन्ति रुग्जन्मजराविनाशम् ।। रस-५.१४० ।।

### कान्त > ओप्तिमल् > फ्य्स्. गुण

पक्वजम्बूफलच्छायं कान्तलोहं तदुत्तमम् ।। रस-५.१४१ ।।

### तीक्ष्ण > द्रावण

त्रिःसप्तकृत्वो गोमूत्रे जालिनीभस्मभावितम् ।
शोषयेत्तस्य वापेन तीक्ष्णं मूषागतं द्रवेत् ।। रस-५.१४२ ।।

### तीक्ष्ण > द्रावण

सुरदालिभस्म गलितं त्रिःसप्तकृत्वोऽथ गोजले शुष्कम् ।
वापेन सलिलसदृशं करोति मूषागतं तीक्ष्णम् ।। रस-५.१४३ ।।

### कान्त > द्रावण

सुरदालिभवं भस्म नरमूत्रेण गालितम् ।
त्रिःसप्तवारं तत्क्षारवापात् कान्तद्रुतिर् भवेत् ।। रस-५.१४४ ।।

### इरोन् (गेन्.) > द्रावण

गंधकं कांतपाषाणं चूर्णयित्वा समं समम् ।
द्रुते लोहे प्रतीवापो देयो लोहाष्टकं द्रवेत् ।। रस-५.१४५ ।।

### इरोन् (गेन्.) > द्रावण

देवदाल्या द्रवैर्भाव्यं गंधकं दिनसप्तकम् ।
तेन प्रवापमात्रेण लौहं तिष्ठति सूतवत् ।। रस-५.१४६ ।।

### इरोन् > अशुद्ध > आयुर्वेदीय गुण

अशुद्धलोहं न हितं निषेवणाद् आयुर्बलं कान्तिविनाशि निश्चितम् ।
हृदि प्रपीडां तनुते ह्यपाटवं रुजं करोत्येव विशोध्य मारयेत् ।। रस-५.१४७ ।।

किट्टाद्दशगुणं मुण्डं मुण्डात्तीक्ष्णं शतोन्मितम् ।
तीक्ष्णाल्लक्षगुणं कान्तं भक्षणात्कुरुते गुणान् ।
तस्मात् कान्तं सदा सेव्यं जरामृत्युहरं नृणाम् ।। रस-५.१४८ ।।

आयुष्प्रदाता बलवीर्यकर्ता रोगप्रहर्ता मदनस्य कर्ता ।
अयःसमानं न हि किंचिद् अन्यद्रसायनं श्रेष्ठतमं हि जन्तोः ।। रस-५.१४९ ।।

### मण्डूर > प्रेपरतिओन्

अक्षाङ्गारैर्धमेत्किट्टं लोहजं तद्गवां जलैः ।
सेचयेदक्षपात्रान्तः सप्तवारं पुनः पुनः ।
मण्डूरोऽयं समाख्यातश्चूर्णं श्लक्ष्णं प्रयोजयेत् ।। रस-५.१५० ।।

### मण्डूर > प्रेपरतिओन्

गोमूत्रैस्त्रिफला क्वाथ्या तत्क्वाथे सेचयेच्छनैः ।
लोहकिट्टं सुसंतप्तं यावज्जीर्यति तत्स्वयम् ।
तच्चूर्णं जायते पेष्यं मण्डूरोऽयं प्रयोजयेत् ।। रस-५.१५१ ।।

### मुण्ड > मण्डूर > आयुर्वेदीय गुण

ये गुणा मारिते मुण्डे ते गुणा मुण्डकिट्टके ।
तस्मात्सर्वत्र मण्डूरं रोगशान्त्यै प्रयोजयेत् ।। रस-५.१५२ ।।

### तिन् > सुब्त्य्पेस्

खुरकं मिश्रकं चेति द्विविधं वंगमुच्यते ।
खुरं तत्र गुणैः श्रेष्ठं मिश्रकं न हितं मतम् ।। रस-५.१५३ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- न हितम् इति ।। रसटी-५.१५३;१
- तत्र नागमिश्रणेनाशुद्धत्वात् ।। रसटी-५.१५३;२

### खुर > मृत > परीक्षा

धवलं मृतं स्निग्धं द्रुतद्रावं सगौरवम् ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- निःशब्दं पत्त्रीभूतमपि शब्दरहितं पत्त्रीभूतं रङ्गान्तरं यथा सशब्दं भवति तथा न इत्यर्थः ।। रसबोध-५.१५४कख;१

### मिश्रक > फ्य्स्. गुण

निःशब्दं खुरवंगं स्यात् मिश्रकं श्यामशुभ्रकम् ।। रस-५.१५४ ।।

### तिन् > आयुर्वेदीय गुण

वङ्गं तिक्तोष्णकं रूक्षमीषद् वातप्रकोपनम् ।
मेहश्लेष्मामयघ्नं च मेदोघ्नं कृमिनाशनम् ।। रस-५.१५५ ।।

### खुर > शोधन

द्रावयित्वा निशायुक्ते क्षिप्तं निर्गुण्डिकारसे ।
विशुध्यति त्रिवारेण खुरवंगं न संशयः ।। रस-५.१५६ ।।

### मिश्रक > शोधन

अम्लतक्रविनिक्षिप्तं वर्षाभूविषतिन्दुभिः ।
कट्फलांबुगतं वंगं द्वितीयं परिशुध्यति ।। रस-५.१५७ ।।

### मेतल्स् > शोधन

शुध्यति नागो वंगो घोषो रविरातपेऽपि मुनिसंख्यैः ।
निर्गुण्डीरससेकैस्तन्मूलरजःप्रवापैश्च ।। रस-५.१५८ ।।

## तिन् > मारण

सतालेनार्कदुग्धेन लिस्वा वंगदलानि च ।
बोधिचिंचात्वचः क्षारैर्दद्याल्लघुपुटानि च ।
मर्दयित्वा चरेद्भस्म तद्रसादिषु शस्यते ।। रस-५.१५९ ।।

## तिन् > मारण

प्रद्राव्य खर्परे वंगं षोडशांशं रसं क्षिपेत् ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- भारद्वाजस्य वनकार्पास्याः ।। रसबोध-५.१६०कख;१

स्वल्पस्वल्पालकं दत्वा भारद्वाजस्य काष्ठतः ।
मर्दयित्वा चरेद्भस्म तद्रसादिषु शस्यते ।। रस-५.१६० ।।

## तिन् > मारण

पलाशद्रवयुक्तेन वंगपत्रं प्रलेपयेत् ।
तालेन पुटितं पश्चान्म्रियते नात्र संशयः ।। रस-५.१६१ ।।

## तिन् > मारण

भल्लाततैलसंलिप्तं वंगं वस्त्रेण वेष्टितम् ।
चिंचापिप्पलपालाशकाष्ठाग्नौ याति पञ्चताम् ।। रस-५.१६२ ।।

## तिन् > fओर्मुलतिओन्स्

वंगभस्मसमं कान्तं व्योमभस्म च तत्समम् ।
मर्दयेत्कनकाम्भोभिर्निम्बपत्ररसैरपि ।। रस-५.१६३ ।।

दाडिमस्य मयूरस्य रसेन च पृथक् पृथक् ।
भूपालावर्तभस्माथ विनिक्षिप्य समांशकम् ।। रस-५.१६४ ।।

गोमूलकशिलाधातुजलैः सम्यग्विमर्दयेत् ।
ततो गुग्गुलतोयेन मर्दयित्वा दिनाष्टकम् ।। रस-५.१६५ ।।

विशोष्य परिचूर्ण्याथ समभागेन योजयेत् ।
घृष्टं बन्धूकनिर्यासैर् नाकुलीबीजचूर्णकैः ।। रस-५.१६६ ।।

- टीका रससरत्नसमुच्चयबोधिनी:
- नाकुलीबीजं रास्नाबीजं शाल्मलीबीजं वा ।। रसबोध-५.१६६;१

ततः क्षिपेत्करण्डान्तर्विधाय पटगालितम् ।
गोतक्रपिष्टरजनीसारेण सह पाययेत् ।। रस-५.१६७ ।।

चतुर्भिर् वल्लकैस्तुल्यं रम्यं वंगरसायनम् ।
निश्चितं तेन नश्यन्ति मेहा विंशतिभेदकाः ।। रस-५.१६८ ।।

शालयो मुद्गसूपं च नवनीतं तिलोद्भवम् ।
पटोलं तिक्ततुण्डीरं तक्रं पथ्याय शस्यते ।। रस-५.१६९ ।।

## लेअद् > शुद्ध > परीक्षा

द्रुतद्रावं महाभारं छेदे कृष्णं समुज्ज्वलम् ।
पूतिगन्धं बहिः कृष्णं शुद्धं सीसमतोऽन्यथा ।। रस-५.१७० ।।

## लेअद् > आयुर्वेदीय गुण

अत्युष्णं सीसकं स्निग्धं तिक्तं वातकफापहम् ।
प्रमेहतोयदोषघ्नं दीपनं चामवातनुत् ।। रस-५.१७१ ।।

## लेअद् > शोधन

सिन्दुवारजटाकौन्तीहरिद्राचूर्णकं क्षिपेत् ।
द्रुते नागेऽथ निर्गुण्ड्यास् त्रिवारं निक्षिपेद्रसे ।
नागः शुद्धो भवेदेवं मूर्छास्फोटादि नाचरेत् ।। रस-५.१७२ ।।

## लेअद् > मारण

तिर्यगाकारचुल्ल्यां तु तिर्यग्वक्त्रं घटं न्यसेत् ।
तं च वक्त्रं विना सर्वं गोपयेद्यत्नतो मृदा ।। रस-५.१७३ ।।

भृष्टयन्त्राभिधे तस्मिन् पात्रे सीसं विनिक्षिपेत् ।
पलविंशतिकं शुद्धमधस्तीव्रानलं क्षिपेत् ।। रस-५.१७४ ।।

द्रुते नागे क्षिपेत्सूतं शुद्धं कर्षमितं शुभम् ।
घर्षयित्वा क्षिपेत्क्षारमेकैकं हि पलं पलम् ।। रस-५.१७५ ।।

अर्जुनस्याक्षवृक्षस्य महाराजगिरेरपि ।

---

- टीका रससरत्नसमुच्चयबोधिनी:

- महाराजगिरिः शाकविशेषः राजशाकम् इतियावत् स तु लघुस्थूलभेदेन द्विविधः अत्र च स्थूलो ग्राह्यः ।। रसबोध-५.१७६कख;१

दाडिमस्य मयूरस्य क्षिप्त्वा क्षारं पृथक् पृथक् ।। रस-५.१७६ ।।

एवं विंशतिरात्राणि पचेत्तीव्रेण वह्निना ।
विघट्टयन्दृढं दोर्भ्यां लोहदर्व्या प्रयत्नतः ।। रस-५.१७७ ।।

रक्तं तज्जायते भस्म कपोतच्छायमेव वा ।
नागं दोषविनिर्मुक्तं जायतेऽतिरसायनम् ।। रस-५.१७८ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- अत्रेदं कार्यं वक्राकारां चुल्लीं कृत्वा तदुपरि घटमेकं वक्रमुखं कृत्वा स्थापयेत् ततो वक्त्रमात्रं विहाय कृत्स्नं घटावयवं मृल्लेपेनाच्छादयेत् भृष्टयन्त्राख्येऽस्मिन् यन्त्रे विंशतिपलमानं शुद्धं सीसकं दत्त्वा तीव्रोत्तापेन द्रवीकुर्यात् ततः तस्मिन् कर्षप्रमाणं शोधितपारदं प्रक्षिप्य दर्व्या घट्टयेत् मिश्रीभूते च तस्मिन् प्रत्येकं पलमानं अर्जुनादीनां क्षारं पृथक् पृथक् दत्त्वा लौहदर्व्या दृढं घट्टयन् तीव्राग्निना विंशतिरात्रं पचेत् ।। रसबोध-५.१७८;१

$

- टीका रससरत्नसमुच्चयटीका:
- तिर्यगाकारा तिरश्चीना या दीर्घा चुल्ली आहाल्अ इति महाराष्ट्रभासायां प्रसिद्धा तस्यां घटं तिर्यग्वक्त्रम् एतादृशं घटं न्यसेद् अधिश्रयेत् ।। रसटी-५.१७८;१
- तं घटं च वक्त्रं विना बाह्ये समं ततोऽङ्गुलस्थूलं मृदा गोपयेल्लेपयेत् ।। रसटी-५.१७८;२
- भृष्टयन्त्राख्ये तस्मिन् विंशतिपलमितं सीसं विनिक्षिपेत् ।। रसटी-५.१७८;३
- तस्मिन् द्रुते सति एककर्षं शुद्धसूतं तत्र क्षिप्त्वा ततो दर्व्या विघट्ट्य इतस्ततः संचाल्यैकीभूते सत्यर्जुनादीनां प्रत्येकं क्षारं पलमितं क्षिपेत् ।। रसटी-५.१७८;४
- ततो दोर्भ्यां लोहदर्व्या विघट्टयंश्चालयन् विंशतिरात्रपर्यन्तं तीव्राग्निना पचेत् ।। रसटी-५.१७८;५
- तेन विधिना नागभस्म रक्तवर्णं कपोतच्छायं कृष्णमिश्ररक्तवर्णं वा भवेत् ।। रसटी-५.१७८;६
- तापस्फोटादिकरत्वरूपदोषरहितं भस्मीभूतं नागं रसायनं भवति ।। रसटी-५.१७८;७

### लेअद् > मारण

हतमुत्थापितं सीसं दशवारेण सिध्यति ।
तन्मृतं सीसकं सर्वदोषमुक्तं रसायनम् ।। रस-५.१७९ ।।

### लेअद् > मारण > निरुत्थ

अश्वत्थचिंचात्वग्भस्म नागस्य चतुरंशतः ।
क्षिपेन्नागं पचेत्पात्रे चालयेल्लोहचाटुना ।। रस-५.१८० ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- लोहचाटुना लोहदर्व्या ।। रसबोध-५.१८०;१

यामाद्भस्म तदुद्धृत्य भस्मतुल्या मनःशिला ।
जम्बीरैर् आरनालैर्वा पिष्ट्वा रुद्ध्वा पुटे पचेत् ।। रस-५.१८१ ।।

स्वांगशीतं पुनः पिष्ट्वा विंशत्यंशशिलायुतम् ।
अम्लेनैव तु यामैकं पूर्ववत्पाचयेत्पुटे ।
एवं षष्टिपुटैः पक्वो नागः स्यात्सुनिरुत्थितः ।। रस-५.१८२ ।।

### लेअद् > मारण > निरुत्थ

शिलया रविदुग्धेन नागपत्राणि लेपयेत् ।
मारयेत्पुटयोगेन निरुत्थं जायते तथा ।। रस-५.१८३ ।।

### लेअद् > fओर्मुलतिओन्स्

एवं नागोद्भवं भस्म ताप्यभस्मार्धभागिकम् ।
पादं पादं क्षिपेद्भस्म शुल्बस्य विमलस्य च ।। रस-५.१८४ ।।

कान्ताभ्रसत्त्वयोश् चापि स्फटिकस्य पृथक् पृथक् ।
सर्वमेकत्र संचूर्ण्य पुटेत्त्रिफलवारिणा ।। रस-५.१८५ ।।

त्रिंशद्वनगिरिण्डैश्च त्रिंशद्वारं विचूर्ण्य तत् ।
व्योषवेल्लकचूर्णैश्च समांशैः सह मेलयेत् ।। रस-५.१८६ ।।

मध्वाज्यसहितं हन्ति प्रलीढं वल्लमात्रया ।
अशीतिवातजान्रोगान्धनुर्वातं विशेषतः ।। रस-५.१८७ ।।

कफरोगानशेषांश्च मूत्ररोगांश्च सर्वशः ।
श्वासं कासं क्षयं पाण्डुं श्वयथुं शीतकज्वरम् ।। रस-५.१८८ ।।

ग्रहणीमामदोषं च वह्निमान्द्यं सुदुर्जरम् ।
सर्वानुदकदोषांश्च तत्तद्रोगानुपानतः ।। रस-५.१८९ ।।

### ब्रस्स् > सुब्त्य्पेस्

रीतिका काकतुण्डी च द्विविधं पित्तलं भवेत् ।। रस-५.१९० ।।

---

- टीका रससरत्नसमुच्चयटीका:
- तत् पित्तलं द्विविधम् ।। रसटी-५.१९०;१
- रीतिका काकतुण्डी चेति भेदात् ।। रसटी-५.१९०;२

- तत्र रीतिकाया द्वौ भेदौ ।। रसटी-५.१९०;३
- किंचित्ताम्राभा स्वर्णवर्णा च ।। रसटी-५.१९०;४

### रीतिका > परीक्षा

संताप्य कांजिके क्षिप्ता ताम्राभा रीतिका मता ।। रस-५.१९१ ।।

### काकतुण्डी > परीक्षा

एवं या जायते कृष्णा काकतुण्डीति सा मता ।। रस-५.१९२ ।।

### रीतिका > आयुर्वेदीय गुण

रीतिस्तिक्तरसा रूक्षा जन्तुघ्नी सास्रपित्तनुत् ।
पाण्डुकुष्ठहरा योगात्सोष्णवीर्या च शीतला ।। रस-५.१९३ ।।

### काकतुण्डी > आयुर्वेदीय गुण

काकतुण्डी गतस्नेहा तिक्तोष्णा कफपित्तनुत् ।
यकृत्प्लीहहरा शीतवीर्या च परिकीर्तिता ।। रस-५.१९४ ।।

### ब्रस्स् > रीति > फ्य्स्. गुण

गुर्वी मृद्वी च पीताभा साराङ्गी ताडनक्षमा ।
सुस्निग्धा मसृणाङ्गी च रीतिरेतादृशी शुभा ।। रस-५.१९५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- बर्बरा अधमा इत्यर्थः ।। रसबोध-५.१९५;१

### रीति > परीक्षा > बद् ॠउअलित्य्

पाण्डुपीता खरा रूक्षा बर्बरा ताडनाक्षमा ।
पूतिगन्धा तथा लघ्वी रीतिर्नेष्टा रसादिषु ।। रस-५.१९६ ।।

### रीति > शोधन

तप्त्वा क्षिप्त्वा च निर्गुण्डीरसे श्यामारजोऽन्विते ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- श्यामारजोऽन्विते हरिद्राचूर्णसंयुते ।। रसबोध-५.१९७कख;१

पञ्चवारेण संशुद्धिं रीतिरायाति निश्चितम् ।। रस-५.१९७ ।।

## रीति > मारण

निम्बूरसशिलागन्धवेष्टिता पुटिताष्टधा ।
रीतिरायाति भस्मत्वं ततो योज्या यथायथम् ।। रस-५.१९८ ।।

## रीति > मारण

ताम्रवन्मारणं तस्याः कृत्वा सर्वत्र योजयेत् ।। रस-५.१९९ ।।

## ब्रस्स् > पित्तलरसायन

मृतारकूटकं कान्तं व्योमसत्त्वं च मारितम् ।
त्रयं समांशकं तुल्यं व्योषं जन्तुघ्नसंयुतम् ।। रस-५.२०० ।।

ब्रह्मबीजाजमोदाग्निभल्लाततिलसंयुतम् ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- अजमोदा यमानी अन्तःपरिमार्जनकत्वात् ।। रसबोध-५.२०१कख;१

सेवितं निष्कमात्रं हि जन्तुघ्नं कुष्ठनाशनम् ।
विशेषाच्छ्वेतकुष्ठघ्नं दीपनं पाचनं हितम् ।। रस-५.२०१ ।।

## ब्रस्स् > द्रावण

सुवर्णरीतिकाचूर्णं भक्षितं वेष्टितं पुनः ।
छागेन कृष्णवर्णेन मत्तेन तरुणेन च ।। रस-५.२०२ ।।

तल्लिप्तं खर्परे दग्धं द्रुतिं मुञ्चति शोभनाम् ।
चतुर्दशलसद्वर्णसुवर्णसदृशछविः ।
देहलोहकरी प्रोक्ता युक्ता रसरसायने ।। रस-५.२०३ ।।

## ब्रोन्शे > प्रोदुच्तिओन्

अष्टभागेन ताम्रेण द्विभागखुरकेण च ।
विद्रुतेन भवेत्कांस्यं तत्सौराष्ट्रभवं शुभम् ।। रस-५.२०४ ।।

### ब्रोन्शे > परीक्षा > गोओद् ॠउअलित्य्

तीक्ष्णशब्दं मृदु स्निग्धमीषच्छ्यामलशुभ्रकम् ।
निर्मलं दाहरक्तं च षोढा कांस्यं प्रशस्यते ।। रस-५.२०५ ।।

### ब्रोन्शे > परीक्षा > बद् ॠउअलित्य्

तत्पीतं दहने ताम्रं खरं रूक्षं घनासहम् ।
मन्दनादं गतज्योतिः सप्तधा कांस्यमुत्सृजेत् ।। रस-५.२०६ ।।

### ब्रोन्शे > आयुर्वेदीय गुण

कांस्यं लघु च तिक्तोष्णं लेखनं दृक्प्रसादनम् ।
कृमिकुष्ठहरं वातपित्तघ्नं दीपनं हितम् ।। रस-५.२०७ ।।

घृतमेकं विना चान्यत्सर्वं कांस्यगतं नृणाम् ।
भुक्तमारोग्यसुखदं हितं सात्म्यकरं तथा ।। रस-५.२०८ ।।

### ब्रोन्शे > शोधन

तप्तं कांस्यं गवां मूत्रे वापितं परिशुध्यति ।। रस-५.२०९ ।।

### ब्रोन्शे > मारण > निरुत्थ

म्रियते गन्धतालाभ्यां निरुत्थं पञ्चभिः पुटैः ।। रस-५.२१० ।।

### ब्रोन्शे > मारण

त्रिक्षारं पञ्चलवणं सप्तधाम्लेन भावयेत् ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- आरकूटं पित्तलम् ।। रसबोध-५.२१०;१

कांस्यारकूटपत्राणि तेन कल्केन लेपयेत् ।
रुद्ध्वा गजपुटे पक्वं शुद्धभस्मत्वमाप्नुयात् ।। रस-५.२११ ।।

### वर्तलोह

कांस्यार्करीतिलोहाहिजातं तद्वर्तलोहकम् ।
तदेव पञ्चलोहाख्यं लोहविद्भिरुदाहृतम् ।। रस-५.२१२ ।।

## वर्तलोह > आयुर्वेदीय गुण

हिमाम्लं कटुकं रूक्षं कफपित्तविनाशनम् ।
रुच्यं त्वच्यं कृमिघ्नं च नेत्र्यं मलविशोधनम् ।। रस-५.२१३ ।।

तद्भाण्डे साधितं सर्वम् अन्नव्यञ्जनसूपकम् ।
अम्लेन वर्जितं चातिदीपनं पाचनं हितम् ।। रस-५.२१४ ।।

## वर्तलोह > शोधन

द्रुतमश्वजले क्षिप्तं वर्तलोहं विशुध्यति ।। रस-५.२१५ ।।

## वर्तलोह > मारण

म्रियते गन्धतालाभ्यां पुटितं वर्तलोहकम् ।
तेषु तेष्विह योगेषु योजनीयं यथाविधि ।। रस-५.२१६ ।।

## मेर्चुर्य् > प्रेपरतिओन् wइथ् महारसस् एत्च्.

जातिमद्भिर्विशुद्धैश्च विधिना परिसाधितैः ।
रसोपरसलोहाद्यैः सूतः सिध्यति नान्यथा ।। रस-५.२१७ ।।

रत्नानि लोहानि वराटशुक्तिपाषाणजातं खुरशृङ्गशल्यम् ।
महारसाद्येषु कठोरदेहं भस्मीकृतं स्यात् खलु सूतयोग्यम् ।। रस-५.२१८ ।।

## भूनाग > सत्त्व

वज्राणां द्रावणार्थाय सत्त्वं भूनागजं ब्रुवे ।
तदेव परमं तेजः सूतराजेन्द्रवज्रयोः ।। रस-५.२१९ ।।

धौतभूनागसम्भूतं मर्दयेद्भृंगजद्रवैः ।
निम्बूद्रवैश्च निर्गुण्ड्याः स्वरसैस्त्रिदिनं पृथक् ।। रस-५.२२० ।।

तदद्रावणगणोपेतं संमर्द्य वटकीकृतम् ।
निरुध्य दृढमूषायां द्विदण्डं प्रधमेद् दृढम् ।। रस-५.२२१ ।।

स्वतःशीतं समाहृत्य पट्टके विनिवेश्य तत् ।
रवकान् राजिकातुल्यान् रेणून् अतिभरान्वितान् ।। रस-५.२२२ ।।

द्वादशांशार्कसंयुक्तान्धमित्वा रवकान्हरेत् ।
प्रक्षाल्य रवकानाशु समादाय प्रयत्नतः ।। रस-५.२२३ ।।

वज्रादिद्रावणं तेन प्रकुर्वीत यथेप्सितम् ।
खरसत्त्वम् इदं प्रोक्तं रसायनमनुत्तमम् ।
द्वित्रिमूषासु चैकस्यां सत्त्वं भवति निश्चितम् ।। रस-५.२२४ ।।

### भूनाग > सत्त्व

भुजङ्गमानुपादाय चतुष्प्रस्थसमन्वितान् ।
सुवर्णरूप्यताम्रायस्कांतसंभूतिभूमिजान् ।। रस-५.२२५ ।।

प्रक्षाल्य रजनीतोयैः शीतलैश्च जलैरपि ।
उपोषितं मयूरं वा शूरं वा चरणायुधम् ।। रस-५.२२६ ।।

क्रमेण चारयित्वाथ तद्विष्ठां समुपाहरेत् ।
क्षाराम्लैः सह संपेष्य विशोष्य च खरातपे ।। रस-५.२२७ ।।

ततः खर्परके क्षिप्त्वा भर्जयित्वा मर्षी चरेत् ।
मषीं द्रावणवर्गेण संयुक्तां संप्रमर्दिताम् ।। रस-५.२२८ ।।

निरुध्य कोष्ठिकामध्ये प्रधमेद् घटिकाद्वयम् ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- खोटं रसजारणबन्धनद्रव्यविशेषं भूनागसत्त्वस्य रसजारकत्वात् अत्र खोटशब्देन रवकरेणुरूपं भूनागसत्त्वं बोध्यम् ।। रसबोध-५.२२९कख;१

शीतलीभूतमूषायाः खोटमाहृत्य पेषयेत् ।। रस-५.२२९ ।।

प्रक्षाल्य रवकान्सूक्ष्मान्समादाय प्रयत्नतः ।
सुवर्णमानवद् ध्मात्वा रवं कृत्वा नियोजयेत् ।। रस-५.२३० ।।

### भूनाग > मुद्रिका (?)

भूनागोद्भवसत्त्वमुत्तममिदं श्रीसोमदेवोदितं दत्तं पादमितं द्विशाणकनकेनैकं गतेनोर्मिकाम् ।
तद्धौताम्बुविलेपितं स्थिरचरोद्भूतं विषं नेत्ररुक् शूलं मूलगदं च कर्णजरुजो हन्यात् प्रसूतिग्रहम् ।। रस-५.२३१ ।।

### तैलपातन

मूलान्युत्तरवारुण्या जर्जरीकृत्य कांजिके ।
क्षिपेदङ्कोल्लबीजानां पेशिकां जर्जरीकृताम् ।
तत्तैलं घृतवत्स्त्यानं ग्राह्यं तत्तु यथाविधि ।। रस-५.२३२ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- पेटकारी ज्योतिष्मती ।। रसबोध-५.२३२;१

### तैलपातन

संपेष्योत्तरवारुण्याः पेटकार्या दलान्यथ ।
काञ्जिकेन ततस्तेन कल्केन परिमर्दयेत् ।। रस-५.२३३ ।।

रजश्चाङ्कोल्लबीजानां तद्वद्ध्वा विरलाम्बरे ।
तद्विलम्ब्यातपे तीव्रे तस्याधश्चषकं न्यसेत् ।
तस्मिन्निपतितं तैलमादेयं श्वित्रनाशनम् ।। रस-५.२३४ ।।

### तैल > पातन

अङ्कोल्लबीजसम्भूतं चूर्णं संमर्द्य काञ्जिकैः ।
एकरात्रोषितं तत्तु पिण्डीकृत्य ततः परम् ।। रस-५.२३५ ।।

स्वेदयेत्कन्दुके यन्त्रे घटिकाद्वितयं ततः ।
तां च पिण्डीं दृढे वस्त्रे बद्ध्वा निष्पीड्य काष्ठतः ।। रस-५.२३६ ।।

अधःपात्रस्थितं तैलं समाहृत्य नियोजयेत् ।
एवं कन्दुकयन्त्रेण सर्वतैलान्युपाहरेत् ।। रस-५.२३७ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- काकतुण्डी श्वेतगुञ्जा ।। रसबोध-५.२३७;१

अङ्कोलस्यापि तैलं स्यात्काकतुण्ड्या समूलया ।। रस-५.२३८ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वाकुची सोमराजी ।। रसबोध-५.२३८;१
- देवदाली हस्तिघोषकः ।। रसबोध-५.२३८;२

$

- टीका रससरत्नसमुच्चयबोधिनी:
- कर्कोटी कर्कोटकं कांकोल इति भाषा ।। रसबोध-५.२३८;१

### तैल > पातन

वाकुचिदेवदाल्योश्च कर्कोटीमूलतो भवेत् ।। रस-५.२३९ ।।

## तैल > विषमुष्टि

अपामार्गकषायेण तैलं स्याद्विषमुष्टिजम् ।। रस-५.२४० ।।

## तैल > जैपाल

मूलक्वाथैः कुमार्याश्च तैलं जैपालजं हरेत् ।। रस-५.२४१ ।।

## तैल > वाकुची

क्वाथै रक्तापामार्गस्य वाकुचीतैलमाहरेत् ।। रस-५.२४२ ।।

## तैल > पातन

कृष्णायाः काकतुण्ड्याश्च बीजचूर्णानि कारयेत् ।
कान्तपाषाणचूर्णं च एकीकृत्य निरोधयेत् ।
धान्यराशिगतं पश्चादुद्धृत्य तैलमाहरेत् ।। रस-५.२४३ ।।

# रसरत्नसमुच्चय : अध्याय 06

https://sa.wikisource.org/s/80p

रसशास्त्राणि सर्वाणि समालोच्य यथाक्रमम् ।
साधकानां हितार्थाय प्रकटीक्रियतेऽधुना ।। रस-६.१ ।।

न क्रमेण विना शास्त्रं न शास्त्रेण विना क्रमः ।
शास्त्रं क्रमयुतं ज्ञात्वा यः करोति स सिद्धिभाक् ।। रस-६.२ ।।

आचार्यो ज्ञानवान्दक्षो रसशास्त्रविशारदः ।
मन्त्रसिद्धो महावीरो निश्चलशिववत्सलः ।। रस-६.३ ।।

देवीभक्तः सदा धीरो देवतायागतत्परः ।
सर्वाम्नायविशेषज्ञः कुशलो रसकर्मणि ।
एवं लक्षणसंयुक्तो रसविद्यागुरुर् भवेत् ।। रस-६.४ ।।

गुरुभक्ताः सदाचाराः सत्यवन्तो दृढव्रताः ।
निरालस्याः स्वधर्मज्ञाः सदाज्ञापरिपालकाः ।। रस-६.५ ।।

दम्भमात्सर्यनिर्मुक्ताः कुलाचारेषु दीक्षिताः ।
अत्यन्तसाधकाः शान्ता मन्त्राराधनतत्पराः ।
इत्येवं लक्षणैर्युक्ताः शिष्याः स्युः सूतसिद्धये ।। रस-६.६ ।।

सहायाः सोद्यमास्तत्र यथा शिष्यास्ततोऽधिकाः ।
कुलीनाः स्वामिभक्ताश्च कर्तव्या रसकर्मणि ।। रस-६.७ ।।

नास्तिका ये दुराचाराश्चुम्बका गुरुतोऽपरात् ।
विद्यां ग्रहीतुमिच्छति चौर्यच्छद्मखलोत्सवात् ।। रस-६.८ ।।

न तेषां सिध्यते किंचिन् मणिमन्त्रौषधादिकम् ।
कुर्वन्ति यदि मोहेन नाशयन्ति स्वकं धनम् ।
इह लोके सुखं नास्ति परलोके तथैव च ।। रस-६.९ ।।

तस्माद् भक्तिबलादेव संतुष्यति यदा गुरुः ।
तदा शिष्येण सा ग्राह्या रसविद्यात्मसिद्धये ।
हस्तमस्तकयोगेन वरं लब्ध्वा सुसाधयेत् ।। रस-६.१० ।।

आतङ्करहिते देशे धर्मराज्ये मनोरमे ।
उमामहेश्वरोपेते समृद्धे नगरे शुभे ।। रस-६.११ ।।

कर्तव्यं साधनं तत्र रसराजस्य धीमता ।
अत्यन्तोपवने रम्ये चतुर्द्वारोपशोभिते ।। रस-६.१२ ।।

तत्र शाला प्रकर्तव्या सुविस्तीर्णा मनोरमा ।
सम्यग्वातायनोपेता दिव्यचित्रैर् विचित्रिता ।। रस-६.१३ ।।

तत्समीपे समे दीप्ते कर्तव्यं रसमण्डपम् ।
अतिगुप्तं सुविस्तीर्णं कपाटार्गलशोभितम् ।। रस-६.१४ ।।

ध्वजछत्त्रवितानाढ्यं पुष्पमालाविलम्बितम् ।
भेरीकाहलघण्टादिशृङ्गीनादावनादितम् ।। रस-६.१५ ।।

भूः समा तत्र कर्तव्या सुदृढा दर्पणोपमा ।
तन्मध्ये वेदिका रम्या कर्तव्या लक्षणान्विता ।। रस-६.१६ ।।

निष्कत्रयं हेमपत्त्रं रसेन्द्रं नवनिष्ककम् ।
अम्लेन मर्दयेद् यामं तेन लिङ्गं तु कारयेत् ।। रस-६.१७ ।।

दोलायन्त्रे सारनाले जम्बीरस्थं दिनं पचेत् ।
तल्लिङ्गं पूजयेत्तत्र सुशुभैरुपचारकैः ।। रस-६.१८ ।।

लिङ्गकोटिसहस्रस्य यत्फलं सम्यगर्चनात् ।
तत्फलं कोटिगुणितं रसलिङ्गार्चनाद्भवेत् ।। रस-६.१९ ।।

ब्रह्महत्यासहस्राणि गोहत्याश्चायुतानि हि ।
तत्क्षणाद्विलयं यान्ति रसलिङ्गस्य दर्शनात् ।। रस-६.२० ।।

स्पर्शनात्प्राप्यते मुक्तिरिति सत्यं शिवोदितम् ।
आग्नेय्यां श्रीघोरेण मन्त्रराजेन चार्चयेत् ।। रस-६.२१ ।।

अष्टादशभुजं शुभ्रं पञ्चवक्त्रं त्रिलोचनम् ।
प्रेतारूढं नीलकण्ठं रसलिङ्गं विचिन्तयेत् ।। रस-६.२२ ।।

तस्योत्सङ्गे महादेवीमेकवक्त्रां चतुर्भुजाम् ।
अक्षमालाङ्कुशं दक्षे वामे पाशाभयं शुभम् ।
दधतीं तप्तहेमाभां पीतवस्त्रां विभावयेत् ।। रस-६.२३ ।।

वाङ्मयी श्रीः कामराजशक्तिबीजं रसाङ्कुशायै नमो द्वादशार्णैषा ज्ञेया विद्या रसाङ्कुशा ।। रस-६.२४ ।।

अनया पूजयेद्देवीं गन्धपुष्पाक्षतादिभिः ।
नन्दीभृङ्गीमहाकालकुलीरान् पूर्वदिक्क्रमात् ।
पूजयेन् नाममन्त्रैश् च प्रणवादिनमोऽन्तकैः ।। रस-६.२५ ।।

एव नित्यार्चनं तत्र कर्तव्यं रससिद्धये ।। रस-६.२६ ।।

रसविद्या शिवेनोक्ता दातव्या साधकाय वै ।
यथोक्तेन विधानेन गुरुणा मुदितात्मना ।। रस-६.२७ ।।

सुमुहूर्ते सुनक्षत्रे चन्द्रताराबलान्विते ।
कलशं तोयसम्पूर्णं हेमरत्नफलैर्युतम् ।। रस-६.२८ ।।

स्थापयेद् रसलिङ्गाग्रे दिव्यवस्त्रेण वेष्टितम् ।
गन्धपुष्पाक्षतैर् धूपैर् नैवेद्यैश्च सुपूजयेत् ।। रस-६.२९ ।।

पूजान्ते हवनं कुर्याद्योनिकुण्डे सुलक्षणे ।
तिलाज्यैः पायसैः पुष्पैः शतपुष्पादिकैः पृथक् ।। रस-६.३० ।।

अघोरेण रसाङ्कुश्या होमान्ते शिष्यमाह्वयेत् ।
कालिनीशक्तिसंयुक्तं रससिद्धिपरायणम् ।। रस-६.३१ ।।

यस्यास्तु कुञ्चिताः केशाः श्यामा या पद्मलोचना ।
सुरूपा तरुणी भिन्ना विस्तीर्णजघना शुभा ।। रस-६.३२ ।।

संकीर्णहृदया पीनस्तनभारेण नम्रिता ।
चुम्बनालिङ्गस्पर्शकोमला मृदुभाषिणी ।। रस-६.३३ ।।

अश्वत्थपत्त्रसदृशयोनिदेशसुशोभिता ।
कृष्णपक्षे पुष्पवती सा नारी कालिनी स्मृता ।
रसबन्धे प्रयोगे च उत्तमा सा रसायने ।। रस-६.३४ ।।

तदभावे सुरूपा तु या काचित् तरुणाङ्गना ।
तस्या देयं त्रिसप्ताहं गन्धकं घृतसंयुतम् ।
कर्षैकैकं प्रभाते तु सा भवेत्कालिनीसमा ।। रस-६.३५ ।।

एवं शक्तियुतो योऽसौ दीक्षयेत् तं गुरूत्तमः ।
सुस्नातम् अभिषिञ्चेत मन्त्रेण कलशोदकैः ।। रस-६.३६ ।।

अघोरामङ्कुशीं विद्यां दध्याच्छिष्याय सद्गुरुः ।
यथाशक्त्या सुशिष्येण दातव्या गुरुदक्षिणा ।। रस-६.३७ ।।

अथाज्ञया गुरोर्मन्त्रं लक्षं लक्षं पृथग्जपेत् ।
ओं ह्रां ह्रीं ह्रूं अघोरतर प्रस्फुट २ प्रकट २ कह २ शमय २ जात २ दह २ पातय २ ओं ह्रीं ह्रैं ह्रौं ह्रूं अघोराय फट् इमम् अघोरमन्त्रं तु औं कामराजशक्तिबीजरसाङ्कुशायै आज्ञया विद्यां रसाङ्कुशाम् ।
अनया पूजयेद्देवीं शक्तिम् अङ्कुशविद्यया ।। रस-६.३८ ।।

दशांशं जुहुयात्कुण्डे त्रिकोणे हस्तमात्रके ।
जातिपुष्पं त्रिमध्वक्तं पूर्णान्ते कन्यकार्चनम् ।। रस-६.३९ ।।

कृत्वाथ प्रविशेच्छालां शुद्धां लिप्तां सवेदिकाम् ।
षट्कोणं मण्डलं तत्र सिन्दूरेण द्विहस्तकम् ।। रस-६.४० ।।

वेदिकायां लिखेत्सम्यक् तद्बहिश् चाष्टपत्त्रकम् ।
कमलं चतुरस्रं च चतुर्द्वारैः सुशोभितम् ।। रस-६.४१ ।।

कर्णिकायां न्यसेत् खल्लं लोहजं स्वर्णलेखितम् ।
तन्मध्ये रसराजं तु पलानां शतमात्रकम् ।
पञ्चाशत्पञ्चविंशद् वा पूजयेद् रसलिङ्गवत् ।। रस-६.४२ ।।

वज्रवैक्रान्तवज्राभ्रकान्तपाषाणटङ्कणम् ।
भूनागः शक्तयश्चैताः षट्कोणे पूजयेत् क्रमात् ।। रस-६.४३ ।।

## उपरस

गन्धतालककासीसशिलाकङ्कुष्ठभूषणम् ।
राजावर्तो गैरिकं च ख्याता उपरसा अमी ।
पूज्या अष्टदलेष्वेते पूर्वादीशानगं क्रमात् ।। रस-६.४४ ।।

## महारस

रसकं विमला ताप्यं चपला तुत्थम् अञ्जनम् ।
हिङ्गुलं सस्यकं चैव ख्याता एते महारसाः ।
पूर्वादीशानपर्यन्तं पत्त्राग्रेषु प्रपूजयेत् ।। रस-६.४५ ।।

पूर्वद्वारे स्वर्णरौप्ये दक्षिणे ताम्रसीसके ।
पश्चिमे वङ्गकान्तौ च उत्तरे मुण्डतीक्ष्णके ।
सर्वमेतद् अघोरेण पूजयेद् अङ्कुशान्वितम् ।। रस-६.४६ ।।

विडं काञ्जिकयन्त्राणि क्षारमृल्लवणानि च ।
कोष्ठी मूषा वङ्कनालतुषाङ्गारवनोपलाः ।। रस-६.४७ ।।

भस्त्रिका दण्डिकानेका शिला खल्वान्युलूखलम् ।
स्वर्णकारोपकरणं समस्ततुलनानि च ।। रस-६.४८ ।।

मृत्काष्ठताम्रलोहोत्थपात्राणि विविधानि च ।
दिव्यौषधीनां वर्गाश्च रञ्जकस्नेहनानि च ।
एतानि द्वारबाह्ये तु मूलमन्त्रेण पूजयेत् ।। रस-६.४९ ।।

वाङ्माया ह्रीं ततः क्षें च क्ष्मश्च पञ्चाक्षरो मनुः ।
अनेन मन्त्रेण भैरवं तत्र पूजयेत् ।
सर्वेषां रससिद्धानां नाम संकीर्तयेत् तदा ।। रस-६.५० ।।

व्यालाचार्यश् चन्द्रसेनः सुबुद्धिर्नरवाहनः ।
नागार्जुनो रत्नघोषः सुरानन्दो यशोधनः ।। रस-६.५१ ।।

इन्द्रश्च माण्डव्यश्चर्पटी शूरसेनकः ।
आगमो नागबुद्धिश् च खण्डः कापालिको मतः ।। रस-६.५२ ।।

कामारिस् तान्त्रिकः शम्भुर् लङ्कालम्पटशारदौ ।
बाणासुरो मुनिश्रेष्ठो गोविन्दः कपिलो बलिः ।। रस-६.५३ ।।

एते सर्वे तु सूतेन्द्रा रससिद्धा महाबलाः ।
चरन्ति सर्वलोकेषु नित्या भोगपरायणाः ।। रस-६.५४ ।।

सप्तविंशतिसंख्याका रससिद्धिप्रदायकाः ।
वैद्याः पूज्याः प्रयत्नेन ततः कुर्याद्रसार्चनम् ।। रस-६.५५ ।।

हर्षयन्द्विजदेवानां तर्पयेदिष्टदेवताः ।
कुमारीयोगिनीयोगीश्वरान्मेलकसाधकान् ।
तर्पयेत् पूजयेद् भक्त्या यथाशक्त्यनुसारतः ।। रस-६.५६ ।।

इत्येवं सर्वसम्भारयुक्तं कुर्याद्रसोत्सवम् ।
सर्वविघ्नप्रशान्त्यर्थं सर्वेप्सितफलप्रदम् ।। रस-६.५७ ।।

अन्यथा यो विमूढात्मा मन्त्रदीक्षाक्रमाद्विना ।
कर्तुमिच्छति सूतस्य साधनं गुरुवर्जितः ।। रस-६.५८ ।।

नासौ सिद्धिमवाप्नोति यत्नकोटिशतैरपि ।
तस्मात्सर्वप्रयत्नेन शास्त्रोक्तां कारयेत्क्रियाम् ।। रस-६.५९ ।।

सम्यक्साधनसोद्यमा गुरुयुता राजाज्ञयालंकृता नानाकर्मपराङ्मुखा रसपराश् चाढ्या जनैश्चार्थिताः ।
मात्रायन्त्रसुपाककर्मकुशलाः सर्वौषधे कोविदाः तेषां सिध्यति नान्यथा विधिबलाच्छ्रीपारदः पारदः ।। रस-६.६० ।।

रसशास्त्रं प्रदातव्यं विप्राणां धर्महेतवे ।
राज्ञे वैश्याय वृद्ध्यर्थं दास्यार्थम् इतरस्य च ।। रस-६.६१ ।।

गुरौ तुष्टे शिवस्तुष्येच्छिवे तुष्टे रसस्तथा ।
रसे तुष्टे क्रियाः सर्वाः सिध्यन्त्येव न संशयः ।। रस-६.६२ ।।

रसविद्या दृढं गोप्या मातुर्गुह्यमिव ध्रुवम् ।
भवेद् वीर्यवती गुप्ता निर्वीर्या च प्रकाशनात् ।। रस-६.६३ ।।

न रोगिविदितं कार्यं बहुभिर्विदितं तथा ।
रोगिणां बहुभिर्ज्ञातं भवेन्निर्वीर्यम् औषधम् ।। रस-६.६४ ।।

# रसरत्नसमुच्चय : अध्याय 07

https://sa.wikisource.org/s/80q

रसशालां प्रकुर्वीत सर्वबाधाविवर्जिते ।
सर्वौषधिमये देशे रम्ये कूपसमन्विते ।। रस-७.१ ।।

यक्षत्र्यक्षसहस्राक्षदिग्विभागे सुशोभने ।
नानोपकरणोपेतां प्राकारेण सुशोभिताम् ।। रस-७.२ ।।

शालायाः पूर्वदिग्भागे स्थापयेद् रसभैरवम् ।
वह्निकर्माणि चाग्नेये याम्ये पाषाणकर्म च ।। रस-७.३ ।।

नैरृत्ये शस्त्रकर्माणि वारुणे क्षालनादिकम् ।
शोषणं वायुकोणे च वेधकर्मोत्तरे तथा ।
स्थापनं सिद्धवस्तूनां प्रकुर्याद् ईशकोणके ।। रस-७.४ ।।

पदार्थसंग्रहः कार्यो रससाधनहेतुकः ।
सत्त्वपातनकोष्ठीं च झरत्कोष्ठीं सुशोभनाम् ।। रस-७.५ ।।

भूमिकोष्ठीं चलत्कोष्ठीं जलद्रोण्योऽप्यनेकशः ।
भस्त्रिकायुगलं तद्वन्नलिके वंशलोहयोः ।। रस-७.६ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- स्वर्णादिमय्यः कुण्ड्यो वर्तुलपात्राणि ।। रसटी-७.६;१

स्वर्णायोघोषशुल्वाश्मकुण्ड्यश् चर्मकृतां तथा ।
करणानि विचित्राणि द्रव्याण्यपि समाहरेत् ।। रस-७.७ ।।

कण्डणी पेषणी स्वल्पा द्रोणीरूपाश्च वर्तुलाः ।
आयसास्तप्तखल्लाश्च मर्दकाश्च तथाविधाः ।। रस-७.८ ।।

सूक्ष्मच्छिद्रसहस्राढ्या द्रव्यगालनहेतवे ।

---

- टीका रससरत्नसमुच्चयटीका:
- कटत्राणि कषायितचर्मखण्डानि ।। रसटी-७.९कख;१

चालनी च कटत्राणि शलाका हि च कुण्डली ।। रस-७.९ ।।

**सिएवे**

चालनी त्रिविधा प्रोक्ता तत्स्वरूपं च कथ्यते ।
वैणवीभिः शलाकाभिर्निर्मिता ग्रथिता गुणैः ।
कीर्तिता सा सदा स्थूलद्रव्याणां गालने हिता ।। रस-७.१० ।।

---

- टीका रससरत्नसमुच्चयटीका:
- इयं चतुष्कोणा दीर्घचालनी ।। रसटी-७.१०;१
- तत्र दीर्घाः शलाकास्तिरश्चीनाश्च वंशमय्यश् चतुष्कोणकाष्ठपट्टिकाछिद्रेषु बहिर्निर्गताग्राः सूत्रबद्धाः कार्याः ।। रसटी-७.१०;२

## सिएवे > व्.२

चूर्णचालनहेतोश्च चालन्यन्यापि वंशजा ।। रस-७.११ ।।

कर्णिकारस्य शाल्मल्या हरिजातस्य कम्बया ।
चतुरङ्गुलविस्तारयुक्तया निर्मिता शुभा ।। रस-७.१२ ।।

## सिएवे > कुण्डली

कुण्डल्यरत्निविस्तारा छागचर्माभिवेष्टिता ।
वाजिवालाम्बरानद्धतला चालनिका परा ।
तया प्रचालनं कुर्याद्धर्तुं सूक्ष्मतरं रजः ।। रस-७.१३ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- कुण्डलीं कुण्डलाकारां वर्तुलां तृतीयां चालनीं विदध्यात् ।। रसटी-७.१३;१
- वाजिवाला अश्वपुच्छकेशाः ।। रसटी-७.१३;२
- अम्बरं वस्त्रम् ।। रसटी-७.१३;३
- तदन्यतरेणानद्धतला बद्धतला ।। रसटी-७.१३;४

$

- टीका रससरत्नसमुच्चयबोधिनी:
- कुण्डली चालन्या वेष्टनी ।। रसबोध-७.१३;१
- अरत्निविस्तारा प्रसारितकनिष्ठाङ्गुलिबद्धमुष्टिहस्तप्रमाणायता चतुरङ्गुलविस्तृतकर्णिकारादिवल्कलनिर्मिता अरत्निविस्तारवेष्टनी युक्ता छागचर्ममण्डिता अश्वपुच्छकेशसूक्ष्मवस्त्ररचिततलदेशा सूक्ष्मतरद्रव्यचालनार्थम् अपरविधा चालनीत्यर्थः ।। रसबोध-७.१३;२

मूषामृत्तुषकार्पासवनोपलकपिष्टकम् ।
त्रिविधं भेषजं धातुजीवमूलमयं तथा ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- शर्करा वालुका ।। रसबोध-७.१४अ-द;१

$

- टीका रससरत्नसमुच्चयटीका:
- शर्करा अतिक्षुद्रपाषाणरवकाः ।। रसटी-७.१४अ-द्;१
- तदपेक्षया स्थूलाः श्वेताः कणाः सितोपलाः ।। रसटी-७.१४अ-द्;२
- शर्कराशब्देन वालुकापि ग्राह्या ।। रसटी-७.१४अ-द्;३

### शिखित्र, शर्करा

शिखित्रा गोवरं चैव शर्करा च सितोपला ।। रस-७.१४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- सितोपला कठिनी फुलकडी इति भाषा ।। रसबोध-७.१४;१

### छर्चोअल्

शिखित्राः पावकोच्छिष्टा अङ्गाराः कोकिला मताः ।। रस-७.१५ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- दग्धकाष्ठकठिनखण्डानामेव शिखित्रसंज्ञा कोकिलसंज्ञा च ।। रसटी-७.१५;१
- संप्रति तेषां सामान्यम् अवान्तरभेदं चाह शिखित्रा इति ।। रसटी-७.१५;२
- पावकेन वह्निना भुक्त्वा उच्छिष्टाः परित्यक्ता अङ्गाराः शिखित्राः कोकिलाश्च मताः ।। रसटी-७.१५;३
- विशेषस्त्वित्थम् वह्निना भुक्त्वा स्वयं त्यक्ताः शिखित्रा हठात् प्रतिकूलवायुधूलिक्षेपमृत्तिकादिनिपीडनादिना यत्नेन वह्नितो वियोजिता अङ्गाराः कोकिला मता इति चेति ।। रसटी-७.१५;४
- ते प्रज्वलिता जलेन विना निर्वाणाः कृता वह्निमुक्ताः कृताः ।। रसटी-७.१५;५

### छर्चोअल् > कोकिल

कोकिलाश् चेतिताङ्गारा निर्वाणाः पयसा विना ।। रस-७.१६ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- शिखित्रलक्षणे कोकिला उक्ताः अतः कोकिलाशब्दस्यार्थम् आह कोकिला इति ।। रसबोध-७.१६;१
- चेतिताङ्गाराः तप्ताङ्गाराः पयसो विना स्वयं निर्वाणाः शान्ताः चेत् ते अङ्गाराः कोकिलाः मताः कोकिलाः कय्ला इति भाषा ।। रसबोध-७.१६;२

### द्रिएद् चोwदुन्ग्

पिष्टकं छगणं छाणम् उपलं चोत्पलं तथा ।
गिरिण्डोपलसाठी च संशुष्कच्छगणाभिधाः ।। रस-७.१७ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- चषकं पानपात्रं वाटी ग्लास् इति प्रसिद्धम् ।। रसबोध-७.१७;१

काचायोमृद्वराटानां कूपिका चषकानि च ।। रस-७.१८ ।।

### बोत्त्ले

कूपिका कुपिका सिद्धा गोला चैव गिरिण्डिका ।। रस-७.१९ ।।

### चषकपर्यायाः

चषकं च कटोरी च वाटिका खारिका तथा ।
कञ्चोली ग्राहिका चेति नामान्येकार्थकानि हि ।। रस-७.२० ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- क्षुद्रशिप्राः क्षुद्राकाराः शुक्तयः ।। रसबोध-७.२०;१

शूर्पादिवेणुपात्राणि क्षुद्रशिप्राश्च शङ्खिकाः ।

---

- टीका रससरत्नसमुच्चयटीका:
- शङ्खिकाः क्षुद्रशङ्खमयपात्राणि ।। रसटी-७.२१कख;१

$

- टीका रससरत्नसमुच्चयटीका:
- क्षुरका नापितस्य शस्त्रविशेषाः ।। रसटी-७.२१कख;१

$

- टीका रससरत्नसमुच्चयटीका:
- पाक्यो यवक्षारः ।। रसटी-७.२०;१

क्षुरप्राश्च तथा पाक्यः यच्चान्यत्तत्र युज्यते ।

---

- टीका रससरत्नसमुच्चयटीका:
- पालिका दर्वी ।। रसटी-७.२१कख;१

$

- टीका रससरत्नसमुच्चयटीका:
- कर्णिका विलीति महाराष्ट्रभाषायाम् ।। रसटी-७.२१कख;१
- सा चात्र वर्तुलाकारदन्तपङ्क्तिशिखरा ग्राह्या ।। रसटी-७.२१कख;२

पालिका कर्णिका चैव शाकच्छेदनशस्त्रकाः ।। रस-७.२१ ।।

शालासम्मार्जनाद्यं हि रसपाकान्तकर्म यत् ।
तत्रोपयोगि यच्चान्यत्तत्सर्वं परविद्यया ।। रस-७.२२ ।।

श्रीरसाङ्कुशया सर्वं मन्त्रयित्वा समर्चयेत् ।
अन्यथा तद्गतं तेजः परिगृह्णन्ति भैरवाः ।। रस-७.२३ ।।

रससंचिन्तका वैद्या निघण्टुज्ञाश्च वार्त्तिकाः ।
सर्वदेशजभाषाज्ञाः संग्राह्यास्तेऽपि साधकैः ।। रस-७.२४ ।।

रसपाकावसानं हि सदाघोरं च जापयेत् ।। रस-७.२५ ।।

सोद्यमाः शुचयः शूरा बलिष्ठाः परिचारकाः ।। रस-७.२६ ।।

धर्मिष्ठः सत्यवाग्विद्वान् शिवकेशवपूजकः ।
सदयः पद्महस्तश्च संयोज्यो रसवैद्यके ।। रस-७.२७ ।।

पताकाकुम्भपाथोजमत्स्यचापाङ्कपाणिकः ।
अनामाधस्थरेखाङ्कः स स्यादमृतहस्तवान् ।। रस-७.२८ ।।

अदेशिकः कृपामुक्तो लुब्धो गुरुविवर्जितः ।
कृष्णरेखाकरो वैद्यो दग्धहस्तः स उच्यते ।। रस-७.२९ ।।

निग्रहमन्त्रज्ञास्ते योज्या निधिसाधने ।। रस-७.३० ।।

बलिष्ठाः सत्यवन्तश्च रक्ताक्षाः कृष्णविग्रहाः ।
भूतत्रासनविद्याश्च ते योज्या बलिसाधने ।। रस-७.३१ ।।

निर्लोभाः सत्यवक्तारो देवब्राह्मणपूजकाः ।
यमिनः पथ्यभोक्तारो योजनीया रसायने ।। रस-७.३२ ।।

धनवन्तो वदान्याश्च सर्वोपस्करसंयुताः ।
गुरुवाक्यरता नित्यं धातुवादेषु ते शुभाः ।। रस-७.३३ ।।

तत्तदौषधनामज्ञाः शुचयो वञ्चनोज्झिताः ।
नानाविषयभाषाज्ञास्ते मता भेषजाहृतौ ।। रस-७.३४ ।।

शुचीनां सत्यवाक्यानामास्तिकानां मनस्विनाम् ।
संदेहोज्झितचित्तानां रसः सिध्यति सर्वदा ।। रस-७.३५ ।।

दशाष्टक्रियया सिद्धो रसोऽसौ साधकोत्तमः ।
हा रसो नष्टमित्युक्त्वा सेवेतान्यत्र तं रसम् ।। रस-७.३६ ।।

रससिद्धो भवेन्मर्त्यो दाता भोक्ता न याचकः ।
जरामुक्तो जगत्पूज्यो दिव्यकान्तिः सदा सुखी ।। रस-७.३७ ।।

# रसरत्नसमुच्चय : अध्याय 08

https://sa.wikisource.org/s/80r
कथ्यते सोमदेवेन मुग्धवैद्यप्रबुद्धये ।
परिभाषा रसेन्द्रस्य शास्त्रैः सिद्धैश्च भाषिता ।। रस-८.१ ।।

#### धन्वन्तरिभाग

अर्धं सिद्धरसस्य तैलघृतयोर्लेहस्य भागोऽष्टमः संसिद्धाखिललोहचूर्णवटकादीनां तथा सप्तमः ।
यो दीयेत भिषग्वराय गदिभिर्निर्दिश्य धन्वन्तरिम् सर्वारोग्यसुखाप्तये निगदितो भागः स धन्वन्तरेः ।। रस-८.२ ।।

#### रुद्रभाग (डेf.)

भैषज्यक्रीणितद्रव्यभागोऽप्य् एकादशो हि यः ।
वणिग्भ्यो गृह्यते वैद्यै रुद्रभागः स उच्यते ।। रस-८.३ ।।

#### विश्वासघातक (बद् फ्य्सिचिअन्/अल्छेमिस्त्)

प्रगृह्याधिकरुद्रांशं योऽसमीचीनम् औषधम् ।
दापयेल्लुब्धधीर् वैद्यः स स्याद् विश्वासघातकः ।। रस-८.४ ।।

#### कज्जली

धातुभिर् गन्धकाद्यैश्च निर्द्रवैर् मर्दितो रसः ।
सुश्लक्ष्णः कज्जलाभोऽसौ कज्जलीत्यभिधीयते ।। रस-८.५ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ कज्जलीलक्षणमाह धातुभिरिति ।। रसटी-८.५;१
- धातवश्च ।
- स्वर्णं रूप्यं च ताम्रं च रङ्गं जसदमेव च ।
- सीसं लोहं च सप्तैते धातवो गिरिसंभवाः ।
- इति ।। रसटी-८.५;२
- आद्यशब्देन हरितालमनःशिलादिसंग्रहः ।। रसटी-८.५;३
- चकारेणोपधातुसंग्रहः ।। रसटी-८.५;४
- तेषां भागो रससमो विषमो वा यथोपदेशं ग्राह्यः ।। रसटी-८.५;५
- सैव कज्जली द्रवं दत्त्वा मर्दिता चेद्रसपङ्कसंज्ञां लभते ।। रसटी-८.५;६
- कज्जल्युपयोगश्च रससिन्दूरादिविधानार्थं बोध्यः ।। रसटी-८.५;७
- रसपङ्कोपयोगं त्रैलोक्यसुन्दररसादिविधानार्थं वक्ष्यति ।। रसटी-८.५;८

#### रसपङ्क

सद्रवा मर्दिता सैव रसपङ्क इति स्मृता ।। रस-८.६ ।।

#### पिष्टी (१)

अर्कांशतुल्याद् रसतोऽथ गन्धान् निष्कार्धतुल्यात् त्रुटिशोऽभि खल्ले ।
अर्कातपे तीव्रतरे विमर्द्यात् पिष्टी भवेत् सा नवनीतरूपा ।। रस-८.७ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ पिष्टीलक्षणमाह अर्कांशेति ।। रसटी-८.७;१
- निष्कार्धतुल्यान्निष्कार्धरूपभागमिताद् इत्यर्थः ।। रसटी-८.७;२
- गन्धकाद् अर्कांशतुल्याद् रसतोऽर्कशब्दो द्वादशसंख्याबोधकः ।। रसटी-८.७;३
- तत्संख्याका येऽंशा भागा निष्कार्धात्मका भागास्तत्तुल्याद् रसात् पारदात् ।। रसटी-८.७;४
- निष्कार्धेत्युपलक्षणं गृहीतकिंचिन्मानस्य ।। रसटी-८.७;५
- तेन गन्धकस्य यो भागस्ततो द्वादशगुणितः पारदभागोऽत्र ग्राह्य इत्यर्थः ।। रसटी-८.७;६
- यथोक्तभागम् उभयं पृथग्गृहीत्वा तीव्रेऽर्कातपे लोहे खल्वे त्रुटिश ईषन्मानेन पुनः पुनर्दत्त्वा मर्दनान्नवनीतरूपा मृदुला नवनीताख्या च पिष्टी भवति ।। रसटी-८.७;७
- अत्र नवनीताख्यो गन्धको भक्ष्यः पारदश्च भक्षकः ।। रसटी-८.७;८
- स तु नानारूपपिष्टीषु समान एव ।। रसटी-८.७;९
- अतो भक्ष्यनाम्ना भेदबोधकेनेयं नवनीताख्येत्यभिधीयते ।। रसटी-८.७;१०
- अस्या नामान्तरं गन्धकपिष्टीति ।। रसटी-८.७;११

### पिष्टी (२)

खल्ले विमर्द्य गन्धेन दुग्धेन सह पारदम् ।
पेषणात् पिष्टतां याति सा पिष्टीति मता परैः ।। रस-८.८ ।।

### पातनपिष्टी

चतुर्थांशसुवर्णेन रसेन घृष्टिषष्टिका ।
भवेत् पातनपिष्टी सा रसस्योत्तमसिद्धिदा ।। रस-८.९ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ पातनपिष्टीलक्षणमाह चतुर्थांशेति ।। रसटी-८.९;१
- चतुर्थांशं शुद्धं स्वर्णचूर्णं पारदमध्ये प्रक्षिप्य तप्तलोहखल्वेऽम्लरसेन जम्बीरादिजेन यामपर्यन्तं द्वियामपर्यन्तं वा मर्दनेन संजाता चूर्णरूपा सा हेमपिष्टिकापि पातनोपयोगेन सिद्धिकरत्वात् पातनपिष्टिर् इत्यभिधीयते ।। रसटी-८.९;२
- तादृशीं पिष्टिं कृत्वा पातनायन्त्रेऽधस्थपात्रान्तस्तल ऊर्ध्वभाजने वा लिम्वा प्रहरचतुष्टयपर्यन्तम् अग्नियोगेनोर्ध्वं पारदं पातयेत् ।। रसटी-८.९;३
- तदनन्तरं पारदात् पृथग्भूत्वाधोभागस्थतत्स्वर्णचूर्णम् ऊर्ध्वलग्नपारदं च यन्त्राद् बहिर्निष्कास्यैकीकृत्य पुनस्तप्तलोहखल्वेऽम्लेन रसेन पूर्ववन्मर्दयित्वा पूर्ववत् पातयेत् ।। रसटी-८.९;४
- एवं शतधा पातनेन क्षीणो गतिरहितो निर्दोषः पारदः स्थिरोऽग्निसहो भवति ।। रसटी-८.९;५
- ततश्च बीजादिजारणक्रमेणाल्पायासेनैव देहलोहकरत्वरूपोत्तमसिद्धिप्रदश्च भवतीत्यर्थः ।। रसटी-८.९;६

### कृष्टी

रूप्यं वा जातरूपं वा रसगन्धादिभिर्हतम् ।
समुत्थितं च बहुशः सा कृष्टी हेमतारयोः ।। रस-८.१० ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- जातरूपं सुवर्णम् ।। रसबोध-८.१०;१

- समुत्थितम् इति अन्तर्भूतण्यर्थप्रयोगस् तेन समुत्थापितं शोषितमित्यर्थ ऊर्ध्वपातनायन्त्रे साधितमित्यर्थो वा ।। रसबोध-८.१०;२
- सा उत्थापनक्रिया ।। रसबोध-८.१०;३
- कृष्टीति ।। रसबोध-८.१०;४
- स्वर्णरौप्ययोः सा क्रिया कृष्टीति बोध्यम् ।। रसबोध-८.१०;५
- रसादिभिः सह स्वर्णं वा रौप्यं वा केनचिन्मारकद्रव्येण संमर्द्य बहुशः आतपे शोषयेद् अथवा रसगन्धादिभिर्मारितं स्वर्णं रौप्यं वा बहुवारम् ऊर्ध्वपातनयन्त्रेण समुत्थापयेत् सा क्रिया कृष्टी बोध्या ।। रसबोध-८.१०;६

पिष्टीं क्षिपेत् सुवर्णान्तर् न वर्णो हीयते तया ।। रस-८.११ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- पूर्वरीत्या कृतया सुवर्णरौप्ययोर् अन्यतरकृष्ट्या सह सुवर्णं संमर्द्य पुटनेन स्वर्णस्य वर्णान्यता न जायते ।। रसबोध-८.११;१

स्वर्णकृष्ट्या कृतं बीजं रसस्य परिरञ्जनम् ।। रस-८.१२ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- बीजं निर्वापणविशेषेण इत्यादिना वक्ष्यमाणलक्षणो धातुविशेषाणां विचित्रसंस्कारविशेषः ।। रसबोध-८.१२;१
- उक्तप्रकारेणैव कृतस्वर्णकृष्टीनिर्मितं बीजं पारदं रञ्जयेत् ।। रसबोध-८.१२;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथ कृष्टीलक्षणमाह रूप्यमिति ।। रसटी-८.१२;१
- जातरूप्यं सुवर्णम् ।। रसटी-८.१२;२
- आदिशब्देन माक्षिकहिङ्गुलादिपरिग्रहः ।। रसटी-८.१२;३
- तैर्मारितं पुनः पुनः पञ्चमित्रसंस्कारेण प्रकृत्यवस्थापन्नं कृतम् ।। रसटी-८.१२;४
- एवं सप्तवारं दशवारं वोत्थापितस्वर्णतारं च क्रमेण हेमकृष्टी तारकृष्टी चाभिधीयते ।। रसटी-८.१२;५
- रसगन्धादियोगेन मलव्यपोहनाद् उज्ज्वलम् उत्कृष्टं सारूप्यं स्वर्णं तारं चेत्यर्थः ।। रसटी-८.१२;६
- तां स्वर्णकृष्टीं द्रुते हीनवर्णस्वर्णे क्षिपेत् ।। रसटी-८.१२;७
- तेन क्षेपेण वर्णो न हीयते तत्स्वर्णं हीनवर्णं न दृश्यते ।। रसटी-८.१२;८
- पूर्णवर्णं दृश्यत इत्यर्थः ।। रसटी-८.१२;९
- एवमेव हीनवर्णतारे तारकृष्ट्याः क्षेपेणापि तारं पूर्णवर्णं भवतीत्यर्थोऽपि बोध्यः ।। रसटी-८.१२;१०
- कृतं कल्पितं संस्कृतम् इत्यर्थः ।। रसटी-८.१२;११
- बीजं शुद्धं स्वर्णोत्पादकं लोहधात्वादिपारदस्य पीतवर्णत्वकरं भवेत् ।। रसटी-८.१२;१२
- रसहृदयेऽष्टमावबोधे पारदस्य कृष्टिमपि पूज्यपादा उदाजहुः ।। रसटी-८.१२;१३

### वरलोहकम्

ताम्रं तीक्ष्णसमायुक्तं द्रुतं निक्षिप्य भूरिशः ।
सगन्धलकुचद्रावे निर्गतं वरलोहकम् ।। रस-८.१३ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वरलोहप्रस्तुतप्रकारमाह ताम्रमिति ।। रसबोध-८.१३;१
- तीक्ष्णसमायुक्तं तीक्ष्णलौहसंयुक्तम् ।। रसबोध-८.१३;२

- भूरिशः सप्तवारान् इत्यर्थः ।। रसबोध-८.१३;३
- तीक्ष्णलौहं ताम्रं च अग्निसंतापेन द्रवीकृत्य गन्धकचूर्णमिश्रितलकुचरसे निक्षिपेद् घनीभूतं तद्द्वयमुत्तोल्य पुनः द्रावयित्वा पूर्वरसे निक्षिपेद् एवं सप्तवारान् ।। रसबोध-८.१३;४
- द्रुतमित्यत्र मृतम् इति पाठो मृतं भस्मीभूतम् ।। रसबोध-८.१३;५
- एवं प्रक्रियया तस्माद् उत्कृष्टलौहं निर्गमिष्यतीति ।। रसबोध-८.१३;६

### हेमरक्ती

तेन रक्तीकृतं स्वर्णं हेमरक्तीत्युदाहृतम् ।। रस-८.१४ ।।

निक्षिप्ता सा द्रुते स्वर्णे वर्णोत्कर्षविधायिनी ।
तारस्य रञ्जनी चापि बीजरागविधायिनी ।। रस-८.१५ ।।

### ताररक्ती

एवमेव प्रकर्तव्या ताररक्ती मनोहरा ।
रञ्जनी खलु रूप्यस्य बीजानामपि रञ्जनी ।। रस-८.१६ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ हेमरक्तीताररक्त्योर् लक्षणं फलं चाह ताम्रमिति ।। रसटी-८.१६;१
- तीक्ष्णलोहेन समभागेन संयुक्तम् एकीकृतं ताम्रं बहुवारं द्रुतं कृत्वा गन्धकसहिते लकुचरसे निर्वापयेत् ।। रसटी-८.१६;२
- तद्वल्लोहमिति ख्यातं तारस्य रञ्जनी द्रुते तस्मिन्निक्षेपेणेत्यर्थः ।। रसटी-८.१६;३
- ताररक्तीकरणार्थं तु वरलोहेन तारम् एव धमनेनैकीकृत्य रक्तीकृतं कार्यं सापि रूप्यस्य बीजानां च रञ्जनी रक्तवर्णोत्पादिका ।। रसटी-८.१६;४

### दल

मृतेन वा बद्धरसेन वान्यल्लोहेन वा साधितमन्यलोहम् ।
सितं च पीतत्वमुपागतं तद्दलं हि चन्द्रानलयोः प्रसिद्धम् ।। रस-८.१७ ।।

मासकृतबद्धेन रसेन सह योजितम् ।
साधितं वान्यलोहेन सितं पीतं च तद्दलम् ।। रस-८.१८ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- संप्रति तारदलस्य स्वर्णदलस्य च लक्षणमाह मृतेनेति ।। रसटी-८.१८;१
- मृतेन भस्मीभूतेन पारदेन येन केनचिद्द्रव्येण बद्धो यः पारदस्तेन बद्धपारदेन मृतेन लोहेन वा साधितं संस्कृतम् अन्यलोहं विजातीयं लोहं सितत्वम् उपागतं प्राप्तं श्वेतवर्णविशिष्टम् अथवा पीतत्वम् उपागतं प्राप्तं पीतवर्णविशिष्टं भवेत् ।। रसटी-८.१८;२
- तत्क्रमेण चन्द्रदलम् अनलदलं स्वर्णदलं शास्त्रे प्रसिद्धम् ।। रसटी-८.१८;३
- अनलः स्वर्णम् ।। रसटी-८.१८;४
- कृत्रिमरजतं कृत्रिमस्वर्णं चेत्यर्थः ।। रसटी-८.१८;५
- रवा इति नाम्ना लोके प्रसिद्धम् ।। रसटी-८.१८;६

### शुल्बनाग

माक्षिकेण हतं ताम्रं दशवारं समुत्थितम् ।
तद्वद्विशुद्धनागं हि द्वितयं तच्चतुष्पलम् ।। रस-८.१९ ।।

नीलाञ्जनहतं भूयः सप्तवारं समुत्थितम् ।
इति संसिद्धमेतद्धि शुल्वनागं प्रकीर्त्यते ।। रस-८.२० ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- शुल्वनागमाह माक्षिकेणेति ।। रसबोध-८.२०;१
- स्वर्णमाक्षिकेण सह मारितं ताम्रं तथा सीसकं च पृथक् पृथक् दशवारं समुत्थापितं कृत्वा तयोः प्रत्येकं चतुष्पलं आदाय एकीकुर्यात्ततः तदुभयं भूयः नीलाञ्जनेन सह भस्मीकृत्य सप्तवारं समुत्थापयेद् एवं च तयोः शुल्वनाग इति संज्ञा जायते इति ।। रसबोध-८.२०;२

$

- टीका रससरत्नसमुच्चयटीका:
- संप्रति शुल्बनागलक्षणमाह माक्षिकेणेति ।। रसटी-८.२०;१
- समभागमाक्षिकेण मारितं ताम्रं पञ्चमित्रसंस्कारेण समुत्थितं कुर्यात् ।। रसटी-८.२०;२
- एवं दशवारं कृत्वा तद्वत्ताम्रवन्माक्षिकेणैव मारितं विशुद्धं नागं तदुभयं मिथः समं चतुष्पलमितं गृहीत्वा पुनर् नीलाञ्जनेन समभागेन मारितं पञ्चमित्रसंस्कारेण पुनरुत्थापितं कुर्यात् ।। रसटी-८.२०;३
- एवं सप्तवारं मारणपूर्वकोत्थापनेन संशुद्धम् एतद्द्रव्यद्वंद्वं रसशास्त्रे शुल्बनागमिति कीर्तितम् ।। रसटी-८.२०;४

साधितस्तेन सूतेन्द्रो वदने विधृतो नृणाम् ।
निहन्ति मासमात्रेण मेहव्यूहं विशेषतः ।। रस-८.२१ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- तदुपयोगमाह साधित इति ।। रसटी-८.२१;१
- तच्चूर्णं पारदेन समभागेन शुद्धेन सहाजमूत्रेण संमर्द्य वज्रमूषायां ध्मानेन जातं खोटं शोधनगणेन सह ध्मानाच्छुद्धं कृत्वा तं खोटबद्धं पारदं मुखमध्ये यो धारयेत्तस्य मेहसमूहनाशो भवेत् ।। रसटी-८.२१;२

पथ्याशनस्य वर्षेण पलितवलिभिः सह ।
गृध्रदृष्टिर्लसत्पुष्टिः सर्वारोग्यसमन्वितः ।। रस-८.२२ ।।

### पिञ्जरी

लोहं लोहान्तरे क्षिप्तं ध्मातं निर्वापितं द्रवे ।
पाण्डुपीतप्रभं जातं पिञ्जरीत्यभिधीयते ।। रस-८.२३ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- पिञ्जरीलक्षणमाह लोहमिति ।। रसटी-८.२३;१
- यथा जसदं मूषायां ताम्रे निक्षिप्य ध्मानेनैकीभूतं पत्रजायौषधीरसे पीतवर्गजरसे वा निक्षेपात्पित्तलं भवति तद्वदन्यदपि तादृग्वर्णं संकीर्णलोहं पिञ्जरीवाच्यं भवति ।। रसटी-८.२३;२
- सा ओषधीपत्रजा शब्दवाच्या ।। रसटी-८.२३;३
- यस्या उत्पत्तौ कारणं बीजस्थाने पत्रमेव भवति ।। रसटी-८.२३;४
- चीरितपत्त्रा ह्रस्वक्षुपविशेषरूपा चेयमुपवन उत्पद्यते ।। रसटी-८.२३;५

### चन्द्रार्क

भागाः षोडश तारस्य तथा द्वादश भास्वतः ।
एकत्रावर्तितास्तेन चन्द्रार्कमिति कथ्यते ।। रस-८.२४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- चन्द्रार्कसंज्ञामाह भागा इति ।। रसबोध-८.२४;१
- भास्वतः ताम्रस्य ।। रसबोध-८.२४;२
- एकत्रावर्तिताः एकस्मिन्नेव पात्रे युगपद् द्रवीकृत्य आलोडिताः ।। रसबोध-८.२४;३
- तेन तथा आलोडनेन ।। रसबोध-८.२४;४

$

- टीका रससरत्नसमुच्चयटीका:
- चन्द्रार्कं लक्षयति भागा इति ।। रसटी-८.२४;१
- आवर्तिता ध्मानेनैकीभूतरसरूपा इत्यर्थः ।। रसटी-८.२४;२
- भास्वतस्ताम्रस्य ।। रसटी-८.२४;३
- चन्द्रार्कस्य खोटबद्धरसेन वेधात्कनकोत्पत्तिश्च रससारेऽभिहिता ।। रसटी-८.२४;४

### निर्वापणम्

साध्यलोहेऽन्यलोहं चेत्प्रक्षिप्तं वङ्कनालतः ।
निर्वापणं तु तत्प्रोक्तं वैद्यैर्निर्वाहणं खलु ।। रस-८.२५ ।।

क्षिपेन्निर्वापणं द्रव्यं निर्वाह्ये समभागिकम् ।
आवाह्यं वापनीये च भागे दृष्टे च दृष्टवत् ।। रस-८.२६ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ निर्वाहलक्षणमाह साध्यलोह इति ।। रसटी-८.२६;१
- यस्यां क्रियायां साध्यलोहे निर्वाह्ये लोहे द्रुते सति तस्मिंस्तत्रान्यलोहं वङ्कनालतः प्रक्षिप्तं वङ्कनालजध्मानेनैव द्रुतं कृत्वा प्रक्षिप्तं भवतीत्यर्थः ।। रसटी-८.२६;२
- वङ्कनालेत्युक्त्या भस्त्रादिजध्मानव्यावृत्तिः ।। रसटी-८.२६;३
- निर्वाहणम् एकीकरणमिति यावत् ।। रसटी-८.२६;४
- निर्वापणं निर्वाहणं चेत्यनर्थान्तरम् ।। रसटी-८.२६;५
- एकीकरणार्थकनिर्वापणशब्दप्रयोगस्तु संप्रति नोपलभ्यते ।। रसटी-८.२६;६
- किंतु सर्वत्र तदर्थं निर्वाहणशब्द एव प्रयुक्तो दृश्यते ।। रसटी-८.२६;७
- एतच्च निर्वाहणं प्रायो बीजादिसंस्कारार्थं क्रियते ।। रसटी-८.२६;८
- यथा पारदोदरे बीजानां गर्भद्रावणयोग्यतासंपादनार्थं निर्वाहणसंस्कारं व्याजहार रसहृदये ।
- मृतनागं मृतवङ्गं मृतवरशुल्बं मृतं तथा तीक्ष्णम् ।
- एकैकं हेमवरे शतनिर्व्यूढं द्रवति गर्भे च ।। रसटी-८.२६;९
- इति ।। रसटी-८.२६;१०
- एकगुणस्वर्णे नागाद्यन्यतमं शतगुणनिर्वाहितं कार्यम् इत्यर्थः ।। रसटी-८.२६;११
- एवं संस्कृतं स्वर्णं वरबीजं भवति ।। रसटी-८.२६;१२
- अथ निर्वापणद्रव्यभागानुक्तिस्थाने तद्द्रव्यस्य कियद्भागप्रक्षेपः कार्यस्तदाह क्षिपेदिति ।। रसटी-८.२६;१३
- क्षिपेन्निर्वाहयेदित्यर्थः ।। रसटी-८.२६;१४
- क्षेपसामान्याद् अनुक्तावावापद्रव्यमानम् अप्याह आवाप्यमिति ।। रसटी-८.२६;१५
- आवापलक्षणम् अस्मिन्नेवाध्याये वक्ष्यति ।। रसटी-८.२६;१६
- वापनीये लोहाद्ये द्रुते द्रव्ये ।। रसटी-८.२६;१७

- तत्र भागे दृष्ट उक्ते तु दृष्टवदुक्तभागमितमेव तन्निर्वाहणद्रव्यम् आवापद्रव्यं च क्षिपेत् ।। रसटी-८.२६;१८

## वारितरम्

मृतं तरति यत्तोये लोहं वारितरं हि तत् ।। रस-८.२७ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- मृतलोहस्य बोधकानां विविधपारिभाषिकशब्दानां लक्षणान्याह मृतमिति ।। रसटी-८.२७;१
- तल्लोहं वारितरम् उच्यते यन्मृतं सत्तोये प्रक्षिप्तं तरतीति ।। रसटी-८.२७;२

## रेखपूर्ण

अङ्गुष्ठतर्जनीघृष्टं यत् तद् रेखान्तरे विशेत् ।
मृतलोहं तदुद्दिष्टं रेखापूर्णाभिधानतः ।। रस-८.२८ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- रेखापूर्णलौहलक्षणमाह अङ्गुष्ठेति ।। रसबोध-८.२८;१
- तद्रेखान्तरे तयोः तर्जन्यङ्गुष्ठयोः रेखान्तरे रेखावकाशे अङ्गुष्ठतर्जनीभ्यां घर्षणे कृते यत्र लौहे तयोरङ्गुल्योः रेखासमूहः अङ्कितो भवेदित्यर्थः ।। रसबोध-८.२८;२

$

- टीका रससरत्नसमुच्चयटीका:
- तल्लोहं रेखापूर्णमुच्यते यन्मृतम् अङ्गुष्ठतर्जनीमध्ये संमर्दितं तयोः सूक्ष्मरेखान्तरं प्रविशेदिति ।। रसटी-८.२८;१

## अपुनर्भव

गुडगुञ्जासुखस्पर्शमध्वाज्यैः सह योजितम् ।
नायाति प्रकृतिं ध्मानाद् अपुनर्भवम् उच्यते ।। रस-८.२९ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- निरुत्थलौहलक्षणमाह गुडेति ।। रसबोध-८.२९;१
- सुखस्पर्शः टङ्कणं निरुत्थीकारकमित्रपञ्चकवर्गे टङ्कणशब्दग्रहणात् यदुक्तं रसेन्द्रसारे ।
- मधुसर्पिस्तथा गुञ्जा टङ्कणं गुग्गुलुस्तथा ।
- मित्रपञ्चकमेतत्तु गणितं धातुमेलने ।। रसबोध-८.२९;२
- इति ।। रसबोध-८.२९;३
- मित्रपञ्चकोक्तगुग्गुलोः कार्यमत्र गुडेन संपादनीयमिति ।। रसबोध-८.२९;४
- प्रकृतिं स्वरूपम् ।। रसबोध-८.२९;५
- अपुनर्भवम् अपुनरुत्थानं निरुत्थमिति यावत् ।। रसबोध-८.२९;६

$

- टीका रससरत्नसमुच्चयटीका:
- अथ पूर्णमृतं तल्लोहम् अपुनर्भवम् उच्यते ।। रसटी-८.२९;१
- यत् प्रत्येकं समभागैर् गुडादिभिः समस्तैः सह मिश्रितं पिण्डीकृतं मूषामध्ये प्रक्षिप्य ध्मानेन प्रकृतिं पूर्वावस्थाम् आमलोहभावं न प्राप्नुयादिति ।। रसटी-८.२९;२

### ऊनम, उत्तम

तस्योपरि गुरु द्रव्यं धान्यं चोपनयेद्ध्रुवम् ।
हंसवत् तीर्यते वारिण्युत्तमं परिकीर्तितम् ।। रस-८.३० ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथोत्तमाख्यमृतलोहलक्षणमाह यद्वा पूर्णमृतं यल्लोहं वारितरं स्वपृष्ठ उपनीतं धान्यं धारयति ।। रसटी-८.३०;१
- धान्यभारं सहत इत्यर्थः ।। रसटी-८.३०;२
- तत्र लोहे तद्धान्यं कथं तरति तदुपमयाह यथा जले हंसविशेषास्तरन्ति तद्वत् तथा धान्यभारसहं तन्मृतलोहम् उत्तमम् इति नाम्ना शास्त्रे कीर्तितम् ।। रसटी-८.३०;३
- अत्र बहुषु पुस्तकेषु ऊनमं परिकीर्तितम् इत्यपि पाठः ।। रसटी-८.३०;४
- तस्य स्वयम् ऊनम् ऊनभारं लघ्वपि यल्लोहं स्वापेक्षया गुरुद्रव्यं गुरुधान्यं वा माति सहत इति व्युत्पत्त्या क्लिष्टार्थबोधकः स पाठो नातिप्रियः ।। रसटी-८.३०;५

### निरुत्थापुनर्भव

रौप्येण सह संयुक्तं ध्मातं रौप्येण चेल् लगेत् ।
तदा निरुत्थमित्युक्तं लोहं तद् अपुनर्भवम् ।। रस-८.३१ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- निरुत्थस्य लक्षणान्तरमाह रौप्येणेति ।। रसबोध-८.३१;१
- रौप्यं लौहं च एकत्र संस्थाप्य भस्त्रया ध्मापनेन यदि परस्परं मिश्रीभवेत् तदापि निरुत्थं ज्ञेयम् ।। रसबोध-८.३१;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथापुनर्भवाख्यमृतलोहस्यैव निरुत्थसंज्ञाप्रापकं लक्षणमाह रौप्येणेति ।। रसटी-८.३१;१
- संयुक्तं मेलापकमध्वाज्यं दत्त्वा मूषायां संयोजितं न लगेत् न सज्जेतैकीभावं न प्राप्नुयाद् इत्यर्थः ।। रसटी-८.३१;२
- एकीभावश्च रौप्यमानवृद्ध्या बोध्यः ।। रसटी-८.३१;३
- स्पष्टीकृतं चैतद् रससंकेतकलिकायाम् ।
- लोहमध्वाज्यगं तारं स्वप्रमाणं भवेद्यदा ।
- तदा लोहं निरुत्थं स्यादन्यथा साधयेत्पुनः ।। रसटी-८.३१;४
- इति ।। रसटी-८.३१;५
- तारं शुद्धतारम् ।। रसटी-८.३१;६

### बीज

निर्वापणविशेषेण तत्तद्वर्णं भवेद्यदा ।
मृदुलं चित्रसंस्कारं तद्बीजमिति कथ्यते ।। रस-८.३२ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- बीजमाह निर्वापणेति ।। रसबोध-८.३२;१

- पूर्वनिर्दिष्टसाध्यलोहे तत्तल्लोहमारकान्यलोहनिक्षेपरूपनिर्वाहणाख्यसंस्कारविशेषेण यदा साध्यलोहं प्रक्षिप्तलौहवर्णं भवेत् तदा मृदुलं सुखस्पर्शं चित्रसंस्कारम् आहितापूर्वगुणान्तरं तत् बीजमिति ज्ञेयम् ।। रसबोध-८.३२;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथ जारणासंस्कारे प्रक्षेपार्हस्य बीजस्य लक्षणमाह निर्वाहणेति ।। रसटी-८.३२;१
- निर्वाह्यते प्रक्षेपेणैकीक्रियतेऽनेनेति व्युत्पत्त्या निर्वाहणशब्देन निर्वाहकं द्रव्यं ग्राह्यम् ।। रसटी-८.३२;२
- प्रक्षेपेण गुणविशेषोत्पादनपूर्वकैकीभावसामान्याच्च तेन शब्देन वापनद्रव्यस्यापि संग्रहः कार्यः ।। रसटी-८.३२;३
- एतदभिप्रायेणैव निर्वापणविशेषेणेत्यपि पाठो दृश्यते ।। रसटी-८.३२;४
- तेन निर्वाहणेन निर्व्यूढं यद्बीजोपादानरसलोहादि तत्तद्वर्णं निर्वाहणद्रव्यस्य समानवर्णं शास्त्रनिर्दिष्टवर्णं च भवति ।। रसटी-८.३२;५
- वापनद्रव्येण मृदु च भवेत्तथा सत्त्वभस्मोत्पादकविधिभ्यां च प्राप्तमार्दवम् ।। रसटी-८.३२;६
- तथा कृतो विचित्रसंस्कारो गर्भद्रावको रक्तवर्गकषाये निषेचनरूपो मेलापकद्रव्यसंयोगादिश्च यस्येत्येवंगुणविशिष्टं रसशास्त्रे सिद्धबीजमित्यभिधीयते ।। रसटी-८.३२;७
- बीजं द्विविधं पीतं सितं चेति भेदात् ।। रसटी-८.३२;८
- तदपि प्रत्येकं द्विविधम् ।। रसटी-८.३२;९
- अकृत्रिमं कृत्रिमं च ।। रसटी-८.३२;१०
- यद्धि खनिसम्भूतं शुद्धं स्वर्णं रजतं वा तद् अकृत्रिमम् ।। रसटी-८.३२;११
- यत्तु धातुरसोपरससंयोगक्रियाविशेषजनितस्वर्णरजतोत्पादनयोग्यतासंपन्नं पीतं स्वर्णरीत्यादि श्वेतं वङ्गादि तत्कृत्रिमम् इत्याचक्षते ।। रसटी-८.३२;१२
- तदपि प्रत्येकं द्विविधम् ।। रसटी-८.३२;१३
- शुद्धं मिश्रं च ।। रसटी-८.३२;१४
- शुद्धमेकैकं मिश्रं मिथः संकीर्णम् ।। रसटी-८.३२;१५
- पुनरपि सर्वम् एतत्त्रिधा भवति ।। रसटी-८.३२;१६
- कल्पितं रञ्जितं पक्वं च ।। रसटी-८.३२;१७
- तत्र तत्कल्पितशब्दवाच्यं यच्छुद्धरसोपरसशुद्धमारितं मिथः संयुक्तं मिश्रं वा लोहादिद्वंद्वीकृतम् एकैकं सत्त्वकरणविधिना निर्वाहणेन द्वंद्वमेलापकविधिना च मिलितं शुद्धं जातमार्दवं तद् एवैकीभावं व्रजति च रक्तादिवर्गेषु सेचनेन प्राप्तवर्णं रञ्जितसंज्ञकं भवति ।। रसटी-८.३२;१८
- निर्वाहणेन हेमशेषकृतं तारशेषकृतं वा यद्बीजं भूधरयन्त्रादिषु पुटितं तत्पक्वबीजं वदन्ति ।। रसटी-८.३२;१९
- एवं चेदमुक्तलक्षणं सर्वबीजानां संग्राहकं बोध्यम् ।। रसटी-८.३२;२०
- अत्र रसोपरसानां शोधनं तु सूर्यावर्तादिगणेन कुर्यात् ।। रसटी-८.३२;२१
- शशरक्तभावनया कान्तं शुध्यति ।। रसटी-८.३२;२२
- सौवर्णं राजतं पत्रं च लवणक्षाराम्लरविस्नुहीक्षीरैर् लिप्तं ध्मातं पश्चान्निर्गुण्डीरसे बहुवारं निषेचितं सच्छुध्यति ।। रसटी-८.३२;२३
- नागवङ्गघोषताम्राणि तु प्रतप्तानि निर्गुण्डीरससेकैस् तन्मूलरजःप्रवापैश्च शुध्यन्ति ।। रसटी-८.३२;२४
- सर्वोऽपि लोहः प्रतप्तो माक्षीकदरदवापेन बहुवारं कृतेन शुध्यति ।। रसटी-८.३२;२५
- रसोपरसानां सत्त्वानि मूलोक्तविधिना पातयेत् ।। रसटी-८.३२;२६
- संप्रति बीजनिर्वाहणविधिं रसहृदयोक्तं वक्ष्यामि ।। रसटी-८.३२;२७

### उत्तरण

इदमेव विनिर्दिष्टं वैद्यैरुत्तरणं खलु ।
संस्पृष्टलोहयोरेकलोहस्य परिनाशनम् ।। रस-८.३३ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- उत्तरणमाह इदमिति ।। रसबोध-८.३३;१
- इदं संसृष्टलोहयोर् इत्यादिना वक्ष्यमाणरूपम् इत्यर्थः ।। रसबोध-८.३३;२
- उत्तरणमिति संज्ञाविशेषः ।। रसबोध-८.३३;३
- संसृष्टेति मिश्रितलौहयोः एकलोहस्य परिनाशनं ध्मापनादिक्रियाविशेषेण एकस्मात् अन्यत् पृथक्कृत्य भस्मीकरणम् एकस्माद् अन्यस्य बहिर्निष्काशनं वा ।। रसबोध-८.३३;४

### ताडन

प्रध्मातं वङ्कनालेन तत्ताडनमुदाहृतम् ।। रस-८.३४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- ताडनमाह प्रध्मातमिति ।। रसबोध-८.३४;१
- तत् उत्तरणक्रियानिष्पन्नं संसृष्टलौहयोरेकलोहम् ।। रसबोध-८.३४;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथ ताडनसंज्ञामाह संसृष्टेति ।। रसटी-८.३४;१
- परिसाधनं ध्मानेनावशेषकारकं यद्वङ्कनालेन प्रध्मातं प्रकर्षेण ध्मानं क्रियते तद्रसशास्त्रे ताडनशब्देन कथितम् ।। रसटी-८.३४;२
- यथा घोषाद्वङ्गं विनाश्य ताम्रस्यावशेषार्थं ध्मानं तच्च गाराकोष्ठ्यां कार्यम् ।। रसटी-८.३४;३

### धान्याभ्र

चूर्णाभ्रं शालिसंयुक्तं वस्त्रबद्धं हि काञ्जिके ।
निर्यातं मर्दनाद्वस्त्राद्धान्याभ्रमिति कथ्यते ।। रस-८.३५ ।।

### सत्त्व

क्षाराम्लद्रावकैर्युक्तं ध्मातमाकरकोष्ठके ।
यस्ततो निर्गतः सारः सत्त्वमित्यभिधीयते ।। रस-८.३६ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- सत्त्वमाह क्षारेति ।। रसबोध-८.३६;१
- क्षारः टङ्कणं लौहशोधकत्वात् अम्लः काञ्जिकादिकं द्रावकः गुञ्जाटङ्कणमध्वाज्यगुडाः द्रावकपञ्चकाः इत्युक्तस्वरूपः तैः ।। रसबोध-८.३६;२
- आकरकोष्ठिके कोष्ठिकायन्त्रे ।। रसबोध-८.३६;३
- सारः स्थिरांशः प्रसादभाग इति यावत् ।। रसबोध-८.३६;४

$

- टीका रससरत्नसमुच्चयटीका:
- सत्त्वलक्षणमाह क्षाराम्लेति ।। रसटी-८.३६;१
- क्षारो यवक्षारादिः ।। रसटी-८.३६;२
- अम्लं जम्बीररसादि ।। रसटी-८.३६;३
- द्रावकं गुडगुग्गुलुगुञ्जादि ।। रसटी-८.३६;४
- द्रावको गणो वक्ष्यमाणः ।। रसटी-८.३६;५
- पञ्चाजं पञ्चगव्यादि ।। रसटी-८.३६;६
- मत्स्यादिपिण्डीद्रव्यं च तद्युक्तं तेन पिण्डीकृतं रसोपरसादि द्रव्यम् ।। रसटी-८.३६;७
- आकरकोष्ठक आकरो वक्ष्यमाणः ।। रसटी-८.३६;८
- कोष्ठिका वर्णनस्थानग्रन्थः ।। रसटी-८.३६;९
- तत्रोक्ते योग्ये कोष्ठे कोष्ठयन्त्रेऽङ्गारकोष्ठ्यादौ च मूषायां प्रक्षिप्य यदा भस्त्रावङ्कनालादिना ध्मातं स्यात्तदा ततो द्रव्याद् द्रवरूपो यः सारो निर्गच्छति पृथगाकारेण निपतति तत्सत्त्वमुच्यते ।। रसटी-८.३६;१०

### (एक)कोलीसक

कोष्ठिकाशिखरापूर्णैः कोकिलैर् ध्मानयोगतः ।
आकण्ठमनुप्राप्तैर् एककोलीसको मतः ।। रस-८.३७ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- एककोलीसकमाह कोष्ठिकेति ।। रसबोध-८.३७;१
- कोष्ठिकायन्त्राग्रभागपर्यन्तम् अङ्गारैरापूर्य ध्मापनवशात् मारणीयद्रव्यैः मूषाकण्ठपर्यन्तमागतैः उपलक्षितो यत् कर्म एककोलीसकाख्यः क्रियाविशेषो मतः ।। रसबोध-८.३७;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथ ध्मानक्रियाया मानविशेषज्ञानार्थं कृतायाः कोलीसकसंज्ञाया लक्षणमाह कोष्ठिकाशिखरेति ।। रसटी-८.३७;१
- शिखरपर्यन्तं परिपूर्णकोकिलानां ध्मानेन मूषाकण्ठपर्यन्तं यदापचयो भवति तावद्ध्मानस्यैककोलीसक इति संज्ञा ।। रसटी-८.३७;२
- अस्या एव नालिशकेति पर्यायान्तरम् ।। रसटी-८.३७;३

### पस्सेन्देस् ाःोल्श् für ाःोल्श्कोह्ले

द्रावणे सत्त्वपाते च माधुकाः खादिराः शुभाः ।
दुर्द्रावे वंशजास्ते तु स्वेदने बादराः शुभाः ।। रस-८.३८ ।।

### हिङ्गुलाकृष्ट

विद्याधराख्ययन्त्रस्थाद् आर्द्रकद्रावमर्दितात् ।
समाकृष्टो रसो योऽसौ हिङ्गुलाकृष्ट उच्यते ।। रस-८.३९ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ हिङ्गुलाकृष्टरसमाह विद्याधरेति ।। रसटी-८.३९;१
- विद्याधरयन्त्रं द्विविधं निर्जलं सजलं च ।। रसटी-८.३९;२
- तत्र प्रथमं कनकसुन्दरप्रभृतिरसानाम् ऊर्ध्वभागे पुटनार्थम् उपयुज्यते ।। रसटी-८.३९;३
- तच्च न्युब्जोर्ध्वपात्रेण संपुटितम् ।। रसटी-८.३९;४
- यत्तु द्वितीयम् उत्तानपात्रघटितं तदत्र विद्याधरशब्देन ग्राह्यम् ।। रसटी-८.३९;५
- आर्द्रकमर्दिताद् इत्यस्याग्रे हिङ्गुलादिति शेषः ।। रसटी-८.३९;६

### घोषाकृष्ट

स्वल्पतालयुतं कांस्यं वङ्कनालेन ताडितम् ।
मुक्तरङ्गं हि तत्ताम्रं घोषाकृष्टम् उदाहृतम् ।। रस-८.४० ।।

---

- टीका रससरत्नसमुच्चयटीका:
- घोषाकृष्टस्य लक्षणमाह स्वल्पेति ।। रसटी-८.४०;१
- ताडितं परिध्मातम् ।। रसटी-८.४०;२
- अत्र तालः स्वल्पशब्देन कांस्यस्य चतुर्थांशेन ग्राह्यः ।। रसटी-८.४०;३

- रङ्गस्य ताम्रात्पृथग्भूत्वा विनाशार्थं तदुपयोगो बोध्यः ।। रसटी-८.४०;४

### वरनाग

तीक्ष्णनीलाञ्जनोपेतं ध्मातं हि बहुशो दृढम् ।
कृष्णं द्रुतद्रावं वरनागं तदुच्यते ।। रस-८.४१ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वरनागलक्षणमाह तीक्ष्णेति ।। रसबोध-८.४१;१
- अत्र विशेष्यपदोल्लेखाभावेऽपि वरनाग इति संज्ञाबलादेव तीक्ष्णनीलाञ्जनोपेतमित्यत्र नागमिति विशेष्यपदं शेषः बोध्यः ।। रसबोध-८.४१;२
- तीक्ष्णलौहनीलाञ्जनसंयुक्तं यत् सीसकं बहुवारं दृढम् आध्मातं सत् सुकोमलं कृष्णवर्णं द्रुतद्रावं च स्यात् तत् सीसकं वरनागं बोध्यम् ।। रसबोध-८.४१;३
- तीक्ष्णमिति पृथक् पाठे नीलाञ्जनं तीक्ष्णलौहं च इत्यर्थः ।। रसबोध-८.४१;४

$

- टीका रससरत्नसमुच्चयटीका:
- वरनागस्य लक्षणमाह तीक्ष्णमिति ।। रसटी-८.४१;१
- समभागनीलाञ्जनसंयुतं तीक्ष्णलोहं समभागेन टङ्कणं दत्वान्धमूषायां दृढं ध्मातं सद्यदा नागापेक्षयाप्यतिमृदु कृष्णवर्णं शीघ्रद्रावं च भवेत्तदैतद् वरनागम् उच्यते ।। रसटी-८.४१;२
- अर्कापामार्गकदलीभस्मतोयेन लोलयेत् ।। रसटी-८.४१;३
- तद्वस्त्रगालितं ग्राह्यं स्वच्छतोयं तदातपे ।। रसटी-८.४१;४
- मृदुकृष्टं द्रुतद्रावमिति पाठे ध्मात्वा मूषातः कृष्टं बहिराकृष्टं शीतं सदपि संजातमार्दवम् अग्नियोगेन शीघ्रद्रावं च भवेदित्यर्थः ।। रसटी-८.४१;५
- नागाद्वरं श्रेष्ठम् एतद् वरनागम् इति ।। रसटी-८.४१;६
- उत्तरपदस्य पूर्वनिपातेन सिद्धोऽयं शब्दः ।। रसटी-८.४१;७
- अस्योपयोगं त्वस्थिराणां खर्परादिसत्त्वानां स्थिरीकरणार्थं पूज्यपादा उदाजह्रू रससारे ।। रसटी-८.४१;८
- तत्प्रकारस्तु द्वितीयाध्यायेऽत्र रसकसत्त्वविधिव्याख्यायां प्रकाशित एव ।। रसटी-८.४१;९
- नागं नीलाञ्जनोपेतमिति पाठस्तु प्रामादिक एव ।। रसटी-८.४१;१०
- सत्त्वानां हि स्थिरीकरणे नागस्यानुपयोगादिति बोध्यम् ।। रसटी-८.४१;११

### उत्थापन

मृतस्य पुनरुद्धृतिः सम्प्रोक्तोत्थापनाख्यया ।। रस-८.४२ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- उत्थापनशब्दार्थमाह मृतस्येति ।। रसटी-८.४२;१
- पारदरसोपरसलोहादीनाम् अतिमूर्छितानां प्राकृतगुणक्रियासहितानां वा पुनरुद्धृतिः पुनः पूर्ववत् स्थानापन्नत्वम् उत्थापनम् इत्यभिधीयते ।। रसटी-८.४२;२

$

- टीका रससरत्नसमुच्चयबोधिनी:
- उत्थापनामाह मृतस्येति ।। रसबोध-८.४२;१
- पुनरुद्धृतिः यन्त्रादियोगेन स्वरूपापादनम् इत्यर्थः ।। रसबोध-८.४२;२

**ढालन**

द्रुतद्रव्यस्य निक्षेपो द्रवे तड्ढालनं मतम् ।। रस-८.४३ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- ढालनसंज्ञां लक्षयति द्रुतद्रव्यस्येति ।। रसटी-८.४३;१
- यथा वरलोहकविधौ सतीक्ष्णताम्रस्य ध्मानेन द्रुतस्य लकुचद्रावे निक्षेपोऽत्राध्याये प्रागुक्तः स ढालनशब्देन परिभाष्यते ।। रसटी-८.४३;२
- अथ चपलो द्विविधः ।। रसटी-८.४३;३
- पाषाणविशेषः कृत्रिमो धातुरूपश्च ।। रसटी-८.४३;४
- तत्र पाषाणविशेषो द्वितीयाध्याय उक्तः ।। रसटी-८.४३;५

**चपल औस् Bलेइ**

त्रिंशत्पलमितं नागं भानुदुग्धेन मर्दितम् ।
विमर्द्य पुटयेत्तावद्यावत्कर्षावशेषितम् ।। रस-८.४४ ।।

न तत्पुटसहस्रेण क्षयमायाति सर्वथा ।
चपलोऽयं समादिष्टो वार्त्तिकैर् नागसम्भवः ।। रस-८.४५ ।।

**चपल औस् Zइन्न्**

इत्थं हि चपलः कार्यो वङ्गस्यापि न संशयः ।। रस-८.४६ ।।

**चपल fिर् रसबन्ध**

तत्स्पृष्टहस्तसंस्पृष्टः केवलो बध्यते रसः ।। रस-८.४७ ।।

स रसो धातुवादेषु शस्यते न रसायने ।
अयं हि खर्वणाख्येन लोकनाथेन कीर्तितः ।। रस-८.४८ ।।

**धौत**

भूभुजंगशकृत्तोयैः प्रक्षाल्यापहृतं रजः ।
कृष्णवर्णं हि तत्प्रोक्तं धौताख्यं रसवादिभिः ।। रस-८.४९ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- धौतमाह भूभुजंगेति ।। रसबोध-८.४९;१
- अपहृतम् अपचितं निःसारितमित्यर्थः ।। रसबोध-८.४९;२
- रजः पुटनादिकाले तत्संलग्नाङ्गारादिचूर्णम् ।। रसबोध-८.४९;३
- तत् चपलीभूतं नागं वङ्गं च ।। रसबोध-८.४९;४
- भूनागमलरसैः तन्मलमिश्रजलैर्वा परिशोधितमलादिकं कृष्णवर्णं चपलीभूतं नागं वङ्गं च धौतनागं धौतवङ्गं च प्रोक्तम् इति निष्कर्षः ।। रसबोध-८.४९;५

$

- टीका रससरत्नसमुच्चयटीका:
- धौतस्य लक्षणमाह भूभुजङ्गेति ।। रसटी-८.४९;१
- भूभुजङ्गा भूनागाः ।। रसटी-८.४९;२
- तेषां शकृन्मृद्विशेषरूपमेव तत्संनिधावुपलभ्यते ।। रसटी-८.४९;३

- एतस्योपयोगस्तु खरसत्वोत्पादनार्थं पञ्चमाध्याये प्रागभिहित एव ।। रसटी-८.४९;४

### द्वंद्वान

द्रव्ययोर् मर्दनाध्मानाद् द्वंद्वानं परिकीर्तितम् ।। रस-८.५० ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- द्वन्द्वानम् आह द्रव्ययोर् इति ।। रसबोध-८.५०;१
- संसृष्टद्रव्यद्वयं मर्दयित्वा ध्मापनेन द्वन्द्वानसंज्ञा जायते ।। रसबोध-८.५०;२
- द्वन्द्वानम् इत्यत्र बन्धनम् इति पाठान्तरम् ।। रसबोध-८.५०;३

### भञ्जिनी

भागाद् द्रव्याधिकक्षेपम् अनु वर्णसुवर्णके ।
द्रवैर्वा वह्निकाग्रासो भञ्जनी वादिभिर् मता ।। रस-८.५१ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- भञ्जनीमाह भागादिति ।। रसबोध-८.५१;१
- वर्णेन सुवर्ण इव तस्मिन् वर्णसुवर्णके राजपित्तले भागात् मारणार्थनिर्दिष्टप्रक्षेप्यभागम् अपेक्ष्य द्रव्याधिकक्षेपं द्रव्याणां प्रक्षेप्यद्रव्याणाम् अधिकक्षेपम् अधिकप्रक्षेपम् अनु पश्चाद् अधिकप्रक्षेपानन्तरम् इत्यर्थः यः वह्निकाग्रासः मारणीयद्रव्यगतवह्निनिर्वापणं वाथवा द्रवैर् जलादिभिः यः वह्निकाग्रासः स भञ्जनीति संज्ञया वादिभिः रसवादिभिः मता कथिता ।। रसबोध-८.५१;२

$

- टीका रससरत्नसमुच्चयटीका:
- भजनीलक्षणमाह भागाद्रूप्याधिकेति ।। रसटी-८.५१;१
- अनुवर्णसुवर्णके हीनवर्णसुवर्णे हेमकृष्टिं दत्वा शतांशविधिना रक्तपीतवर्णोत्कर्षार्थं यतमानेन साधकेन प्रमादात्कारणान्तरेण वा यदा रूप्यस्य यो भागः शास्त्र उक्तस्तं विहाय प्रमाणापेक्षयाधिकः क्षिप्यते तादृशक्षेपं कृत्वा यदा वर्णिकाह्रासे प्रागवस्थितपीतवर्णस्यापि ह्रासः क्षयो भवति ।। रसटी-८.५१;२
- अथवा द्रव्यैर् वेधादावनुपदिष्टद्रव्यैर् वङ्गनीलाञ्जनादिभिः संमीलनेनापि यो वर्णिकाह्रासः सा रसशास्त्रे भञ्जनीति कथ्यते ।। रसटी-८.५१;३
- हेमकृष्टेर्लक्षणं तु ।। रसटी-८.५१;४
- रूप्यं वा जातरूपं वा रसगन्धादिभिर्हतम् ।
- समुत्थितं च बहुशः सा कृष्टी हेमतारयोः ।। रसटी-८.५१;५
- इति प्रागुक्तमेव ।। रसटी-८.५१;६
- अत्र विधौ हेमकृष्टिः ।। रसटी-८.५१;७
- रसदरदताप्यगन्धकमनःशिलाराजवर्तकं विमलम् ।
- पुटमृतशुल्बं तारे निर्व्यूढं हेमकृष्टिरियम् ।। रसटी-८.५१;८
- इति ।। रसटी-८.५१;९
- रसदरदादीनां पुटेन मृतं यच्छुल्बं तत्तारे निर्वाहितं कुर्यात् ।। रसटी-८.५१;१०
- शतांशविधिश्च ।
- अष्टानवतिर् भागास्तारस्त्वेकोऽपि कनकभागः स्यात् ।
- सूतस्यैको भागः शतांशविधिरेष विख्यातः ।। रसटी-८.५१;११
- इति रसहृदये ।। रसटी-८.५१;१२
- तत्र निर्व्यूढतारभागस्याधिकक्षेपेणानु वर्णसुवर्णे वर्णनाशः स्पष्ट एव ।। रसटी-८.५१;१३

### चुल्लका

पतङ्गीकल्कतो जाता लोहे तारे च हेमता ।
दिनानि कतिचित्स्थित्वा यात्यसौ चुल्लका मता ।। रस-८.५२ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- चुल्लकामाह पतङ्गीति ।। रसबोध-८.५२;१
- पतङ्गीकल्कतः पतङ्गीकल्कान्तर् इत्यर्थः कतिचिद्दिनानि स्थित्वा लौहं तारं चेति शेषः तत्र लौहे विशेषतः तारे च या हेमता स्वर्णसादृश्यं जाता असौ हेमता चुल्लका याति चुल्लका इति संज्ञां लभते इत्यर्थः इति मता ।। रसबोध-८.५२;२
- चुल्लका गिल्टी इति लोके ।। रसबोध-८.५२;३
- यद्वा लक्षणद्वयमिदं तेन पतङ्गीत्यारभ्य हेमता इत्यन्तेन श्लोकार्धेन हेमतालक्षणम् दिनानीत्यादिश्लोकार्धेन च चुल्लकालवणं ज्ञेयम् ।। रसबोध-८.५२;४
- अस्मिन् पक्षे वक्ष्यमाणपतङ्गीरागाख्यरञ्जकद्रव्यविशेषस्य कल्कलेपनेन सर्वलौहे विशेषतः रौप्ये हेमता इति संज्ञा जायते ।। रसबोध-८.५२;५
- हेम्नो भावः इति हेमता स्वर्णसादृश्यम् ।। रसबोध-८.५२;६
- तथा असौ लौहतारयोर् हेमता कतिचिद्दिनानि स्थित्वा पतङ्गीकल्के इत्याशयः चुल्लका याति चुल्लकेत्याख्यया ख्यातिं यातीत्यर्थः ।। रसबोध-८.५२;७

$

- टीका रससरत्नसमुच्चयटीका:
- अथ चुल्लिकालक्षणमाह पतङ्गीकल्कत इति ।। रसटी-८.५२;१
- पतङ्गी अशुद्धरसोपरसादिकृतबीजजीर्णः पारदस्तद्धटितो यः कल्कस्तेन जातं यल्लोहे ताम्रादौ गौरवतेजस्वित्वादिगुणसहितं तारत्वं हेमता वा किंचित्कालपर्यन्तं स्थित्वा नश्यति सा क्रिया चुल्लिकेति मता ।। रसटी-८.५२;२
- उक्तं च रसहृदये ।
- यः पुनरेतैः कुरुते कर्माशुद्धैर् भवेद् रसस्तस्य ।
- अव्यापकः पतङ्गी न रसे रसायने योज्यः ।। रसटी-८.५२;३
- इति ।। रसटी-८.५२;४
- एतै रसोपरसैः ।। रसटी-८.५२;५
- कर्म जारणादिकर्म ।। रसटी-८.५२;६
- पतङ्गी पक्षिवद् ऊर्ध्वगामी ।। रसटी-८.५२;७
- पारदघटितकल्कस्तु योगतरङ्गिण्यादिग्रन्थोक्तो बोध्यः ।। रसटी-८.५२;८
- तथा चोक्तं तरङ्गिण्याम् ।
- पारदष्टङ्क एकस्या द्विपलं पीतखर्परम् ।
- मर्दयेत्सुदृढं तावद् रसो यावद् विलीयते ।। रसटी-८.५२;९
- पुनर् जम्बीरनीरेण गुडेन च समन्वितम् ।
- शोषयेच्चातपे पिष्ट्वा श्लक्ष्णं कृत्वा च धार्यते ।। रसटी-८.५२;१०
- अर्कदुग्धस्य दातव्या भावनास्ता यथा तथा ।
- अस्य कल्कस्य सिद्धस्य भाग एकश्च टङ्कणः ।। रसटी-८.५२;११
- ताम्रं भागत्रयं दत्त्वा धाम्यताम् अन्धमूषया ।
- सुवर्णं दिव्यतेजः स्यात् कुङ्कुमाद् अतिरिच्यते ।। रसटी-८.५२;१२
- इति ।। रसटी-८.५२;१३
- एवं नागार्जुनादिग्रन्थे तारत्वोत्पादककल्कोऽपि द्रष्टव्यः ।। रसटी-८.५२;१४

### पतंगीराग

रञ्जिताद्धि चिराल्लोहाद्ध्मानाद्वा चिरकालतः ।
विनिर्यासः स निर्दिष्टः पतङ्गीरागसंज्ञकः ।। रस-८.५३ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- संप्रति क्रियाविशेषसिद्धस्याचिरविनाशिनो लोहस्थस्य रागस्य संज्ञामाह रञ्जितादिति ।। रसटी-८.५३;१
- अत्रापि पतङ्गिकल्कत इत्यनुवर्तनीयम् ।। रसटी-८.५३;२
- तादृशकल्केन रञ्जिताल्लोहाद्ध्मानादियत्नेन विना कालान्तरे ध्मानेन सद्यो वा यो रागो विनिर्याति वियुज्य निर्गच्छति स पतङ्गीरागसंज्ञको रसशास्त्रे ख्यातः ।। रसटी-८.५३;३

$

- टीका रससरत्नसमुच्चयबोधिनी:
- पूर्वश्लोके पतङ्गी इत्युक्तम् अतः तामेव विवृणोति रञ्जितादिति ।। रसबोध-८.५३;१
- चिराद्दीर्घकालं व्याप्य रञ्जिताद् वक्ष्यमाणरक्तादिवर्गान्यतमवर्गेण रागपरिप्राप्ताद् यस्मात् कस्मादपि लौहाद् अथवा चिरकालतः सुदीर्घकालं ध्मानाद्ध्मापिताद् यस्मात् कस्मादपि रञ्जितलौहाद् यः विनिर्यासः निःस्रवः सत्त्वमिति यावत् निर्गच्छतीति शेषः स पतङ्गीरागसंज्ञकः निर्दिष्टः ।। रसबोध-८.५३;२

### आवाप, प्रतीवाप, आच्छादन

द्रुते द्रव्यान्तरक्षेपो लोहाद्ये क्रियते हि यः ।
स आवापः प्रतीवापस् तदेवाच्छादनं मतम् ।। रस-८.५४ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- द्रुत इति ।। रसटी-८.५४;१
- एतदुदाहरणं यथा ।
- सुरदालिभस्म गलितं त्रिःसप्तकृत्वोऽथ गोजलं शुष्कम् ।
- वापेन सलिलसदृशं करोति मूषागतं तीक्ष्णम् ।। रसटी-८.५४;२
- इति ।। रसटी-८.५४;३
- तथा ।
- सुरगोपकदेहरजः सुरदालिफलैः समांशकैर् देयः ।
- वापो द्रुते सुवर्णे द्रुतमास्ते तद्रसप्रख्यम् ।। रसटी-८.५४;४
- इति ।। रसटी-८.५४;५
- रसप्रख्यं जलसदृशम् इत्यर्थः ।। रसटी-८.५४;६

### अभिषेक

द्रुते वह्निस्थिते लोहे विरम्याष्टनिमेषकम् ।
सलिलस्य परिक्षेपः सोऽभिषेक इति स्मृतः ।। रस-८.५५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- अभिषेकमाह द्रुते इति ।। रसबोध-८.५५;१
- वह्निस्थिते प्रज्वलितचुल्ल्युपरि एव अवस्थिते ।। रसबोध-८.५५;२
- अष्टनिमेषकम् अष्टवारम् अक्ष्णोर् निमीलनोन्मीलनात्मकं कालं विरम्य द्रवीभवनानन्तरम् अपेक्ष्य ।। रसबोध-८.५५;३

### निर्वाप

तप्तस्याप्सु विनिक्षेपो निर्वापः स्नपनं च तत् ।। रस-८.५६ ।।

### Zएइत्पुन्क् fिर् आवाप उस्w.

प्रतीवापादिकं कार्यं द्रुते लोहे सुनिर्मले ।। रस-८.५७ ।।

### शुद्धावर्त

यदा हुताशो दीप्तार्चिः शुक्लोत्थानसमन्वितः ।
शुद्धावर्तस् तदा ज्ञेयः स कालः सत्त्वनिर्गमे ।। रस-८.५८ ।।

### बीजावर्त

द्राव्यद्रव्यनिभा ज्वाला दृश्यते धमने यदा ।
द्रावस्योन्मुखता सेयं बीजावर्तः स उच्यते ।। रस-८.५९ ।।

### स्वङ्गशीतल

वह्निस्थम् एव शीतं यत्तदुक्तं स्वाङ्गशीतलम् ।। रस-८.६० ।।

### बहिःशीत

अग्नेराकृष्य शीतं यत्तद् बहिःशीतमुच्यते ।। रस-८.६१ ।।

### स्वेदन

क्षाराम्लैर् औषधैर्वापि दोलायन्त्रे स्थितस्य हि ।
पचनं स्वेदनाख्यं स्यान्मलशैथिल्यकारकम् ।। रस-८.६२ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- स्वेदनमाह क्षाराम्लैरिति ।। रसबोध-८.६२;१
- औषधैः तत्तल्लौहशोधकद्रव्याणां स्वरसादिभिर् इत्यर्थः ।। रसबोध-८.६२;२
- मलशैथिल्यकारकं स्वेदनेन मार्दवे जाते अन्तर्मलानां पृथक्करणं वीकरणं वा ।। रसबोध-८.६२;३

$

- टीका रससरत्नसमुच्चयटीका:
- इदानीम् अष्टादशसंस्काराणां क्रमेण लक्षणमाह क्षाराम्लैरिति ।। रसटी-८.६२;१
- क्षारा यवक्षारसर्जनटङ्कणाः ।। रसटी-८.६२;२
- अम्लं काञ्जिकादि ।। रसटी-८.६२;३
- औषधैस्त्र्यूषणादिभिः सर्पाक्ष्यादिभिश्च ।। रसटी-८.६२;४
- तास्तु रसरत्नाकरे परिगणिता एव स्वेदनाद्युपयोगिकाञ्जिकविधौ ।। रसटी-८.६२;५
- तथा च तद्ग्रन्थः ।
- नानाधान्यैर् यथाप्राप्तैस्तुषवर्ज्यैर् जलान्वितैः ।
- मृद्भाण्डे पूरितं रक्ष यावद् अम्लत्वम् आप्नुयात् ।। रसटी-८.६२;६
- तन्मध्ये भृङ्गराङ्मुण्डी विष्णुक्रान्ता पुनर्नवा ।
- मीनाक्षी चैव सर्पाक्षी सहदेवी शतावरी ।। रसटी-८.६२;७
- त्रिफला गिरिकर्णी च हंसपादी च चित्रकम् ।
- समूलं कण्डयित्वा तु यथालाभं निवेशयेत् ।। रसटी-८.६२;८

- पूर्वाम्लभाण्डमध्ये तु धान्याम्लकम् इदं स्मृतम् ।
- स्वेदनादिषु सर्वत्र रसराजस्य योजयेत् ।। रसटी-८.६२;९
- इति ।। रसटी-८.६२;१०
- स्थितस्य त्र्यूषणादिकल्कलिप्तवस्त्रावृतभूर्जपत्रपोटलिकामध्ये स्थितस्य पारदयेत्यर्थः ।। रसटी-८.६२;११
- त्र्यूषणादिकल्कोऽपि रसरत्नाकरेऽभिहितः ।
- त्र्यूषणं लवणं राजी रजनी त्रिफलाद्रवम् ।
- महाबला नागबला मेघनादा पुनर्नवा ।। रसटी-८.६२;१२
- मेषशृङ्गी चित्रकं च नवसारं समं समम् ।
- एतत् समस्तं व्यस्तं वा पूर्वाम्लेनैव पेषयेत् ।। रसटी-८.६२;१३
- तत्कल्केन लिपेद्वस्त्रं यावद् अङ्गुलमात्रकम् ।
- तन्मध्ये निक्षिपेत् सूतं बद्ध्वा पच्याद् दिनत्रयम् ।। रसटी-८.६२;१४
- दोलायन्त्रेऽम्लसंयुक्ते स्वेदितो जायते रसः ।
- प्रक्षाल्य काञ्जिकैः सोष्णैस्तम् आदाय विमर्दयेत् ।। रसटी-८.६२;१५
- इति ।। रसटी-८.६२;१६
- मलशैथिल्यकारकं मलाश्च द्वादश दोषाः ।। रसटी-८.६२;१७
- तच्छैथिल्यजनकम् ।। रसटी-८.६२;१८
- शिथिलानाम् एव हि तेषाम् मोचयितुम् शक्यत्वात् ।। रसटी-८.६२;१९
- द्वादश दोषाश्च विषं वह्निर् मलश्चेति नैसर्गिकास्त्रयः ।। रसटी-८.६२;२०
- नागज एकः ।। रसटी-८.६२;२१
- वङ्गज एकः ।। रसटी-८.६२;२२
- तथा भूमिजो गिरिजो वार्जः ।। रसटी-८.६२;२३
- नागजौ द्वौ ।। रसटी-८.६२;२४
- वङ्गजौ च द्वौ ।। रसटी-८.६२;२५
- इति सप्त कञ्चुकाख्या इत्येवं द्वादश दोषा देवैः प्रार्थितमहेश्वरेण पारदे संयोजिता भवन्ति ।। रसटी-८.६२;२६

### मर्दन

उदितैरौषधैः सार्धं सर्वाम्लैः काञ्जिकैरपि ।
पेषणं मर्दनाख्यं स्याद्बहिर्मलविनाशनम् ।। रस-८.६३ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- मर्दनमाह उदितैरिति ।। रसबोध-८.६३;१
- उदितैरौषधैः तत्र तत्रोक्तभेषजद्रव्याणां स्वरसैः क्वाथैर्वा इत्यर्थः ।। रसबोध-८.६३;२

$

- टीका रससरत्नसमुच्चयटीका:
- उदितैरिति ।। रसटी-८.६३;१
- वक्ष्यमाणमर्दनविध्युक्तैर् गृहधूमायौषधैः सर्वाम्लैरम्लवेतसप्रमुखैर् अम्लवर्गोक्तैर्द्रव्यैः ।। रसटी-८.६३;२
- तेषां रसेनेत्यर्थः ।। रसटी-८.६३;३
- तथा काञ्जिकैरपि पारदस्य यत्पेषणं त्रिदिनपर्यन्तं कृतं तद् बहिर्मलविनाशनं भवति ।। रसटी-८.६३;४
- बहिर्मलः स्वेदेनान्तर्विश्लिष्टो भूत्वा पारददेहाद्बहिः संश्लिष्टो रागतो नैसर्गिकदोषं विहाय नवविधो यो मलस्तद्विनाशको भवतीति ।। रसटी-८.६३;५
- केवलं स्वेदमर्दनाभ्यां न सर्वथा भुजकञ्चुकदोषनाशनं भवति ।। रसटी-८.६३;६

## मूर्छन

मर्दनादिष्टभैषज्यैर् नष्टपिष्टत्वकारकम् ।
तन्मूर्छनं हि वङ्गाहिभुजकञ्चुकनाशनम् ।। रस-८.६४ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अतो मर्दनपूर्वकम् अग्नियोगेन नाशं कृत्वा पारदस्य यत् पिष्टत्वोत्पादनं तन्मूर्छनसंस्कारनाम्नाह मर्दनादिष्टेति ।। रसटी-८.६४;१
- मर्दनार्थं वक्ष्यमाणमूर्छनसंस्कारविधौ कथितैर् गृहकन्यादिभिर् नष्टपिष्टत्वकारकं यत् कर्म मर्दनपूर्वकपाचनरूपं तन्मूर्छनम् इत्यभिधीयते ।। रसटी-८.६४;२
- समासतो लक्षणं तु दत्तग्रासस्य ग्रासरहितस्य वा गालनपातनव्यक्तिरेकेण पूर्वावस्थापन्नत्वम् ।। रसटी-८.६४;३
- तच्च मर्दनपाकाभ्यां भवतीति मर्दनोत्तरं यन्त्रपुटान्यतरेण पाकोऽप्यङ्गत्वेन बोध्य इति द्वौ यौगिकौ ।। रसटी-८.६४;४
- भूजशब्देन भूजदोषप्रभृतीत्यर्थो बोध्यः ।। रसटी-८.६४;५
- ते च कञ्चुका आवरकाः सप्त दोषा वङ्गाहिदोषप्रमुखाः ।। रसटी-८.६४;६
- ते च मर्दनाग्निभ्यां नश्यन्ति ।। रसटी-८.६४;७
- वङ्गशब्देन वङ्गजदोषो ग्राह्यः ।। रसटी-८.६४;८
- अहिशब्देन नागजदोषश्च ।। रसटी-८.६४;९
- दोषाणां नानात्वेन विविधदृढशिथिलसंसर्गतारतम्येन तन्नाशार्थं विविधोपायप्रदर्शनम् उचितम् एवेति न मर्दनसंस्कारेण मूर्छनस्य गतार्थतेति शङ्क्यमिति भावः ।। रसटी-८.६४;१०
- तन्मूर्छनं हि वङ्गाहिभूजकञ्चुकनाशनम् इति पाठं गृहीत्वेयं व्याख्या ।। रसटी-८.६४;११
- दोषत्रयविनाशनमिति पाठे तु नैसर्गिकदोषनाशे सुतरां बहिर्दोषनाश इत्यभिप्रायः ।। रसटी-८.६४;१२
- अत एवायं पाठो रसहृदयटीकायां चतुर्भुजमिश्रितैर् आदृतः ।। रसटी-८.६४;१३
- नैसर्गिकदोषेतरदोषाणां वारणाय पूर्वोक्तमर्दनसंस्कारो नैसर्गिकदोषवारणायायम् इति व्यवस्थायाः सुकरत्वात् ।। रसटी-८.६४;१४
- एवं च वङ्गाहिभूजकञ्चुकनाशनम् इति पाठो न मनोरम इति बोध्यम् ।। रसटी-८.६४;१५

$

- टीका रससरत्नसमुच्चयबोधिनी:
- मूर्छनमाह मर्दनादिति ।। रसबोध-८.६४;१
- इष्टभैषज्यैः शोधकादित्वेन अभिमतौषधैः ।। रसबोध-८.६४;२
- नष्टपिष्टत्वकारकं पेषणेन स्वरूपनाशात् यन्मूर्तिबद्धत्वम् ।। रसबोध-८.६४;३
- वङ्गेति ।। रसबोध-८.६४;४
- नागवङ्गादिदोषनाशनम् ।। रसबोध-८.६४;५
- एतत्तु रसम् उद्दिश्य उक्तं धात्वन्तराणाम् अपि स्वस्वदोषनाशनम् इति आदिपदेन बोध्यम् ।। रसबोध-८.६४;६

## उत्थापन

स्वेदातपादियोगेन स्वरूपापादनं हि यत् ।
तदुत्थापनम् इत्युक्तं मूर्छाव्यापत्तिनाशनम् ।। रस-८.६५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- उत्थापनमाह स्वेदेति ।। रसबोध-८.६५;१
- स्वेदः ऊर्ध्वपातनादिना स्वेदनम् आतपः रौद्रसंतापः आदिना मर्दनादीनाम् ग्रहणम् ।। रसबोध-८.६५;२
- स्वरूपापादनं प्रकृत्यवस्थापनम् ।। रसबोध-८.६५;३
- मूर्छाव्यापत्तिनाशनं मूर्छनक्रियाजनितस्वरूपध्वंसरूपविपत्तिवारणम् ।। रसबोध-८.६५;४

$

- टीका रससरत्नसमुच्चयटीका:
- स्वेदेति ।। रसटी-८.६५;१

- स्वेदः काञ्जिकया क्षाराम्ललवणैश्च दोलायन्त्रे स्वेदनम् ।। रसटी-८.६५;२
- आतपयोगः काञ्जिकादिमर्दितरसस्य काचपात्रे सूर्यतापस्थे धारणम् ।। रसटी-८.६५;३
- आदिशब्देन साग्निकचुल्लीस्थे कटाहे वा पारदस्य तस्य धारणमित्यादि ।। रसटी-८.६५;४
- तेन पारदस्य मूर्छितस्य यच्चाञ्चल्यतेजस्वित्वगौरवविशिष्टत्वरूपम् आत्मरूपं तत्प्रतिप्रापणं तदुत्थापनम् इत्युच्यते ।। रसटी-८.६५;५

### नष्टपिष्टि

स्वरूपस्य विनाशेन पिष्टत्वाद् बन्धनं हि तत् ।
विद्वद्भिर्निर्जितः सूतो नष्टपिष्टिः स उच्यते ।। रस-८.६६ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- बन्धनमाह स्वरूपस्येति ।। रसबोध-८.६६;१
- पिष्टम् इष्टभैषज्यैः पेषणं पिष्टमिति भावोक्तः तस्य भावः ।। रसबोध-८.६६;२
- तत्वात् स्वरूपस्य विनाशेन स्वकीयशुभ्रत्वचपलत्वादिरूपापायेन यद् रूपापादनम् इति शेषस्तद् बन्धनं वह्निनानुच्छिद्यमानत्वं मूर्तिबद्धत्वम् इति वा ज्ञेयम् इति शेषः ।। रसबोध-८.६६;३
- अस्यैव नष्टपिष्टिर् इति संज्ञान्तरमाह विद्वद्भिरिति ।। रसबोध-८.६६;४
- निर्जितो बन्धनेन नष्टस्वरूपः यद्वा निर्जितो मृतः स सूतः विद्वद्भिर् नष्टपिष्टिर् उच्यते ।। रसबोध-८.६६;५

### पातन

उक्तौषधैर्मर्दितपारदस्य यन्त्रस्थितस्योर्ध्वम् अधश् च तिर्यक् ।
निर्यातनं पातनसंज्ञम् उक्तं वङ्गाहिसम्पर्कजकञ्चुकघ्नम् ।। रस-८.६७ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- पातनात्रयमाह उक्तौषधैरिति ।। रसबोध-८.६७;१
- निर्यातनं शोधनाद्यर्थं यत् कदर्थनमित्यर्थः ।। रसबोध-८.६७;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथ पातनसंस्कारस्य लक्षणमाह उक्तौषधैरिति ।। रसटी-८.६७;१
- वक्ष्यमाणपातनविधौ निर्दिष्टत्रिफलादिभेषजैः सह मर्दितपारदस्य तत ऊर्ध्वपातनादियन्त्रस्थितस्य यन्निर्यापणम् ऊर्ध्वाधस्तिर्यक्प्रापणं तत् पातनम् उच्यते ।। रसटी-८.६७;२
- तेन वङ्गनागजा यौगिकदोषा भूजादिसप्तकञ्चुकाश्च सर्वथा नश्यन्ति ।। रसटी-८.६७;३

### रोधन

जलसैन्धवयुक्तस्य रसस्य दिवसत्रयम् ।
स्थितिर् आस्थापनी कुम्भे यासौ रोधनमुच्यते ।। रस-८.६८ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- रोधनमाह जलेति ।। रसबोध-८.६८;१

- जलसैन्धवाभ्यां सह कुम्भमध्ये दिवसत्रयं रसस्य या आस्थापनी आ सम्यक् स्थापनी षण्ढदोषनाशनपूर्वकं स्ववीर्ये स्थापनकारिणी क्रियेति शेषः असौ स्थितिः स्थापनं रोधनमित्युच्यते ।। रसबोध-८.६८;२
- इदं हि स्वेदनादिक्रियाजनितकदर्थनेन षण्ढभावप्राप्तस्य रसस्य तद्दोषनाशपूर्वकवीर्यप्रकर्षाधानार्थं ज्ञातव्यम् ।। रसबोध-८.६८;३
- ग्रन्थान्तरेऽस्य बोधनम् इति संज्ञा निर्दिष्टा ।। रसबोध-८.६८;४

$

- टीका रससरत्नसमुच्चयटीका:
- रोधनं लक्षयति जलेति ।। रसटी-८.६८;१
- कुम्भे वक्ष्यमाणे घटयन्त्रे ।। रसटी-८.६८;२
- आप्यायनी पुष्टिकरी ।। रसटी-८.६८;३
- अत्र सैन्धवमयमूषासंपुटितं कृत्वैकविंशतिदिनपर्यन्तं भूधरपुटनं सृष्ट्यम्बुजैः सह मर्दनं च कृत्वा ततः परम् इति वाक्यशेषो बोध्यः ।। रसटी-८.६८;४

### नियमन

रोधनाल्लब्धवीर्यस्य चपलत्वनिवृत्तये ।
क्रियते पारदे स्वेदः प्रोक्तं नियमनं हि तत् ।। रस-८.६९ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- नियमनमाह रोधनादिति ।। रसबोध-८.६९;१
- स्वेदः स्वेदनम् ।। रसबोध-८.६९;२
- यद्यप्यत्र स्वेदनार्थं द्रव्यनिर्देशो न कृतः तथापि अध्येतॄणां विज्ञानार्थं ग्रन्थान्तरोक्तं तन्निर्दिश्यते तथा च रसेन्द्रचिन्तामणौ ।
- सर्पाक्षीचिञ्चिकाकन्याभृङ्गारकनकाम्बुभिः ।
- दिनं संस्वेदितः सूतो नियमात् स्थिरतां व्रजेत् ।। रसबोध-८.६९;३
- इति ।। रसबोध-८.६९;४
- नियमनं चपलत्वपरिहारपूर्वकस्थिरत्वसंपादनम् ।। रसबोध-८.६९;५

$

- टीका रससरत्नसमुच्चयटीका:
- लब्धवीर्यस्य पारदस्येति शेषः ।। रसटी-८.६९;१
- स्वेदः पारदगर्भितमूषां भूमिमध्ये गूढां कृत्वा भूम्युपरि करीषाग्निर् इत्यर्थः ।। रसटी-८.६९;२

### दीपन

धातुपाषाणमूलाद्यैः संयुक्तो घटमध्यगः ।
ग्रासार्थं त्रिदिनं स्वेदो दीपनं तन्मतं बुधैः ।। रस-८.७० ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- दीपनमाह धात्विति ।। रसबोध-८.७०;१
- ग्रासार्थं घनहेमादीनाम् इति शेषः ।। रसबोध-८.७०;२
- स्वेदः दोलायन्त्रे काञ्जिकादिना रसस्य इति शेषः ।। रसबोध-८.७०;३
- दीपनं ग्रासशक्तिसंजननक्रियाविशेषः ।। रसबोध-८.७०;४
- रसेन्द्रचिन्तामणिकारेण दीपनद्रव्याणि अन्यविधान्युक्तानि यथा ।
- कासीसं पञ्चलवणं राजिका मरिचानि च ।
- भूशिग्रुबीजम् एकत्र टङ्गणेन समन्वितम् ।। रसबोध-८.७०;५

- आलोड्य काञ्जिके दोलायन्त्रे पाकाद् दिनैस्त्रिभिः ।
- दीपनं जायते सम्यक् सूतराजस्य जारणे ।। रसबोध-८.७०;६
- अथवा चित्रकद्रावैः काञ्जिके त्रिदिनं पचेत् ।। रसबोध-८.७०;७
- इति ।। रसबोध-८.७०;८

$

- टीका रससरत्नसमुच्चयटीका:
- अथ दीपनसंस्कारं लक्षयति धातुपाषाणेति ।। रसटी-८.७०;१
- धातवस्ताम्रपत्रादयः ।। रसटी-८.७०;२
- पाषाणाः स्फटिका मयूरतुत्थकासीसादयः ।। रसटी-८.७०;३
- मूलानि सर्पाक्ष्यादिमूलिकाः ।। रसटी-८.७०;४
- आद्यशब्देन क्षारलवणोदकादि ग्राह्यम् ।। रसटी-८.७०;५
- घटमध्यगो घटयन्त्रमध्यगः पारदस्त्रिदिनपर्यन्तं स्वेद्यो भवति यस्मिन् कर्मणि तद् दीपनम् इति ख्यातम् ।। रसटी-८.७०;६
- अथ जारणायाम् अयथाबलम् अयथाक्रमं च ग्रासदानेनाजीर्णदोषात् पारदे विक्रिया स्याद् इति ग्रासमानविचारोऽवश्यं कार्यः ।। रसटी-८.७०;७

### ग्रासमान

इयन्मानस्य सूतस्य भोज्यद्रव्यात्मिका मितिः ।
इयतीत्युच्यते यासौ ग्रासमानं समीरितम् ।। रस-८.७१ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- ग्रासमानमाह इयन्मानस्येति ।। रसबोध-८.७१;१
- इयन्मानस्य एतावत्परिमाणस्य सूतस्य संबन्धविवक्षया षष्ठी इयन्मिते सूते इत्यर्थः या इयती मितिः एतावत्परिमाणं भोज्यद्रव्याणाम् इति शेषः इति उच्यते भोज्यद्रव्यात्मिका ग्रसनीयस्वर्णादिद्रव्याणां माननिर्देशरूपा असौ उक्तिः ग्रासमानं समीरितम् इयन्मानः सूतः इयन्मानं स्वर्णादिद्रव्यं ग्रसितुं समर्थः एवंरूपमाननिर्देशः ग्रासमानं ज्ञेयम् ।। रसबोध-८.७१;२

$

- टीका रससरत्नसमुच्चयटीका:
- अतो ग्रासमानाख्यसंस्कारस्य लक्षणमाह इयन्मानस्येति ।। रसटी-८.७१;१
- इयच्छब्दोऽत्र संस्कार्यपारदस्य गृहीतमानविशेषपलादिवाचकः ।। रसटी-८.७१;२
- तादृशमानमितपारदस्येयच्चतुःषष्ट्यंशादिमिताभ्रकसत्त्वबीजाद्यात्मकं द्रव्यं भक्षणाय दत्तं चेत् सुखेन चीर्णं जीर्णं च स्यादिति निश्चिता या बीजादेर् मितिस् तद्ग्रासमानं ख्यातम् ।। रसटी-८.७१;३

### जारणा

ग्रासस्य चारणं गर्भे द्रावणं जारणं तथा ।
इति त्रिरूपा निर्दिष्टा जारणा वरवार्त्तिकैः ।। रस-८.७२ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- जारणात्रयमाह ग्रासस्येति ।। रसबोध-८.७२;१
- ग्रासस्य ग्रासयोग्यस्य स्वर्णादेरित्यर्थं चारणं रसान्तः क्षेपणं गर्भे द्रावणं रसान्तः तरलीभवनं जारणं विडयन्त्रादियोगेन द्रवीभूतग्रासस्य पाकः ।। रसबोध-८.७२;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथ जारणां लिलक्षयिषुः प्रथमं साधारणांस्तदवस्थाभेदान् सलक्षणान् समासत आह ग्रासस्येति ।। रसटी-८.७२;१

- श्रेष्ठै रसवार्ताकुशलैः सर्वविधा जारणा त्रिरूपा त्रिप्रकारा कथिता भवति ।। रसटी-८.७२;२
- तत्र ग्रासस्य चारणं पारदकर्तृकग्रासभक्षणकरणम् ।। रसटी-८.७२;३
- गर्भद्रावणं ग्रस्तबीजादेः पारदोदरे द्रुतिकरणम् ।। रसटी-८.७२;४
- जारणं च पारद एकीभावोऽनन्तदृढसंबन्धेन ।। रसटी-८.७२;५
- एषां लक्षणान्यनुपदं वक्ष्यति ।। रसटी-८.७२;६

### जारण > सुब्ल्य्पेस् > ग्रास, ...

ग्रासः पिण्डः परिणामस्तिस्रश्चाख्याः परा पुनः ।। रस-८.७३ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- जारणाया अपरं त्रैविध्यमाह ग्रास इति ।। रसबोध-८.७३;१
- ग्रासः कवलीकरणरूपजारणा पिण्डः कर्दमवत् पिण्डीभवनरूपजारणा ।। रसबोध-८.७३;२
- परीणामः अवस्थान्तरप्रापणरूपजारणा ।। रसबोध-८.७३;३

$

- टीका रससरत्नसमुच्चयटीका:
- पुनरपि जारणाया अवस्थाकृतनामान्तराणि त्रीण्याह ग्रासः पिष्टिः परीणामश्चेति ।। रसटी-८.७३;१
- तत्र ग्रासो ग्रसनम् ।। रसटी-८.७३;२
- पिष्टिः स्वेदनमर्दनाग्न्यादिभिः पारदोदरे द्रुतग्रासस्य पारदसहितस्य शुष्कश्चूर्णः ।। रसटी-८.७३;३
- परिणामार्थस्तु प्रागुक्त एव ।। रसटी-८.७३;४
- पुनर् जारणा द्विविधा भवति ।। रसटी-८.७३;५
- समुखा निर्मुखा चेति भेदेन ।। रसटी-८.७३;६

समुखा निर्मुखा चेति जारणा द्विविधा पुनः ।। रस-८.७४ ।।

### निर्मुखजारणा

निर्मुखा जारणा प्रोक्ता बीजादानेन भागतः ।। रस-८.७५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- तत्रादौ निर्मुखजारणामाह निर्मुखेति ।। रसबोध-८.७५;१
- निः नास्ति मुखं वक्ष्यमाणचतुःषष्ट्यंशः बीजप्रक्षेपरूपमुखलक्षणं यत्र जारणायां तादृशी ।। रसबोध-८.७५;२
- बीजेति ।। रसबोध-८.७५;३
- भागतः यथाभागं तत्तदद्रव्यजारणायां निर्दिष्टभागम् अनतिक्रम्य वक्ष्यमाणचतुःषष्टिभागात् न्यूनतया अधिकतया वा इत्यर्थः बीजादानेन शुद्धस्वर्णरौप्यात्मकबीजग्रहणम् ।। रसबोध-८.७५;४

$

- टीका रससरत्नसमुच्चयटीका:
- तत्राल्पवक्तव्यत्वात् प्रथमं निर्मुखाया एव लक्षणमाह निर्मुखेति ।। रसटी-८.७५;१
- चतुःषष्टिभागमितं बीजं प्रथमं यत्र पारदोदरे न दीयते किंतु केवलं शुद्धधात्वादिग्रास एव सृष्टित्रयनीरकणावासनौषधिमर्दनाद्युपायैर् जार्यते सा जारणा निर्मुखेत्युच्यते ।। रसटी-८.७५;२
- रसोपरसादिमृदुद्रव्यजारणे तस्या उपयोगः कार्यः ।। रसटी-८.७५;३

### बीज (def.)

शुद्धं स्वर्णं च रूप्यं च बीजम् इत्यभिधीयते ।। रस-८.७६ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- मुखकरणोपयोगिबीजशब्दार्थमाह शुद्धमिति ।। रसटी-८.७६;१
- शुद्धम् अकृत्रिमम् उत्तमं खनिजं स्वर्णं रूप्यं वैतच्छास्त्रोक्तशुद्ध्या सुशुद्धं कृत्वात्र ग्राह्यम् ।। रसटी-८.७६;२
- एतेन कृत्रिमनिर्व्यूढमहाबीजादिव्यावृत्तिः कृता ।। रसटी-८.७६;३

### समुखजारणा

चतुःषष्ट्यंशतो बीजप्रक्षेपो मुखमुच्यते ।। रस-८.७७ ।।

### समुखरस/-जारणा

एवं कृते रसो ग्रासलोलुपो मुखवान् भवेत् ।
कठिनान्यपि लोहानि क्षमो भवति भक्षितुम् ।
इयं हि समुखा प्रोक्ता जारणा मृगचारिणा ।। रस-८.७८ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- उक्तबीजस्य यथाक्रमं स्वर्णोत्पादार्थं रौप्यजननार्थं च पारदस्य चतुःषष्ट्यंशेन पारदोदरे जारणारम्भे प्रक्षेपः कार्यः ।। रसटी-८.७८;१
- एवं कृते तस्मिन् बीजे पारदोदरे यथाविधि चीर्णे जीर्णे च सति पारदः सत्वरं ग्रासभक्षणं करोतीति शास्त्रे स रसो मुखवानित्युच्यते ।। रसटी-८.७८;२
- तत्कृतं यत् कठिनलोहादिभक्षणं सा जारणा समुखेत्युक्ता ।। रसटी-८.७८;३
- मृगचारिणा मृगसहितं वने चरति संसारं विहाय विरिक्तेन केनचिद्वरवार्तिकेन ।। रसटी-८.७८;४

$

- टीका रससरत्नसमुच्चयबोधिनी:
- समुखजारणाम् आह एवमिति ।। रसबोध-८.७८;१
- एवं कृते चतुःषष्ट्यंशतो बीजप्रक्षेपे कृते ।। रसबोध-८.७८;२
- मुखवान् समुखः ।। रसबोध-८.७८;३
- मृगचारिणा तदाख्येन केनचिद् रसतन्त्रकृता ।। रसबोध-८.७८;४

### राक्षसवक्त्रवत्

दिव्यौषधिसमायोगात् स्थितः प्रकटकोष्ठिषु ।
भुञ्जीताखिललोहाद्यं योऽसौ राक्षसवक्त्रवान् ।। रस-८.७९ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- राक्षसमुखरसम् आह दिव्यौषधीति ।। रसबोध-८.७९;१
- दिव्यौषधिः मनःशिला ।। रसबोध-८.७९;२
- प्रकटकोष्ठिषु विवृताननकोष्ठिकायन्त्रेषु ।। रसबोध-८.७९;३
- भुञ्जीत ग्रसेत् ।। रसबोध-८.७९;४

$

- टीका रससरत्नसमुच्चयटीका:
- अथ महामुखपारदस्य लक्षणमाह दिव्यौषधीति ।। रसटी-८.७९;१
- सोमलतादिकाश्चतुःषष्टिदिव्यौषध्यस् तत्समायोगस् तद्रसेन कृतमर्दनादिना कृतसंस्कारः ।। रसटी-८.७९;२
- तेन प्रकाशमूषास्वपि स्थितोऽग्निसहः पारदो ध्मानेन कठिनं मृदु सर्वं लोहादि यदा भुनक्ति असौ महामुखवान् इत्युच्यते ।। रसटी-८.७९;३

### चारणा

रसस्य जठरे ग्रासक्षपणं चारणा मता ।। रस-८.८० ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- जारणाभेदचारणालक्षणमाह रसस्येति ।। रसबोध-८.८०;१
- जठरे मध्ये इत्यर्थः ग्रासक्षपणं ग्रासस्य ग्रासार्हलौहादेः क्षपणं क्षयमापादनं रसेन सह एकीकरणमित्यर्थः ।। रसबोध-८.८०;२

$

- टीका रससरत्नसमुच्चयटीका:
- पूर्वोक्तचारणादीनां लक्षणमाह रसस्येति ।। रसटी-८.८०;१

### गर्भद्रुति

ग्रस्तस्य द्रावणं गर्भे गर्भद्रुतिर् उदाहृता ।। रस-८.८१ ।।

### बाह्यद्रुति

बहिरेव द्रुतिं कृत्वा घनसत्त्वादिकं खलु ।
जारणाय रसेन्द्रस्य सा बाह्यद्रुतिर् उच्यते ।। रस-८.८२ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- गर्भद्रुतिप्रसङ्गेन बाह्यद्रुतिम् आह बहिर् इति ।। रसबोध-८.८२;१
- बहिर् एव चुल्ल्युपरिस्थकटाहादौ न तु रसगर्भे इत्यर्थः ।। रसबोध-८.८२;२
- घनसत्त्वादिकम् अभ्रसत्त्वादिकम् अत्रादिपदेन स्वर्णसत्त्वादीनां ग्रहणं बोध्यम् ।। रसबोध-८.८२;३

$

- टीका रससरत्नसमुच्चयटीका:
- बहिरेव द्रुतीकृत्येति ।। रसटी-८.८२;१
- अभ्रकसत्त्वद्रुतिः प्रागुक्तैव द्वितीयाध्याये ।। रसटी-८.८२;२
- जारणाय तप्तखल्वमध्ये दीयत इति वाक्यशेषः ।। रसटी-८.८२;३

### द्रुति (सुब्स्तन्चे)

निर्लेपत्वं द्रुतत्वं च तेजस्त्वं लघुता तथा ।
असंयोगश्च सूतेन पञ्चधा द्रुतिलक्षणम् ।। रस-८.८३ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- द्रुतेः पञ्चधाभेदानाह निर्लेपत्वमिति ।। रसबोध-८.८३;१
- निर्लेपत्वं निः निश्चयेन निःशेषेण वा लेपत्वं लिप्तत्वं द्रावान्तरेण सह निःशेषेण एकीभवनमित्यर्थः यद्वा निः निर्गतः लेपः लिप्तपदार्थः मलादिर्यस्मात् तत्त्वं पृथग्भूतमलादिकम् इत्यर्थः ।। रसबोध-८.८३;२
- द्रुतत्वं विशेषेण द्रवीभवनम् ।। रसबोध-८.८३;३
- तेजस्त्वं स्वरूपापेक्षया तेजोभूयस्त्वम् ।। रसबोध-८.८३;४
- लघुता स्वाभाविकगुरुत्वमपेक्ष्य लाघवम् ।। रसबोध-८.८३;५
- असंयोगश्च सूतेन पारदेन सह पृथक्तया अवस्थानम् ।। रसबोध-८.८३;६

### द्रुति (प्रोचेस्स्)

औषधाध्मानयोगेन लोहधात्वादिकं तथा ।
संतिष्ठते द्रवाकारं सा द्रुतिः परिकीर्तिता ।। रस-८.८४ ।।

### जारणा (संस्कार)

द्रुतग्रासपरीणामो विडयन्त्रादियोगतः ।
जारणेत्युच्यते तस्याः प्रकाराः सन्ति कोटिशः ।। रस-८.८५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- जारणाभेदजारणामाह द्रुतेति ।। रसबोध-८.८५;१
- विडः वक्ष्यमाणलक्षणलक्षितः यन्त्रं कोष्ठिकादिकं तदादियोगतः अत्रादिपदेन मूषापुटादीनां ग्रहणं द्रुतस्य गर्भे तरलितस्य ग्रासस्य स्वर्णादेः परीणामः परिपाकः स्वात्मनि अभेदरूपेण परिणमनम् ।। रसबोध-८.८५;२
- रसेन्द्रचिन्तामणौ तु जारणा हि पातनगालनव्यतिरेकेण घनहेमादिग्रासपूर्वकं पूर्वावस्थापन्नत्वम् इत्यनेन यत् प्रकारान्तरं जारणालक्षणमुक्तं तत् चारणाख्यजारणाभिप्रायेण बोध्यम् ।। रसबोध-८.८५;३

$

- टीका रससरत्नसमुच्चयटीका:
- अथ जारणालक्षणम् आह द्रुतग्रासेति ।। रसटी-८.८५;१
- बिडयन्त्रादियोगेन पारदोदरे द्रवीभूतस्य ग्रासस्य बीजादेर् यः परीणामोऽविनाशिदृढतरसंबन्धेन पारदेन सहैकीभावः सा जारणेत्युच्यते ।। रसटी-८.८५;२
- तस्याः प्रकाराः कोटिशोऽतिबहवः सन्ति ।। रसटी-८.८५;३
- यन्त्रादीनां बहुविधत्वात् ।। रसटी-८.८५;४
- ते च प्रकाराः पत्रजारणासत्त्वजारणाद्रुतिजारणाबीजजारणामहाबीजजारणासिद्धबीजजारणासधूमजारणानिर्धूमजारणाबालजारणावृद्धजारणाबद्धजारणाभूचरीजारणाखेचरीजारणाप्रभृतयो रसार्णवादौ सविस्तरं बोध्याः ।। रसटी-८.८५;५
- दोलायन्त्रसोमानलयन्त्रचक्राजयन्त्रवालुकायन्त्रजलकूर्मयन्त्रस्थलकूर्मयन्त्रमूषाप्रभृतीनि जारणयन्त्रादीनि विद्यात् ।। रसटी-८.८५;६
- तप्तखल्वे मर्दनं तु सर्वत्र प्राक्कार्यम् एव ।। रसटी-८.८५;७
- आदिशब्देन षड्बिन्दुकीटसहितमर्दनसृष्टित्रयादिसंग्रहाः ।। रसटी-८.८५;८

### विड

क्षारैरम्लैश्च गन्धाद्यैर् मूत्रैश्च पटुभिस् तथा ।
रसग्रासस्य जीर्णार्थं तद्विडं परिकीर्तितम् ।। रस-८.८६ ।।

### रञ्जन

सुसिद्धबीजधात्वादिजारणेन रसस्य हि ।
पीतादिरागजननं रञ्जनं परिकीर्तितम् ।। रस-८.८७ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अतोऽभ्रपत्त्रजारणोत्तरं रागसंस्कारं लक्षयति सुसिद्धबीजेति ।। रसटी-८.८७;१
- सुसिद्धं यथाविधि साधितं यद् बीजम् अभ्रकसत्त्वधात्वादिचूर्णं तज्जारणेन पारदस्य या बीजधात्वाद्यनुरूपा वर्णोत्पत्तिस् तद् रञ्जनम् ।। रसटी-८.८७;२
- तत्र बीजसाधनविधिस्तु सिद्धबीजलक्षणव्याख्यायां प्रागुक्त एव ।। रसटी-८.८७;३
- जारणाविधिस्तु त्रिंशत्तमेऽध्याये स्फुटीभविष्यति ।। रसटी-८.८७;४
- आदिशब्दो मणिरसोपरसादिपरिग्रहः ।। रसटी-८.८७;५
- रागद्रव्योदाहरणं विधिश्च रसहृदये ।। रसटी-८.८७;६
- यथा ।
- जीर्णाभ्रको रसेन्द्रो दर्शयति घनानुरूपिणीं छायाम् ।
- कृष्णां रक्तां पीतां सीतां तथा संकरैर्मिश्राम् ।। रसटी-८.८७;७
- तथा ।
- क्रामति तीक्ष्णेन रसस्तीक्ष्णेन च जीर्यते क्षणाद्ग्रासः ।
- हेम्नो योनिस्तीक्ष्णं रागान् गृह्णाति तीक्ष्णेन ।। रसटी-८.८७;८
- तदपि च दरदेन हतं हत्वा वा माक्षिकेण रविसहितम् ।
- वासितमपि वासनया घनवच्चार्यं च जार्यं च ।
- वासनया वासनौषधेन वासितं भावितमित्यर्थः ।। रसटी-८.८७;९
- तथा ।
- कान्तं वा तीक्ष्णं वा काञ्चीं वा वज्रसस्यकादीनाम् ।
- एकतमं सर्वं वा रसरञ्जने संकरोऽपीष्टः ।। रसटी-८.८७;१०
- काञ्चीं स्वर्णमाक्षिकम् ।। रसटी-८.८७;११
- आदिशब्देन हीरकचपलादय उपधातवश्चैकत्र मिलिता अपीष्टाः ।। रसटी-८.८७;१२
- कुटिले बलमधिकं रागस्तीक्ष्णे तु पन्नगे स्नेहः ।। रसटी-८.८७;१३
- रागस्नेहबलानि तु कमले शंसन्ति धातुविदः ।। रसटी-८.८७;१४

$

- टीका रससरत्नसमुच्चयबोधिनी:
- रञ्जनमाह सुसिद्धेति ।। रसबोध-८.८७;१
- शोधितस्वर्णरौप्याभ्यां तथा जीर्णताम्रादियोगेन क्रियाविशेषम् आश्रित्य रसस्य यत् पीतादिरागजननम् इत्यन्वयः ।। रसबोध-८.८७;२

### सारणा

सूते सतैलयन्त्रस्थे स्वर्णादिक्षेपणं हि यत् ।
वेधाधिक्यकरं लोहे सारणा सा प्रकीर्तिता ।। रस-८.८८ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- सारणालक्षणमाह सूत इति ।। रसटी-८.८८;१

- सारणाख्यतैलेनार्धांशं संभृतं यत् सारणायन्त्रं तत्र स्थिते पारदे यत् स्वर्णादिक्षेपणं स्वर्णादिबीजनागवङ्गानां यत् क्षेपणं वेधाधिक्यसिद्ध्यर्थं क्रियते सा सारणेति रसशास्त्र उक्ता ।। रसटी-८.८८;२
- प्रतिसारणानुसारणेति च तद्भेदौ ।। रसटी-८.८८;३
- उक्तं चैतद् रसहृदये ।
- सारितवर्तितसूतः समानबीजेन मिलति यः सार्यः ।
- द्विगुणेन प्रतीसार्यः स चानुसार्यश्च त्रिगुणेन ।। रसटी-८.८८;४
- इति ।। रसटी-८.८८;५
- द्विगुणमपि सुवर्णमेव ।। रसटी-८.८८;६
- वेधाधिक्यं वेधो भित्त्वान्तःप्रवेशः सोऽधिको भवति ।। रसटी-८.८८;७
- पारदस्य ताम्रदलादौ शरीरस्थधात्वादिषु च सर्वतो व्याप्तिः ।। रसटी-८.८८;८
- सारणातैलं पञ्चमाध्यायव्याख्यायां प्रागुक्तमेव ।। रसटी-८.८८;९
- यन्त्राध्याये सारणायन्त्रं सारणाविधिश्च स्फुटीभविष्यति ।। रसटी-८.८८;१०

$

- टीका रससरत्नसमुच्चयबोधिनी:
- सारणामाह सूते इति ।। रसबोध-८.८८;१
- सतैलयन्त्रस्थे तैलपूर्णान्धमूषामध्यस्थिते सूते रसे यत् स्वर्णादिक्षेपणं स्वर्णादिप्रक्षेपः लोहे ताम्रादौ इत्यर्थः वेधाधिक्यकरं वेधस्य स्वर्णादिजननरूपवेधशक्तेः आधिक्यकरम् आतिशय्यजनकम् ।। रसबोध-८.८८;२
- उक्तं च रसेन्द्रचिन्तामणौ ।
- अथ सारणोच्यते ।। रसबोध-८.८८;३
- अन्धमूषा तु कर्तव्या गोस्तनाकारसंनिभा ।। रसबोध-८.८८;४
- सैव छिद्रान्विता मध्ये गम्भीरा सारणोचिता ।। रसबोध-८.८८;५
- अस्याम् एव मूषायां तत्तैलम् अपगतकल्कविमलम् आपूर्यम् अस्मिन्नधिकम् अधस्ताद् द्रुतबीजप्रक्षेपसमकालम् एव समावर्जनीयः सूतवरस्तदनु सद्यो मूषाननम् आच्छादनीयम् ।। रसबोध-८.८८;६
- एतत् तैलाक्तखण्डग्रन्थिबन्धेन अरुणासितबीजाभ्याम् अश्वनासारकर्मणा मिलितश्चेत् सारितः सम्यक् संयमितः विज्ञातव्यः ।। रसबोध-८.८८;७
- सारणार्थं तैलमपि तत्रैवान्वेष्टव्यं विस्तरभयान्नोद्धृतम् इति ।। रसबोध-८.८८;८

## वेध

व्यवायिभेषजोपेतो द्रव्ये क्षिप्तो रसः खलु ।
वेध इत्युच्यते तज्ज्ञैः स चानेकविधः स्मृतः ।। रस-८.८९ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- सारणालक्षणे वेधाधिक्यकरम् इत्युक्तं कस्तावत् वेध इत्यपेक्षायामाह व्यवायीति नागवल्लीकुमारिकाधुस्तूरादिव्यवायिगुणवद्भेषजसंयुक्तः इत्यर्थः ।। रसबोध-८.८९;१
- व्यवायिलक्षणं शार्ङ्गधरे यथा ।
- पूर्वं व्याप्याखिलं कायं ततः पाकं च गच्छति ।
- व्यवायि तद्यथा भङ्गा फेनं चाहिसमुद्भवम् ।
- इति ।। रसबोध-८.८९;२
- द्रव्ये स्वर्णादिरूपेण परिणिनमयिषौ लोहे ।। रसबोध-८.८९;३

$

- टीका रससरत्नसमुच्चयटीका:
- अथ क्रामणस्य द्रव्यस्य सर्वदा वेधसहोपयोगित्वेन समासतो विशेषणमुखेन क्रामणलक्षणसहितं वेधलक्षणम् एकेन श्लोकेनाह व्यवायीति ।। रसटी-८.८९;१
- द्रव्ये शतवेधादौ यथाभागं गृहीते मूषायां द्रुते कृते प्रतप्तमात्रे वा ताम्ररजतादौ साध्यद्रव्ये क्षिप्तो रसः पारदो यस्मिन् कर्मणि स वेध इत्युच्यते ।। रसटी-८.८९;२
- स च पारदः कीदृशः ।। रसटी-८.८९;३
- व्यवायिभेषजोपेतः ।। रसटी-८.८९;४

- यत् सेवितमात्रं तत्क्षण एव शरीरान्तःस्थसर्वधातुषु सहसा सबाह्याभ्यन्तरं व्याप्नोति पश्चात् पाकं प्राप्नोति तद्व्यवायि क्रामणेत्यपरपर्यायं च बोध्यम् ।। रसटी-८.८९;५
- तादृशभेषजोपेतो योगवाही पारदोऽपि सेवितश्चेत् सहसा सर्वं देहं सान्तरं व्याप्नोति न केवलं कोष्ठ एव स्थितिं करोति ।। रसटी-८.८९;६
- न वा धातुषु कथंचित् प्राप्तोऽपि बहिः संलग्न एव तिष्ठतीति ।। रसटी-८.८९;७
- लोहान्तः प्रविशेद् येन द्रव्ययोगेन पारदः ।
- सद्यस् तत्क्रामणम् इति कथितं रससिद्धिदम् ।
- इति क्रामणलक्षणपार्थक्येन बोध्यम् ।। रसटी-८.८९;८

### वेधभेदाः

लेपः क्षेपश्च कुन्तश्च धूमाख्यः शब्दसंज्ञकः ।। रस-८.९० ।।

### लेपवेध

लेपनं कुरुते लोहं स्वर्णं वा रजतं तथा ।
लेपवेधः स विज्ञेयः पुटमत्र च सौरकम् ।। रस-८.९१ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- तेषु लेपवेधलक्षणमाह लेपनमिति ।। रसबोध-८.९१;१
- लेपनं वेधसामर्थ्यापादकक्रियाविशेषसिद्धरसेनेत्य् आशयः ।। रसबोध-८.९१;२
- अत्र लेपवेधे ।। रसबोध-८.९१;३
- सौरकं पुटं दद्यादिति शेषः सूर्यपक्वं कुर्यादित्यर्थः ।। रसबोध-८.९१;४

$

- टीका रससरत्नसमुच्चयटीका:
- अथ वेधभेदानाह लेप इति ।। रसटी-८.९१;१
- लेपेनेति ।। रसटी-८.९१;२
- यस्मिन्वेधे पारदो लेपेन लोहं पत्रीकृतं तीक्ष्णताम्रादि स्वर्णं करोति रजतं वा करोति स लेपवेध इत्युक्तः ।। रसटी-८.९१;३
- अत्र लेपोत्तरं वर्णोत्कर्षार्थं यत् पुटं देयं भवति तत् पुटं सौकरं वराहपुटं कार्यम् ।। रसटी-८.९१;४
- अस्मिन् संस्कारे जीर्णचतुर्थांशार्धांशसमादिभागैर् जीर्णबीज एव सारितो रस उपयोक्तव्यः ।। रसटी-८.९१;५

### क्षेपवेध

प्रक्षेपणं द्रुते लोहे वेधः स्यात्क्षेपसंज्ञितः ।। रस-८.९२ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- क्षेपवेधलक्षणमाह प्रक्षेपणमिति ।। रसबोध-८.९२;१
- गलितस्वर्णेतरलौहे रसप्रक्षेपेण यत् सुवर्णीकरणं स क्षेपाख्यवेधो ज्ञेयः ।। रसबोध-८.९२;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथ क्षेपवेधम् आह प्रक्षेपणम् इति ।। रसटी-८.९२;१
- ध्मानेन मूषायां लोहे ताम्रादौ द्रुते सति क्रामणद्रव्यकल्कसहितस्य पारदस्य यत् प्रक्षेपणं स वेधः क्षेप इति ख्यातः ।। रसटी-८.९२;२
- अत्र पक्षान्तरम् अप्युक्तं रससारे क्रामणकल्कसहितलोहे धाम्यमाने केवलं पारदं क्षिपेत्तत्रेति ।। रसटी-८.९२;३

### कुन्तवेध

संदंशधृतसूतेन द्रुतद्रव्याहृतिश्च या ।
सुवर्णत्वादिकरणं कुन्तवेधः स उच्यते ।। रस-८.९३ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- कुन्तवेधमाह संदंशेति ।। रसबोध-८.९३;१
- संदंशः सांडाशी इति ख्यातः संदंशयन्त्रेण मूर्तिबद्धसूतं धृत्वा द्रुतलौहे निमज्जनेन तत्सम्पर्कात् स्वर्णादिरूपेण परिणतस्य लौहस्य यदाहरणं स कुन्तवेधसंज्ञको ज्ञेयः ।। रसबोध-८.९३;२

### धूमवेध

वह्नौ धूमायमानेऽन्तः प्रक्षिप्तरसधूमतः ।
स्वर्णाद्यापादनं लोहे धूमवेधः स उच्यते ।। रस-८.९४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- धूमवेधमाह वह्नाविति ।। रसबोध-८.९४;१
- सधूमवह्निमध्ये वेधसमर्थरसनिक्षेपेण यो धूमः निर्गच्छति तत्सम्पर्काद् यत् किंचिल्लोहस्य स्वर्णादिरूपेण या परिणतिः स धूमवेधः ।। रसबोध-८.९४;२

$

- टीका रससरत्नसमुच्चयटीका:
- धूमवेधलक्षणमाह वह्नाविति ।। रसटी-८.९४;१
- धूमायमाने वह्नावन्तर्मूषान्तःस्थतद्वह्निमध्ये प्रक्षिप्तो यो रसः पारदस् तत्संबन्धिधूमस्योर्ध्वस्थापितताम्रादिपत्रे संपर्काद् यत् स्वर्णरजतापादनं स धूमवेध इत्यभिधीयते ।। रसटी-८.९४;२

### शब्दवेध

मुखस्थितरसेनाल्पलोहस्य धमनात् खलु ।
स्वर्णरूप्यत्वजननं शब्दवेधः स कीर्तितः ।। रस-८.९५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- शब्दवेधमाह मुखेति ।। रसबोध-८.९५;१
- धमनात् शब्दोच्चारणादित्यर्थः फुत्कारादित्यर्थो वा ।। रसबोध-८.९५;२
- धम ध्वाने इत्यस्मात् ल्युः ।। रसबोध-८.९५;३
- मुखमध्ये वेधसमर्थरसगुटिकां संस्थाप्य पुरो लौहखण्डम् एकं धृत्वा शब्दोच्चारणे कृते फुत्कारे दत्ते वा तत् लौहखण्डं स्वर्णादिरूपेण परिणतम् ।। रसबोध-८.९५;४
- धमनात् इत्यत्र दमनात् इति पाठे मुखमध्ये वेधसमर्थरसगुटिकां संस्थाप्य क्षुद्रलौहखण्डं तन्निम्ने निधाय च पीडने कृते अधःस्थलौहखण्डं यत्र वेधे स्वर्णादिरूपेण परिणमेत् स शब्दवेधः इत्यर्थः ।। रसबोध-८.९५;५

### उद्घाटन

सिद्धद्रव्यस्य सूतेन कालुष्यादिनिवारणम् ।
प्रकाशनं च वर्णस्य तदुद्धाटनम् ईरितम् ।। रस-८.९६ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- उद्धाटनम् आह सिद्धद्रव्यस्येति ।। रसबोध-८.९६;१
- सिद्धद्रव्यस्य मृतलौहादेर् इत्यर्थः सूतेन क्रियाविशेषनिष्पन्नसूतसंयोगेन यत् कालुष्यादिनिवारणं मालिन्यादिप्रोञ्छनं वर्णस्य च प्रकाशनम् औज्ज्वल्यसंपादनं यद्वा सूतेन सूतसंयोगेन सिद्धद्रव्यस्य मारितलोहादेः कालुष्यादिनिवारणं यया क्रियया द्रव्यान्तरसंयोगजनितमालिन्यादिनाशनं स्यादित्येवं योजनीयम् ।। रसबोध-८.९६;२
- सिद्धद्रव्यस्य सूतेन इत्यत्र सिद्धद्रव्येण सूतस्य इति पाठे मृतलौहादिसंयोगद्वारा सूतस्य यत् कालुष्यादिनिवारणम् इत्यर्थः ।। रसबोध-८.९६;३

$

- टीका रससरत्नसमुच्चयटीका:
- सूतेन सबाह्याभ्यन्तरव्याप्त्यैकीभूतस्य सिद्धद्रव्यस्य सुवर्णत्वादिप्राप्तस्य ताम्रादिलोहात्मकद्रव्यस्य तदेकीभूतसूतस्य च यथासम्भवं यत् कालुष्यादि तन्निवारकं दशांशेन यच्चूर्णप्रक्षेपादि कर्म तद् उद्धाटनम् इतीरितम् ।। रसटी-८.९६;१
- कालुष्यं मलसंकीर्णत्वम् ।। रसटी-८.९६;२
- आदिशब्देन छत्रित्वपतङ्गित्वदुर्द्रावित्वदुर्मेलित्वादिदोषः संग्राह्यः ।। रसटी-८.९६;३

## स्वेदन

क्षाराम्लैरौषधैः सार्द्धं भाण्डं रुद्ध्वातियत्नतः ।
भूमौ निखन्यते यत्रात्स्वेदनं संप्रकीर्तितम् ।। रस-८.९७ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- स्वेदनमाह क्षाराम्लैरिति ।। रसबोध-८.९७;१
- औषधैः स्वेदनीयौषधैः ।। रसबोध-८.९७;२
- भाण्डं रसपूर्णभाण्डमित्यर्थः ।। रसबोध-८.९७;३
- अत्र उष्णवीर्यैः क्षाराम्लैः सह भूम्यधःस्थापनेन तदुष्मणा अनग्निस्वेदो बोध्यः ।। रसबोध-८.९७;४

$

- टीका रससरत्नसमुच्चयटीका:
- सारणोत्तरं रसायनं कर्तुं कामयमानेन साधकेन पारदस्य कर्तव्यौ स्वेदसंन्यासाख्यसंस्कारौ लक्षयति क्षाराम्लैरिति ।। रसटी-८.९७;१
- औषधैर् भृङ्गराजमुण्डी विष्णुक्रान्ता इत्यादिभिः स्वेदलक्षणवर्णनावसरे प्रागुक्तैः ।। रसटी-८.९७;२
- तैश्च सार्धं सह पारदं भाण्डमध्ये पिधानसंधिरोधनादियत्नेन रुद्ध्वा तद्भाण्डं भूमिमध्ये निखन्यते यस्मिन् कर्मणि तत् स्वेदनं संप्रकीर्तितम् ।। रसटी-८.९७;३

## संन्यास

रसस्यौषधयुक्तस्य भाण्डरुद्धस्य यत्नतः ।
मन्दाग्नियुतचुल्ल्यन्तः क्षेपः संन्यास उच्यते ।। रस-८.९८ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- संन्यासम् आह रसस्येति ।। रसबोध-८.९८;१
- औषधयुक्तस्य क्षाराम्लौषधयुक्तस्येत्यर्थः ।। रसबोध-८.९८;२
- मन्दाग्नियुतचुल्ल्यन्तः मृद्वग्निविशिष्टचुल्लीमध्ये न तु तीव्राग्नियुतचुल्ल्याम् इत्यर्थः ।। रसबोध-८.९८;३

$

- टीका रससरत्नसमुच्चयटीका:
- अथौषधयुक्तस्य पारदस्य मृन्मयभाण्डसंपुटितस्य मन्दवह्नियुक्तचुल्लीमध्ये क्षिप्त्वा यत् पुटनं स संन्यास इत्युच्यते ।। रसटी-८.९८;१

## स्वेदनसंन्यासगुणाः

द्वावेतौ स्वेदसंन्यासौ रसराजस्य निश्चितम् ।
गुणप्रभावजनकौ शीघ्रव्याप्तिकरौ तथा ।। रस-८.९९ ।।

रसनिगममहाब्धेः सोमदेवः समन्तात् स्फुटतरपरिभाषानामरत्नानि हृत्वा ।
व्यरचयदतियत्नात्तैरिमां कण्ठमालां कलयतु भिषगग्र्यो मण्डनार्थं सभायाम् ।। रस-८.१०० ।।

भवेत्पठितवारोऽयमध्यायो रसवादिनाम् ।
रसकर्माणि कुर्वाणो न स मुह्यति कुत्रचित् ।। रस-८.१०१ ।।

# रसरत्नसमुच्चय : अध्याय 09

https://sa.wikisource.org/s/80s

### रसरत्नसमुच्चय, ९

अथ यन्त्राणि वक्ष्यन्ते रसतन्त्राण्यशेषतः ।
समालोच्य समासेन सोमदेवेन साम्प्रतम् ।। रस-९.१ ।।

स्वेदादिकर्म निर्मातुं वार्त्तिकेन्द्रैः प्रयत्नतः ।

### यन्त्र > निरुक्ति

यन्त्र्यते पारदो यस्मात्तस्माद्यन्त्रमिति स्मृतम् ।। रस-९.२ ।।

### दोलायन्त्र

द्रवद्रव्येण भाण्डस्य पूरितार्धोदकस्य च ।
मुखस्योभयतो द्वारद्वयं कृत्वा प्रयत्नतः ।। रस-९.३ ।।

तयोस्तु निक्षिपेद् दण्डं तन्मध्ये रसपोटलीम् ।
बद्ध्वा तु स्वेदयेदेतद्दोलायन्त्रमिति स्मृतम् ।। रस-९.४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- दोलायन्त्रमाह द्रवद्रव्येणेति ।। रसबोध-९.४;१
- द्रवद्रव्येण काञ्जिकादिस्वेदनद्रव्येण ।। रसबोध-९.४;२
- मुखस्येति ।। रसबोध-९.४;३
- भाण्डकन्धरायाः प्रान्तद्वये छिद्रद्वयं कृत्वेत्यर्थः ।। रसबोध-९.४;४
- तयोः छिद्रयोः ।। रसबोध-९.४;५
- तन्मध्ये दण्डमध्ये ।। रसबोध-९.४;६
- स्वेदनार्हेण काञ्जिकादिना केनचित् द्रवेण भाण्डार्धमापूर्य भाण्डकन्धराप्रान्तद्वये छिद्रद्वयं कृत्वा तन्मध्ये दण्डमेकं निधाय तस्मिन् रसपोट्टलीं बद्ध्वा च एवं लम्बयेत् यथा भाण्डस्थद्रवे सा निमज्जेत् परं तु भाण्डम् न स्पृशेदिति निष्कर्षः ।। रसबोध-९.४;७

### स्वेदनीयन्त्र

साम्बुस्थालीमुखे बद्धवस्त्रे पाक्यं निवेशयेत् ।
पिधाय पच्यते यत्र स्वेदनीयन्त्रमुच्यते ।। रस-९.५ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ पत्रपुष्पादीनामतिमृदुद्रव्याणां स्वल्पस्वेदार्थं यन्त्रान्तरमाह साम्बुस्थालीति ।। रसटी-९.५;१

- स्थालीं चतुर्थांशजलेन पूरितोदरां जलेनार्धपूरितोदरां वा कृत्वा तस्या मुखम् आ समन्ताद् वस्त्रेण बद्धं यथा स्यात्तथा मुखाबद्धे वस्त्रे पाक्यं स्वेद्यम् अतिकोमलं द्रव्यं विनिक्षिप्य न्युब्जशरावादिना पिधायाच्छाद्य यत्र पच्यते तत् स्वेदनीयन्त्रमित्युच्यते ।। रसटी-९.५;२
- अस्यैव यन्त्रस्य कन्दुकसंज्ञां वक्ष्यति ।। रसटी-९.५;३

## पातनायन्त्र

अष्टाङ्गुलपरीणाहमानाहेन दशाङ्गुलम् ।
चतुरङ्गुलकोत्सेधं तोयाधारं गलादधः ।। रस-९.६ ।।

अधोभाण्डे मुखं तस्य भाण्डस्योपरि वर्तिनः ।
षोडशाङ्गुलविस्तीर्णपृष्ठस्यास्ये प्रवेशयेत् ।। रस-९.७ ।।

पार्श्वयोर् महिषीक्षीरचूर्णमण्डूरफाणितैः ।
लिप्त्वा विशोषयेत्संधिं जलाधारे जलं क्षिपेत् ।
चुल्ल्याम् आरोपयेद् एतत् पातनायन्त्रमुच्यते ।। रस-९.८ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथोर्ध्वपातनायन्त्रमाह अष्टाङ्गुलेति ।। रसटी-९.८;१
- अथ न्युब्जस्थाप्यस्य विशालपृष्ठस्य मृत्पात्रस्याङ्गुलाद् अधोऽङ्गुलमितपृष्ठभागाद् अधोभागे तोयाधारः कार्यः ।। रसटी-९.८;२
- कथम् ।। रसटी-९.८;३
- अष्टाङ्गुलपरीणाहम् अष्टाङ्गुलगर्भविस्तारं यथा स्यात्तथा ।। रसटी-९.८;४
- तथानाहेन बन्धेन सह दशाङ्गुलं यथा स्यात्तथा बन्ध आलवालं तत्प्रदेशं संगृह्य दशाङ्गुलविस्तारम् इत्यर्थः ।। रसटी-९.८;५
- एवं च बन्धस्थौल्यम् अङ्गुलद्वयमितं गर्भविस्तारश्चाष्टाङ्गुलमितः कार्य इत्यवतिष्ठते ।। रसटी-९.८;६
- न ह बन्धने ।। रसटी-९.८;७
- चतुरङ्गुलोच्छ्रायं यथा स्यात्तथा तोयाधारः पृष्ठे कार्य इत्यर्थः ।। रसटी-९.८;८
- तादृशाधारविशिष्टस्य षोडशाङ्गुलविस्तीर्णपृष्ठस्योपरिवर्तिनस्तस्य भाण्डस्यास्येऽधो भाण्डमुखं प्रवेशयेत् ।। रसटी-९.८;९
- ततो मुखपार्श्वयोर्महिषीक्षीरादिभिः संधिं लिप्त्वा विशोषयेत् ।। रसटी-९.८;१०
- चूर्णः सुधा श्वेतं लेपद्रव्यमित्यर्थः ।। रसटी-९.८;११
- पातनायन्त्रमीरितम् ।। रसटी-९.८;१२
- ऊर्ध्वपातनायन्त्रमुक्तमित्यर्थः ।। रसटी-९.८;१३

$

- टीका रससरत्नसमुच्चयबोधिनी:
- पातनायन्त्रस्य स्वरूपमाह अष्टाङ्गुलेति ।। रसबोध-९.८;१
- परीणाहः विस्तारः परिधिरिति यावत् ।। रसबोध-९.८;२
- आनाहः औन्नत्यं दैर्घ्यमिति यावत् ।। रसबोध-९.८;३
- उत्सेधः उपचितिः स्थौल्यमिति यावत् ।। रसबोध-९.८;४

### अधःपातनयन्त्र

अथोर्ध्वभाजने लिप्तस्थापितस्य जले सुधीः ।
दीप्तैर् वनोपलैः कुर्यादधः पातं प्रयत्नतः ।। रस-९.९ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अधःपातनयन्त्रमाह अस्योर्ध्वेति ।। रसटी-९.९;१
- जलाधारविहीनस्य वैपरीत्येन जले स्थापितस्यास्योक्तयन्त्रस्य संबन्धि यद् ऊर्ध्वभाजनं तत्र लिप्तस्थापितस्य लेपं कृत्वा स्थापितस्य पारदस्य यन्त्रोपरि दीप्तैर्वनोपलैरधःपातं कुर्यात् ।। रसटी-९.९;२
- इत्येतद् अधःपातनायन्त्रम् अभिहितम् ।। रसटी-९.९;३

$

- टीका रससरत्नसमुच्चयबोधिनी:
- अधःपातनायन्त्रे पातनक्रममाह अथेति ।
- अथ उक्तरीत्या यन्त्रनिर्माणानन्तरम् ऊर्ध्वभाजने उपरिस्थाधोमुखभाण्डोदरे इत्यर्थः आदौ लिप्तं पश्चात् स्थापितं तस्य लिप्तस्थापितस्य रसस्येति शेषः जले अधोभाण्डस्थिते इति शेषः दीप्तैः वनोत्पलैः वन्यकरीषाग्निभिः ।। रसबोध-९.९;१

### कच्छपयन्त्र

जलपूर्णपात्रमध्ये दत्त्वा घटखर्परं सुविस्तीर्णम् ।
तदुपरि विडमध्यगतः स्थाप्यः सूतः कृतः कोष्ठ्याम् ।। रस-९.१० ।।

लघुलोहकटोरिकया कृतषण्मृत्संधिलेपयाच्छाद्य ।
पूर्वोक्तघटखर्परमध्येऽङ्गारैः खदिरकोलभवैः ।। रस-९.११ ।।

स्वेदनतो मर्दनतः कच्छपयन्त्रस्थितो रसो जरति ।
अग्निबलेनैव ततो गर्भे द्रवन्ति सर्वसत्त्वानि ।। रस-९.१२ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- कच्छपयन्त्रं द्विविधं जलकच्छपं स्थलकच्छपं च ।। रसटी-९.१२;१
- तत्रेदानीं जलकच्छपमाह जलपूर्णेति ।। रसटी-९.१२;२
- घटखर्परं खण्डितमुखं सच्छिद्रं घटखण्डमुत्तानं दत्त्वा तदुपरि कोष्ठीं मूषां छिद्रे किंचित्प्रविष्टबुध्नां नीरावियोगिनीमुत्तानां सुदृढं निश्चलं संस्थाप्य कोष्ठीमभितः कुड्यं विदध्यात् ।। रसटी-९.१२;३
- कोष्ठ्यां बिडं तन्मध्ये पारदं च दत्त्वा स सम्यक्स्थाप्यः ।। रसटी-९.१२;४
- ततो लघुलोहकटोरिकया न्युब्जया तं पारदं कोष्ठ्यामाच्छाद्य मृत्कर्पटादिना संधिं रुद्ध्वा तद्घटखर्परम् अङ्गारैः करीषादिमिश्रैः पूर्णं कुर्यात् पूर्णं तद् घटखर्परम् अङ्गारैः करीषतुषमिश्रैः ।। रसटी-९.१२;५
- गर्भद्रवन्तीति स्थाने गर्भद्रुतिः सर्वलोहानामिति पाठः ।। रसटी-९.१२;६
- एवं रीत्या कच्छपयन्त्रस्थः पारदः स्वेदनतो वह्नितापेन मर्दनतो बिडादिना सह पाकावसरे तत्रैव जातेन मर्दनेन द्रुतं ग्रासं त्रिदिनं जरति ।। रसटी-९.१२;७

- एवं चैतद्यन्त्रं गर्भद्रुतिपूर्वकं जारणोपयोगीति भावः ।। रसटी-९.१२;८
- अत्र जलपूर्णपात्रं भूमावेव निखातं कृत्वा तन्मुखे सच्छिद्रमुत्तानं शरावं दत्त्वा तत्र छिद्रे नीरावियोगिनीं मूषां काचविलेपितां धृत्वा तत्र पारदस्याधस्तादुपरिष्टाच्च गन्धकं दत्त्वा पिधायोपर्युपलाग्निना गन्धकं जारयन्ति केचित् ।। रसटी-९.१२;९
- किंचैतद्घटकशरावे छिद्रसंस्थितां पक्वमूषां कृत्वा तस्यामष्टांशबिडावृतं पारदं धृत्वा लोहपात्र्यां संरुद्धं मुद्रितं च कृत्वा तदुपर्यष्टाङ्गुलमानां वालुकां विनिक्षिप्य हठात्तदुपरि ध्मानेन ध्मातं तद्गर्भसम्भूतं रसं मायूरपित्तलिप्तं काञ्चनं ग्रासयन्तीति ।। रसटी-९.१२;१०
- स्थलकूर्मयन्त्रं तु किंचिद्गर्तायुक्ते भूतले तथैव घटखर्परं न्युब्जं निधाय संधिलेपादि कृत्वा तदुपरि सर्वतः पार्श्वभागे च पुटं दद्यादिति ।। रसटी-९.१२;११
- तत्र गर्तायां वनसूरणादिकन्दोदरे बिडं तन्मध्ये सग्रासं पारदं दत्त्वा तत्कन्दशकलेनैवाच्छाद्य मृत्कर्पटादिनावेष्ट्य संशोष्य धारयेत् ।। रसटी-९.१२;१२
- पृष्ठे चाग्निं संततं दिनत्रयं दद्यात् ।। रसटी-९.१२;१३
- अन्तरान्तरा कन्दपरिवर्तनं कार्यं यथा कन्दो न दह्येत ।। रसटी-९.१२;१४
- एवं स्थलकूर्मयन्त्रेण जारणम् विदध्यादिति ।। रसटी-९.१२;१५
- कन्दे दग्धप्राये सति अन्यत्रान्यत्र कन्दे पूर्ववत्तं पारदं धृत्वा पाचयेत् ।। रसटी-९.१२;१६

#### दीपिकायन्त्र

कच्छपयन्त्रान्तर्गतमृन्मयपीठस्थदीपिकासंस्थः ।
यस्मिन्निपतति सूतः प्रोक्तं तद्दीपिकायन्त्रम् ।। रस-९.१३ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- दीपिकायन्त्रमाह कच्छपेति ।। रसबोध-९.१३;१
- वक्ष्यमाणकच्छपयन्त्रमध्यवर्तिमृन्मयघटखर्परररूपपीठोपरि प्रदीपमेकम् संस्थाप्य तत्र सूतं स्थापयेत् कच्छपयन्त्राधः वह्निं च दद्यात् एवं प्रदीपस्थसूतः कच्छपयन्त्रे पतति तत् दीपिकाख्यं यन्त्रं ज्ञेयम् ।। रसबोध-९.१३;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथ दीपिकायन्त्रमाह कच्छपयन्त्रेति ।। रसटी-९.१३;१
- जलपूर्णपात्रमध्ये घटकलशमुत्तानं निधाय तत्र कोष्ठीमकृत्वा तत्स्थाने मृन्मयपीठं कृत्वा तत्र दीपिकां निधाय दीपं प्रज्वाल्य नागस्वर्णबीजसहितं गन्धकमनःशिलाहरीतालसहितं च पारदं मर्दनेन पिष्टीकृतं पोटलिकायां बद्ध्वा कच्छपाकारन्युब्जमृत्पात्रोदरे तैलमग्नां तां पोटलीं दीपज्वालोपरि यथा स्यात्तथावलम्बितां बद्ध्वा तन्न्युब्जं पात्रं न्युब्जं निधाय दीपोष्मणा नागं भक्षयित्वा पारदो जलपात्रेऽधः पतति यस्मिन् यन्त्रे तद्दीपिकायन्त्रमुक्तम् ।। रसटी-९.१३;२
- नागजारणार्थस्य यन्त्रस्योपयोगो बोध्यः ।। रसटी-९.१३;३
- ततो जीर्णनागं पारदं भस्ममूषायां ध्मानेन वियुक्तं नागं कृत्वा तस्मिन्नसे साधकावरबीजं जारयन्तीति ।। रसटी-९.१३;४
- दीपिकासंस्थो दीपिकोपरि सम्यक्स्थित इत्यर्थः ।। रसटी-९.१३;५

#### डेकीयन्त्र

भाण्डकण्ठादधश् छिद्रे वेणुनालं विनिक्षिपेत् ।
कांस्यपात्रद्वयं कृत्वा सम्पुटं जलगर्भितम् ।। रस-९.१४ ।।

नलिकास्यं तत्र योज्यं दृढं तच्चापि कारयेत् ।
युक्तद्रव्यैर्विनिक्षिप्तः पूर्वं तत्र घटे रसः ।। रस-९.१५ ।।

अग्निना तापितो नालात्तोये तस्मिन्पतत्यधः ।
यावदुष्णं भवेत् सर्वं भाजनं तावदेव हि ।
जायते रससंधानं डेकीयन्त्रमितीरितम् ।। रस-९.१६ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- डेकीयन्त्रमाह भाण्डकण्ठादिति ।। रसबोध-९.१६;१
- भाण्डस्य कण्ठनिम्ने छिद्रमेकं विधाय तत्र वंशनिर्मितं नलमेकं संयोज्य स्थापयेत् ।। रसबोध-९.१६;२
- अन्यच्च जलपूर्णकांस्यपात्रद्वयेन संपुटमेकं कृत्वा भाण्डकण्ठस्थनलाग्रं तत्र प्रवेश्य दृढं सन्धिरोधं कुर्यात् ।। रसबोध-९.१६;३
- ततो भाण्डमध्ये निर्दिष्टद्रव्यैः सह रसं क्षिप्त्वा अग्निज्वाला देया तेन नालच्छिद्रानुसारी रसः कांस्यपात्रमध्यस्थजले पतति ।। रसबोध-९.१६;४
- एवं यावत् सर्वं पात्रं उष्णं भवेत् तावत् कुर्यात् ।। रसबोध-९.१६;५
- रससंधानं रसनिर्गमनम् इत्यर्थः ।। रसबोध-९.१६;६

$

- टीका रससरत्नसमुच्चयटीका:
- अथ ढेकीयन्त्रमाह भाण्डकण्ठादिति ।। रसटी-९.१६;१
- अधश्छिद्र उपकण्ठं कृते छिद्रे जलगर्भितं स्वादुशीतजलगर्भितम् ।। रसटी-९.१६;२
- युक्तद्रव्यैः शुद्धियोग्यैः काञ्जिकादिभिः पातनोपयोगिद्रवैश्च सह संयुक्तो रसो घटे सच्छिद्रोपकण्ठे वह्निस्थिते मृन्मयघटे पूर्वं विनिक्षिप्तः कार्यः ।। रसटी-९.१६;३
- भाजनं सम्पुटघटकम् अधोभाजनम् उष्णं यावद्भवेद् घटे तावदग्निः कार्य इत्यर्थः ।। रसटी-९.१६;४
- रससंधानं पारदस्य सम्यगाधानं स्थापनमित्यर्थः ।। रसटी-९.१६;५
- एतद्यन्त्रसमं देगयन्त्रं रससारेऽभिहितम् ।
- बृहद्भाण्डं समादाय कुक्षौ च छिद्रसंयुतम् ।
- भाण्डे काचघटीं क्षिप्त्वा मुखं छिद्रे नियोजयेत् ।। रसटी-९.१६;६
- तदास्ये काचनालं स्यात्तच्च नालमधोमुखम् ।
- रुद्ध्वा तदा तयोः संधिमर्धं च नालकं दिहेत् ।। रसटी-९.१६;७
- भाण्डं वालुकयापूर्य तस्य द्वारं निरुध्य च ।
- वह्नेः प्रज्वालनं तावद्यावत्तन्नालकं द्रवेत् ।। रसटी-९.१६;८
- शीतं यन्त्रं समुत्तार्य घटीं प्रक्षालयेत्ततः ।
- द्रावं क्षिप्त्वा पुनर्दद्यात्पुनः पाको विधीयते ।। रसटी-९.१६;९
- एवं रङ्गद्रुतिः प्रोक्ता देगयन्त्रेऽतिशोभना ।
- तालो नागः शिलाचौरः शुल्वो हंसश्च गन्धकः ।। रसटी-९.१६;१०
- एते रङ्गं विमुञ्चन्ति विद्रुमं गैरिकं तथा ।
- वालुकादेगयन्त्रेण पिच्छकेशा द्रवन्ति च ।। रसटी-९.१६;११

- इति ।। रसटी-९.१६;१२

### जारणायन्त्र

लोहमूषाद्वयं कृत्वा द्वादशाङ्गुलमानतः ।
ईषच्छिद्रान्वितामेकां तत्र गन्धकसंयुताम् ।। रस-९.१७ ।।

मूषायां रसयुक्तायाम् अन्यस्यां तां प्रवेशयेत् ।
तोयं स्यात्सूतकस्याध ऊर्ध्वाधो वह्निदीपनम् ।। रस-९.१८ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- जारणायन्त्रमाह लोहेत्यादि द्वाभ्याम् ।। रसबोध-९.१८;१
- वितस्तिमानं लौहमयमूषाद्वयं निर्माय तयोरीषच्छिद्रान्वितायाम् एकस्यां मूषायां गन्धकं संस्थापयेत् ततः रसगर्भायामन्यस्यां मूषायां पूर्वोक्तां सगन्धकमूषां प्रवेश्य सूतगर्भमूषाधो जलं स्थापयित्वा ऊर्ध्वाधश्च वह्निं प्रज्वालयेदिति ।। रसबोध-९.१८;२

### जारणायन्त्र (२)

रसोनकरसं भद्रे यत्नतो वस्त्रगालितम् ।
दापयेत्प्रचुरं यत्नादाप्लाव्य रसगन्धकौ ।। रस-९.१९ ।।

स्थालिकायां पिधायोर्ध्वं स्थालीमन्यां दृढां कुरु ।
संधिं विलेपयेद्यत्नान्मृदा वस्त्रेण चैव हि ।। रस-९.२० ।।

स्थाल्यन्तरे कपोताख्यं पुटं कर्षाग्निना सदा ।
यन्त्रस्याधः करीषाग्निं दद्यात्तीव्राग्निमेव वा ।। रस-९.२१ ।।

एवं तु त्रिदिनं कुर्यात्ततो यन्त्रं विमोचयेत् ।
तप्तोदके तप्तचुल्ल्यां न कुर्याच्छीतलां क्रियाम् ।। रस-९.२२ ।।

न तत्र क्षीयते सूतो न च गच्छति कुत्रचित् ।
अनेन च क्रमेणैव कुर्याद्गन्धकजारणम् ।। रस-९.२३ ।।

### विद्याधरयन्त्र

यन्त्रं विद्याधरं ज्ञेयं स्थालीद्वितयसम्पुटात् ।
चुल्लीं चतुर्मुखीं कृत्वा यन्त्रभाण्डं निवेशयेत् ।। रस-९.२४ ।।

तत्रौषधं विनिक्षिप्य निरुन्ध्याद्भाण्डकाननम् ।
यन्त्रं विद्याधरं नाम तन्त्रज्ञैः परिकीर्तितम् ।। रस-९.२५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- विद्याधरयन्त्रमाह यन्त्रमिति ।। रसबोध-९.२५;१
- स्थालीद्वितयसम्पुटात् हण्डिकाद्वयकृतपुटविशेषात् ।। रसबोध-९.२५;२
- तदेव विवृणोति चुल्लीमिति ।। रसबोध-९.२५;३
- अधोभाण्डे औषधं निक्षिप्य भाण्डान्तरेण मुखं पिधाय चुल्ल्यां चतुर्मुख्यां संस्थाप्य च ज्वाला देया ।। रसबोध-९.२५;४
- कोष्ठीयन्त्रमिति संज्ञान्तरमस्य ।। रसबोध-९.२५;५
- ग्रन्थान्तरे तु विद्याधरयन्त्रलक्षणम् अन्यविधं तत्तु अग्रे स्वयमेव वक्ष्यति ।। रसबोध-९.२५;६

$

- टीका रससरत्नसमुच्चयटीका:
- विद्याधरयन्त्रमाह ।। रसटी-९.२५;१
- तत्र प्रथमं तत्स्वरूपं समासत उक्त्वानन्तरं सविस्तरमाह यन्त्रमिति ।। रसटी-९.२५;२
- स्थालीद्वितयसंपुटादिति ।। रसटी-९.२५;३
- समस्थूलानामेव संपुटं भवति न तु महदत्यल्पयोरिति ।। रसटी-९.२५;४
- इति वक्ष्यमाणः स्थालीयन्त्रादस्याकृतिविशेषः स्फुटीकृतः ।। रसटी-९.२५;५
- अथ विस्तरेणाह चुल्लीं चतुर्मुखीमिति ।। रसटी-९.२५;६
- सर्वत्र साम्येनाग्निप्रवृत्त्यर्थं चतुर्मुखीम् इत्युक्तम् ।। रसटी-९.२५;७
- तत्र यन्त्रभाण्डं निवेशयेत् ।। रसटी-९.२५;८
- निरुन्ध्यात् ।। रसटी-९.२५;९
- न्युब्जमुखेन पात्रान्तरेण संपुटेत् ।। रसटी-९.२५;१०
- एतद्यन्त्रम् विद्याधरनाम्ना शास्त्रे परिकीर्तितम् ।। रसटी-९.२५;११
- अस्योपयोगस्तु सौम्यवीर्यद्रव्याणां मृद्वग्निना पाकार्थं बोध्यः ।। रसटी-९.२५;१२
- अत एव वक्ष्यति पञ्चदशाध्याये कनकसुन्दररसे दत्त्वा विद्याधरे यन्त्रे पुटेदारण्यकोपलैरिति ।। रसटी-९.२५;१३

### सोमानलयन्त्र

ऊर्ध्वं वह्निरधश्चापो मध्ये तु रससंग्रहः ।
सोमानलम् इदं प्रोक्तं जारयेद्गगनादिकम् ।। रस-९.२६ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- सोमानलयन्त्रमाह ऊर्ध्वमिति ।। रसबोध-९.२६;१
- गगनादिकम् अभ्रादिकम् ।। रसबोध-९.२६;२
- स्थालीमध्ये रसमूषां संस्थाप्य शरावेण मुखं पिधाय मृद्वस्त्रेण सन्धिं लिप्त्वा च जलपूर्णस्थाल्यन्तरोपरि स्थालीं तां स्थापयेत् शरावोपरि करीषाग्निं च दद्याद् इति ।। रसबोध-९.२६;३

$

- टीका रससरत्नसमुच्चयटीका:
- अथ सोमानलयन्त्रं समासत आह ऊर्ध्वं वह्निरिति ।। रसटी-९.२६;१

- मध्य इति ।। रसटी-९.२६;२
- अधःपात्रे जलं तदुपरि उत्तानं शरावादि दत्त्वा तत्र लघुमूषामुत्तानां धृत्वा तन्मध्ये बिडं बिडमध्ये सग्रासं पारदं च दत्त्वा दृढं पिधानेन पिधाय तदुपरि खर्परं दत्त्वा तत्राग्निर् देयः ।। रसटी-९.२६;३
- इति विधिना गगनसत्त्वादिकं जारयेदिति ।। रसटी-९.२६;४
- एतदेव यन्त्रं सनाभिनालं कृत्वाग्निमधो दत्त्वा नाभिमध्ये पारदं सग्रासं दत्त्वा जारयेदिति प्रकारान्तरेण रससारेऽभिहितम् ।। रसटी-९.२६;५
- तथा च तत्पाठः ।
- सोमानलस्य यन्त्रस्य नाभिमध्ये रसं क्षिपेत् ।
- दत्त्वाष्टांशं बिडं नाभिं किंचिदम्लेन पूरयेत् ।। रसटी-९.२६;६
- क्षाराम्लं त्र्यूषणं मूत्रं राजिका शिग्रु चित्रकम् ।
- नालं प्रपूरयेद् एभिर् नाभेश्चोपरि साधकः ।। रसटी-९.२६;७
- दद्यादुपरि यन्त्रस्य सच्छिद्रं समबुध्नकम् ।
- छिद्रे च दोरकं बद्ध्वा अम्लैः खर्परपूरणम् ।। रसटी-९.२६;८
- रसोपरि पतेद्बिन्दुः स्तोकं स्तोकं पुनः पुनः ।
- यन्त्राधः स्थापयेदग्निम् अहोरात्रत्रयं बुधः ।। रसटी-९.२६;९
- त्रिदिनैर् जीर्यते ग्रासं सूतको नात्र संशयः ।
- इति ।। रसटी-९.२६;१०
- सच्छिद्रं समबुध्नकमिति खर्परस्य विशेषणम् ।। रसटी-९.२६;११
- नालं तु क्षारादिपूरितं कृत्वा खर्परच्छिद्रसंमुखम् एवोच्छ्रितं कार्यमिति भावः ।। रसटी-९.२६;१२
- एतदेव यन्त्रं नाभिरहितं कृत्वा वैपरीत्येनाग्निजलस्थापनेन प्राप्ताग्नीषोमाख्यं पारदबन्धकरं भवतीत्यपि तद्ग्रन्थे एवाभिहितम् ।
- अथाधोऽग्निरुपर्यापो मध्ये देयो रसेश्वरः ।
- अग्नीषोमाख्ययन्त्रेण बध्यते सप्तरात्रतः ।। रसटी-९.२६;१३
- इति ।। रसटी-९.२६;१४

### गर्भयन्त्र

गर्भयन्त्रं प्रवक्ष्यामि पिष्टिकाभस्मकारकम् ।
चतुरङ्गुलदीर्घां च त्र्यङ्गुलोन्मितविस्तराम् ।। रस-९.२७ ।।

मृन्मयीं सुदृढां मूषां वर्तुलं कारयेन्मुखम् ।
लोणस्य विंशतिर्भागा भाग एकस्तु गुग्गुलोः ।। रस-९.२८ ।।

सुश्लक्ष्णं पेषयित्वा तु वारं वारं पुनः पुनः ।
मूषालेपं दृढं कृत्वा लवणार्धमृदम्बुभिः ।। रस-९.२९ ।।

कर्षेत् तुषाग्निना भूमौ स्वेदयेन्मृदु मानवित् ।
अहोरात्रं त्रिरात्रं वा रसेन्द्रो भस्मतां व्रजेत् ।। रस-९.३० ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- गर्भयन्त्रमाह गर्भयन्त्रमिति ।। रसबोध-९.३०;१

- पिष्टिका नष्टपिष्टीकृतः रसः इत्यर्थः ।। रसबोध-९.३०;२
- लोणस्य लवणस्य लोणस्य इत्यत्र लोहस्य इति पाठान्तरं न युक्तं लवणार्धमृदम्बुभिः इति वक्ष्यमाणवाक्यविरोधात् ।। रसबोध-९.३०;३
- अत्र वारं वारमिति पदं पेषयित्वा तथा पुनः पुनरिति पदं मूषालेपमित्यनेन योजनीयम् ।। रसबोध-९.३०;४
- लवणार्धमृदम्बुभिरिति सहार्थे तृतीया तेन लवणार्धमृदम्बुभिः सह लोणगुग्गुलू पेषयित्वा इति तथा विंशतिभागलवणापेक्षया मृदोऽर्धत्वमिति च बोध्यम् ।। रसबोध-९.३०;५
- कर्षेत् आतपे शोषयेत् ।। रसबोध-९.३०;६

$

- टीका रससरत्नसमुच्चयटीका:
- अथ गर्भयन्त्रं प्रतिजानीते गर्भयन्त्रमिति ।। रसटी-९.३०;१
- यत्र सर्वं यन्त्रं भूम्युदर एवावस्थितं विदध्यात् तद्गर्भयन्त्रं नाम ।। रसटी-९.३०;२
- तदेव स्पष्टीकरोति चतुरङ्गुलेति ।। रसटी-९.३०;३
- चतुरङ्गुलदीर्घादिलक्षणां मूषां विधाय तन्मुखं वर्तुलं कारयेत् ।। रसटी-९.३०;४
- सम्यक् पिधानसंधानार्थं यथोक्तभागं लोहकिट्टगुग्गुलयोर् गृहीत्वा भागत्रयं मृदो गृहीत्वैकभागात्मकं लवणं गृहीत्वा सर्वमेतज्जलेन संमर्द्य तेन मूषां सान्तर्बहिर्विलिप्य तत्र धात्वादिकृतपिष्टिकां संभृत्य सम्यक् पिधाय भूमिमध्यगां गजपुटपर्याप्तां गर्तां करीषमिश्रतुषैरर्धपूरितां कृत्वा तत्र मूषां धृत्वा तदुपरि गराकण्ठदघ्नं करीषतुषैरेव सम्पूर्यावशिष्टगर्तां मृत्तिकया सम्पूर्यान्तर्वायुप्रवेशार्थं किंचिदङ्गुलीसमं छिद्रं विधायाग्निं दत्वा स्वेदयेत् ।। रसटी-९.३०;५
- एवं निर्वाणाग्नितुषादियुक्त्या निष्कास्य पुनस्तुषादिपूरणादिसर्वमन्तरान्तरा कुर्यादहोरात्रपर्यन्तं त्रिरात्रपर्यन्तं वेति ।। रसटी-९.३०;६
- अत्र गोवरपुटं भूमावेव देयम् ।। रसटी-९.३०;७
- तदुक्तं रसराजसुन्दरे ।। रसटी-९.३०;८
- चूर्णीकृतकरीषाग्नौ भूमावेव तु यत्पुटम् ।
- दीयते तत्तु कृतिभिर्गोवरं समुदाहृतम् ।। रसटी-९.३०;९
- इति ।। रसटी-९.३०;१०

## हंसपाक

खर्परं सिकतापूर्णं कृत्वा तस्योपरि न्यसेत् ।
अपरं खर्परं तत्र शनैर् मृद्वग्निना पचेत् ।। रस-९.३१ ।।

पञ्चक्षारैस्तथा मूत्रैर् लवणं च विडं ततः ।
हंसपाकं समाख्यातं यन्त्रं तद् वार्तिकोत्तमैः ।। रस-९.३२ ।।

## वालुकायन्त्र

सरसां गूढवक्त्रां मृद्वस्त्राङ्गुलघनावृताम् ।
शोषितां काचकलशीं त्रिषु भागेषु पूरयेत् ।। रस-९.३३ ।।

भाण्डे वितस्तिगम्भीरे वालुकासुप्रतिष्ठिता ।
तद्भाण्डं पूरयेत्त्रिभिरन्याभिरवगुण्ठयेत् ।। रस-९.३४ ।।

भाण्डवक्त्रं मणिकया संधिं लिम्पेन् मृदा पचेत् ।

चुल्ल्यां तृणस्य चादाहान् मणिकापृष्ठवर्तिनः ।
एतद्धि वालुकायन्त्रं तद्यन्त्रं लवणाश्रयम् ।। रस-९.३५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वालुकायन्त्रमाह सरसामिति ।। रसबोध-९.३५;१
- सरसां पारदगर्भाम् ।। रसबोध-९.३५;२
- गूढवक्त्रां संकीर्णमुखीम् ।। रसबोध-९.३५;३
- मृदिति ।। रसबोध-९.३५;४
- मृद्वस्त्रेण मृल्लिप्तवस्त्रेण अङ्गुलघनं अङ्गुलमानोत्सेधं यथा तथा आवृताम् ।। रसबोध-९.३५;५
- त्रिषु भागेषु पूरयेत् पाच्यरसादिना काचकलस्याः भागत्रयं पूरयेदित्यर्थः ।। रसबोध-९.३५;६
- त्रिषु भागेष्विति अवच्छेदे सप्तमी ।। रसबोध-९.३५;७
- भाण्डे इत्यत्र काचकलसीं स्थापयेदिति शेषः ।। रसबोध-९.३५;८
- वालुकाभिः कियान् भागः पूरयितव्य इत्यपेक्षायामाह तद्भाण्डमिति ।। रसबोध-९.३५;९
- त्रिभिरित्यत्र ।। रसबोध-९.३५;१०
- भागैरिति शेषः ।। रसबोध-९.३५;११
- तृतीया चात्र अभेदे भाण्डस्य भागत्रयमित्यर्थः पूरयेत् वालुकयेति शेषः अन्याभिः वालुकाभिरित्यर्थः अवशिष्टांशं पूरयेदिति शेषः ।। रसबोध-९.३५;१२
- अवगुण्ठयेदित्यस्य मणिकया इत्यनेन सम्बन्धः मणिकया शरावेण ।। रसबोध-९.३५;१३
- अयमर्थः संकीर्णमुखीं काचकूपिकां मृद्वस्त्रेणाङ्गुलोत्सेधमालिप्य शोषयित्वा च तस्या भागत्रयं रसेनापूरयेत् ततो वितस्तिप्रमाणगभीरे वालुकया त्रिभागपूर्णे भाण्डमध्ये तां निवेश्य ऊर्ध्वं वालुकया आच्छादयेत् ततश्च शरावेण भाण्डवक्त्रं पिधाय मृत्तिकया संधिं लिप्त्वा च तावत् पचेत् यावत् शरावोपरि न्यस्तं तृणं न दहेदिति ।। रसबोध-९.३५;१४
- तुल्यलक्षणत्वात् वालुकायन्त्रप्रसङ्गे लवणयन्त्रम् अप्यतिदिशति तदिति ।। रसबोध-९.३५;१५
- तद् उक्तप्रकारं यन्त्रं लवणाश्रयम् अपि भवतीति शेषः लवणयन्त्रम् अपि वालुकायन्त्रम् भवतीत्यर्थः ।। रसबोध-९.३५;१६

$

- टीका रससरत्नसमुच्चयटीका:
- वालुकायन्त्रं द्विविधमाह सुरसामिति ।। रसटी-९.३५;१
- सुरसां ग्रन्थिकोटररेखाद्यभावेन सुलक्षणां ।। रसटी-९.३५;२
- गूढवक्त्राम् अकरालमुखाम् अद्रिमृत्कर्पटादिना त्रिवारं सप्तवारं वा कृतेनाङ्गुलस्थूलेन वेष्टिताम् आतपे संशोषितां काचघटीम् उदरस्य भागचतुष्टयं परिकल्प्य त्रिषु भागेषु पूरयेत् ।। रसटी-९.३५;३
- तस्या गर्भे भागत्रयं कज्जल्यादिना भेषजेन पूरयेत् ।। रसटी-९.३५;४
- एवं सम्पूरितां तां वितस्तिगम्भीरे भाण्डे मृन्मये विशालखर्परे पूरितवालुकामध्ये स्थापितां कुर्यात् ।। रसटी-९.३५;५
- पूरणीयवालुकाया मानमप्याह तद्भाण्डं पूरयेदिति ।। रसटी-९.३५;६
- भाण्डोदरस्यापि भागचतुष्टयं परिकल्प्य तद्भाण्डं वालुकया त्रिभिर्भागैर्मितया त्रिभागपूरणपर्याप्तया पूरयेत्संभरेत् ।। रसटी-९.३५;७
- अन्याभिर् अवशिष्टैकभागमिताभिर् वालुकाभिः काचकलशीम् अभितः प्रक्षेपेणावगुण्ठयेत् ।। रसटी-९.३५;८
- कण्ठपर्यन्तम् आच्छादितां कुर्यादित्यर्थः ।। रसटी-९.३५;९
- भाण्डमुखं च मणिकया विशालन्युब्जमृत्पात्रेणाच्छाद्य संधिलेपादि कृत्वा चुल्ल्यां पचेत् ।। रसटी-९.३५;१०
- तत्पचनकालमानम् आह तृणस्येति ।। रसटी-९.३५;११
- मणिकापृष्ठे प्रक्षिप्ततृणदाहपर्यन्तं पचेत् ।। रसटी-९.३५;१२

- तृणदाहेत्युपलक्षणम् ।। रसटी-९.३५;१३
- सिन्दूररसादौ रक्तवर्णोत्पत्तिपर्यन्तमपि पाकस्यावश्यकत्वात् ।। रसटी-९.३५;१४
- स च वर्णो ज्ञेयः ।। रसटी-९.३५;१५
- कूपीमुखाद् उद्गतरक्तवर्णबाष्पदर्शनेनेति बोध्यम् ।। रसटी-९.३५;१६

### वालुकायन्त्र (२)

पञ्चाढवालुकापूर्णभाण्डे निक्षिप्य यत्नतः ।
पच्यते रसगोलाद्यं वालुकायन्त्रम् ईरितम् ।। रस-९.३६ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- अन्यविधं वालुकायन्त्रमाह पञ्चेति ।। रसबोध-९.३६;१
- चत्वारिंशच्छरावमितवालुकापूर्णभाण्डे इत्यर्थः ।। रसबोध-९.३६;२
- अत्र वालुकामध्ये एव रसगोलादिकं स्थापयेत् न तु काचकूप्यामिति विशेषः ।। रसबोध-९.३६;३

### लवणयन्त्र (१)

एवं लवणनिक्षेपात्प्रोक्तं लवणयन्त्रकम् ।। रस-९.३७ ।।

### लवणयन्त्र (२)

अन्तःकृतरसालेपताम्रपात्रमुखस्य च ।
लिप्त्वा मृल्लवणेनैव संधिं भाण्डतलस्य च ।। रस-९.३८ ।।

तद्भाण्डं पटुनापूर्य क्षारैर्वा पूर्ववत्पचेत् ।
एवं लवणयन्त्रं स्याद् रसकर्मणि शस्यते ।। रस-९.३९ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अन्तः कृतरसालेप इति ।। रसटी-९.३९;१
- आलेप इत्युपलक्षणम् ।। रसटी-९.३९;२
- मृद्भाण्डे खर्परसमाने विशालमुखेऽन्तस्तले न्युब्जं स्थापनीयं यल्लघु ताम्रपात्रं तत् पारदादिगोलकोपरि न्युब्जं निधाय मृल्लवणादिना भाण्डतलताम्रपात्रमुखसंधिं विलिप्य तयन्त्रभाण्डं लवणक्षाराद्यन्यतमेनापूर्य पिधानेन पिधाय प्रहरपर्यन्तं शालिस्फुटनपर्यन्तं प्रहरपर्यन्तं वा पचेत् ।। रसटी-९.३९;३
- एवंविधमपि यन्त्रं लवणयन्त्राख्यमेतद् रसकर्मणि पाकमूर्छनादिकर्मणि प्रशस्तं स्यात् ।। रसटी-९.३९;४

$

- टीका रससरत्नसमुच्चयबोधिनी:

- लवणयन्त्रस्य प्रकारान्तरमाह अन्तरिति ।। रसबोध-९.३९;१
- अन्तस् ताम्रपात्रमध्ये इत्यर्थः कृतः रसेन आलेपः यत्र तथाभूतं यत् ताम्रपात्रं तस्य मुखं तस्य रसलिप्तोदरताम्रपात्रमुखस्य तथा भाण्डतलस्य ताम्रपात्रमुखोपरि स्थापितभाण्डाधोभागस्य ।। रसबोध-९.३९;२
- तद्भाण्डम् उपरिस्थभाण्डम् ।। रसबोध-९.३९;३
- पूर्ववत् तृणस्य चादाहाद् इत्यर्थः ।। रसबोध-९.३९;४
- ताम्रपात्रोदरे रसं निक्षिप्य तदुपरि लवणपूर्णं क्षारपूर्णं वा भाण्डमेकं विन्यसेत् ततो मृल्लवणेन सन्धिं रुद्ध्वा पचेत् इति ।। रसबोध-९.३९;५

### नालिकायन्त्र

लोहनालगतं सूतं भाण्डे लवणपूरिते ।
निरुद्धं विपचेत्प्राग्वन् नालिकायन्त्रम् ईरितम् ।। रस-९.४० ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- नालिकायन्त्रमाह लोहेति ।। रसबोध-९.४०;१
- लौहमयनालमध्ये पारदम् आपूर्य छिद्ररोधं कृत्वा च लवणपूरितभाण्डान्तः नालं तं निरुन्ध्यात्ततो मणिकया भाण्डवक्त्रम् आच्छाद्य आलिप्य च सन्धिं तावत् पचेत् यावत् शरावोपरिस्थं तृणं न दहेत् इति ।। रसबोध-९.४०;२

### भूधरयन्त्र

वालुकागूढसर्वाङ्गां गर्ते मूषां रसान्विताम् ।
दीप्तोपलैः संवृणुयाद् यन्त्रं तद् भूधराह्वयम् ।। रस-९.४१ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ भूधरयन्त्रमाह वालुकेति ।। रसटी-९.४१;१
- गर्ते राजहस्तमात्रगम्भीरे गर्ते हस्तमात्रायामविस्तारे चतुरस्रे वर्तुले वा तादृशे गर्ते रसान्वितां पारदगर्भितां मल्लमूषां वालुकागूढसर्वाङ्गां निधाय गर्तकण्ठपर्यन्तं वालुकया प्रपूर्योपरि किंचित्पार्श्वे च दीप्तवन्योपलैः संवृणुयादाच्छादयेत् ।। रसटी-९.४१;२
- समन्ततो वन्योपलैराच्छाद्य ज्वालयेदित्यर्थः ।। रसटी-९.४१;३
- अत्र पारदस्य यन्त्रणमात्रं वालुकायां भूमावेव वह्निस्तूपर्येव गर्भयन्त्रे सर्वमेव भूगर्भे ।। रसटी-९.४१;४
- भूधरपुटे तु न वालुकासंबन्धः ।। रसटी-९.४१;५
- इति त्रयाणां यन्त्रपुटानां विशेषो बोध्यः ।। रसटी-९.४१;६

### पुटयन्त्र

शरावसम्पुटान्तस्थं करीषेष्व् अग्निमानवित् ।
पचेच्चुल्ल्यां द्वियामं वा रसं तत् पुटयन्त्रकम् ।। रस-९.४२ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- पुटयन्त्रमाह शरावेति ।। रसबोध-९.४२;१
- करीषेषु पचेत् अथवा अग्निमानविद् द्वियामं चुल्ल्याम् अङ्गारेषु पचेद् योज्यम् ।। रसबोध-९.४२;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथ पुटयन्त्रमाह शरावेति ।। रसटी-९.४२;१
- भूमितले करीषराशिं कृत्वा तत्र शरावसंपुटितं पारदं च धृत्वाग्निमानविद्वैद्यो घाटिकाद्वयपर्यन्तं पचेत् ।। रसटी-९.४२;२
- अत्यन्तसंनिहिताग्निसंयोगात् ।। रसटी-९.४२;३
- अथवा चुल्ल्यां करीषाग्निं दत्त्वाधिश्रितखर्परे शरावसंपुटितं रसं धृत्वा खर्परमुखमाच्छाद्य यामपर्यन्तं द्वियामं वा पचेत् ।। रसटी-९.४२;४
- दूरतराग्निसंयोगात् ।। रसटी-९.४२;५
- एवं न्यूनाधिकः पचनकालो रसयोगिद्रव्यायुद्गमशालित्वावयवशैथिल्यकाठिन्याद्यनुरोधेन स्वबुद्ध्यैव तर्क्य इति भावः ।। रसटी-९.४२;६

### कोष्ठीयन्त्र

षोडशाङ्गुलविस्तीर्णं हस्तमात्रायतं समम् ।
धातुसत्त्वनिपातार्थं कोष्ठीयन्त्रम् इति स्मृतम् ।। रस-९.४३ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- कोष्ठीयन्त्रमाह षोडशेति ।। रसबोध-९.४३;१
- अत्र सममिति पदेन मिलितभाण्डद्वयस्य षोडशाङ्गुलत्वादि बोध्यम् एवं च वितस्तिप्रमाणदीर्घस्य अष्टाङ्गुलविस्तीर्णस्य च अधोभाण्डस्य मुखोपरि तावन्मानं भाण्डान्तरम् अधोमुखं संस्थाप्य अधो दृढाङ्गारैर् भस्त्रया धमेत् तेन धातुसत्त्वं निर्गच्छतीति ।। रसबोध-९.४३;२
- अत्रिसंहितायाम् एतच्छ्लोकानन्तरम् अस्यैवापरांशः पठितः तद्यथा ।। रसबोध-९.४३;३
- परिपूर्णं दृढाङ्गारैरधो वातेन कोष्ठके ।
- मात्रया ज्वालमार्गेण ज्वालयेच्च हुताशनम् ।। रसबोध-९.४३;४
- इति ।। रसबोध-९.४३;५

$

- टीका रससरत्नसमुच्चयटीका:
- अथ कोष्ठीयन्त्रमाह षोडशाङ्गुलेति ।। रसटी-९.४३;१
- धातुसत्त्वेति ।। रसटी-९.४३;२
- विशिष्टधातूनां ताप्यगैरिकविमलादीनाम् अनुद्गमशालिनां मृदूनां च सत्त्वस्य निपातार्थम् एतद्यन्त्रं विद्यात् ।। रसटी-९.४३;३
- अस्यां कोष्ठ्यां मध्य उचितां धातुगर्भितां वृन्ताकादिमूषां संस्थाप्य कोकिलैर् मूषाम् उपर्युपरिभावेन पार्श्वतश्च सम्पूर्य यथोचितं धमेत् ।। रसटी-९.४३;४
- लघुभस्त्रिकादिनेत्यर्थः ।। रसटी-९.४३;५

- कोष्ठीयन्त्रे सत्त्वनिपातनार्हा धातव उदाहृताश्च रससारे ।
- वैक्रान्तं सस्यकं ताप्यं कान्ताभ्रे विमलं गिरिः ।
- गैरिका तुत्थकं चैव राजावर्तो विशेषतः ।। रसटी-९.४३;६
- एषाम् उपरसानां च कोष्ठे सत्त्वनिपातनम् ।
- इति ।। रसटी-९.४३;७

## वलभीयन्त्र

यत्र लोहमये पात्रे पार्श्वयोर्वलयद्वयम् ।
तादृक् स्वल्पतरं पात्रं वलयप्रोतकोष्ठकम् ।। रस-९.४४ ।।

पूर्वपात्रोपरि न्यस्य स्वल्पपात्रे परिक्षिपेत् ।
रसं संमूर्छितं स्थूलपात्रम् आपूर्य काञ्जिकैः ।। रस-९.४५ ।।

द्वियामं स्वेदयेदेव रसोत्थापनहेतवे ।
एतत्स्याद् वलभीयन्त्रं रसे षाड्गुण्यकारकम् ।
सूक्ष्मकान्तमये पात्रे रसः स्याद्गुणवत्तरः ।। रस-९.४६ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वलभीयन्त्रमाह यत्रेति ।। रसबोध-९.४६;१
- वलयद्वयं वलयं कडा आंटा इति ख्यातं ।। रसबोध-९.४६;२
- तादृक् लोहमयम् ।। रसबोध-९.४६;३
- वलयेति ।। रसबोध-९.४६;४
- वलये बृहत्पात्रस्थवलये प्रोतम् आबद्धं कोष्ठं मध्यदेशो यस्य तादृशम् ।। रसबोध-९.४६;५
- अयमर्थो बृहदाकारं कान्तलौहमयं पात्रमेकं निर्माय तस्यान्तर्गलाद् अधःपार्श्वद्वये वलयद्वयं संयोजनीयं क्षुद्राकारम् अपरमपि तथाविधं पात्रमेकं कृत्वा बृहत्पात्रस्थे वलये अस्पृष्टतलभागं यथा तथा आबध्य तत्र मूर्छितरसं परिक्षिपेत् काञ्जिकेन स्थूलपात्रं च पूरयेदिति ।। रसबोध-९.४६;६
- रसे षाड्गुण्यकारकं षाड्गुण्यं विद्या वितर्को विज्ञानं स्मृतिस्तत्परता क्रिया इत्युक्तषड्गुणप्रदशक्तिजनकम् एवंविधरसोपयोक्ता उक्तषाड्गुण्यसिद्धिं लभते इत्यर्थः ।। रसबोध-९.४६;७

$

- टीका रससरत्नसमुच्चयटीका:
- अथ खलचरीयन्त्रमाह यत्रेति ।। रसटी-९.४६;१
- यन्त्रभूते लोहपात्र आभ्यन्तरोपकण्ठे पार्श्वयोर् अवसञ्जनार्थं वलयद्वयं कार्यं ।। रसटी-९.४६;२
- वलयमध्ये तु प्रवेशार्हकोष्ठकं लौहं स्वल्पपात्रमन्यद्विधाय मूर्छितरसगर्भितं तत्स्वल्पपात्रं प्रवेश्य वलययोर् अवसज्जितं कृत्वा स्थूलपात्रे काञ्जिकं प्रभूतं दत्त्वा चुल्ल्यां मन्दाग्निना प्रहरपर्यन्तं स्वेदयेत् ।। रसटी-९.४६;३
- तेन पारद उत्थाय काञ्जिकद्रवे प्रविश्य तिष्ठति अत एवास्य यन्त्रस्य जलाहार्ययन्त्रम् इत्यपि नामान्तरं काञ्जिकजलेन स्वल्पपात्राद् रसस्य ह्रियमाणत्वादिति ।। रसटी-९.४६;४
- मूर्छितो रस उत्थाय खलेऽङ्गणे चरितुं शक्नोत्यनेनेति व्युत्पत्त्या खलचरीत्यपि नाम ।। रसटी-९.४६;५

- अत्र यत्स्वल्पं पात्रं तत्कान्तमयं कृत्वा यन्त्रे तत्पात्रमध्ये पारदो धृतश्चेद् अतिशयेन गुणवान्भवति ।। रसटी-९.४६;६
- उक्तं च रसार्णवे ।
- न सूतेन विना कान्तं न कान्तेन विना रसः ।
- कान्तसूतसमायोगात् प्रयोगो देहधारकः ।। रसटी-९.४६;७
- इति ।। रसटी-९.४६;८

### तिर्यक्पातनयन्त्र

क्षिपेद्रसं घटे दीर्घनताधोनालसंयुते ।
तन्नालं निक्षिपेदन्यघटकुक्ष्यन्तरे खलु ।। रस-९.४७ ।।

तत्र रुद्ध्वा मृदा सम्यग्वदने घटयोरथ ।
अधस्ताद्रसकुम्भस्य ज्वालयेत्तीव्रपावकम् ।। रस-९.४८ ।।

इतरस्मिन्घटे तोयं प्रक्षिपेत्स्वादु शीतलम् ।
तिर्यक्पातनम् एतद्धि वार्त्तिकैर् अभिधीयते ।। रस-९.४९ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- तिर्यक्पातनयन्त्रमाह क्षिपेदिति ।। रसबोध-९.४९;१
- दीर्घनताधोनालसंयुते दीर्घाकारं नतं निम्नाभिमुखं च यत् अधोनालं तेन संयुते ।। रसबोध-९.४९;२
- अयं विधिः एकस्मिन् घटे रसं निधाय तस्य उदराधो दीर्घम् अधोलम्बितं नालमेकं संयोज्य द्वितीयघटोदरस्थच्छिद्रे नालाग्रं प्रवेश्य मृद्वस्त्रेण सन्धिमालिप्य च घटयोर्मुखम् अपि तथा लिम्पेत् रसकुम्भाधश्च तीव्राग्निं प्रज्वालयेत् द्वितीयघटे स्वादुशीतलं जलं च प्रक्षिपेत् इति ।। रसबोध-९.४९;३

$

- टीका रससरत्नसमुच्चयटीका:
- अथ तिर्यक्पातनयन्त्रमाह क्षिपेद्रसमिति ।। रसटी-९.४९;१
- नताधोनालेति नतोपकण्ठच्छिद्रसंलग्नाधोनालसंयुते ।। रसटी-९.४९;२
- अन्यघटः पार्श्वे निम्नदेशे स्थितः ।। रसटी-९.४९;३
- ततो घटयोर्वदने रुद्ध्वा पिधानाभ्यां पिधाय संधिलेपादि कृत्वाधो घटयोर् वदनयोर् अधःस्थितनलिकायोजितच्छिद्रयोर् अपि संधिलेपं कृत्वा ज्वालयेत् ।। रसटी-९.४९;४
- घटान्तरे तापोत्पत्तिपर्यन्तं पारदशुद्ध्यर्थम् एतद्यन्त्रस्योपयोगो बोध्यः ।। रसटी-९.४९;५

### पालिकायन्त्र

चषकं वर्तुलं लौहं विनताग्रोर्ध्वदण्डकम् ।
एतद्धि पालिकायन्त्रं बलिजारणहेतवे ।। रस-९.५० ।।

---

- टीका रससरत्नसमुच्चयटीका:
- पालिकायन्त्रमाह चषकमिति ।। रसटी-९.५०;१
- चषकं दर्वीसमानं पात्रम् ।। रसटी-९.५०;२
- तत्तु न तिर्यग्दण्डं किंतु विनताय उच्छ्रितो दण्डो यस्य तथोक्तम् ।। रसटी-९.५०;३
- एतद्यन्त्रं सधूमगन्धकजारणोपयोगि तथा भैरवनाथोक्तपर्पट्यादिविधौ चोपयोक्ष्यते ।। रसटी-९.५०;४

$

- टीका रससरत्नसमुच्चयबोधिनी:
- पालिकायन्त्रमाह चषकमिति ।। रसबोध-९.५०;१
- विनतम् अग्रं यस्य तत् न्युब्जीकृताग्रभागम् ऊर्ध्वम् उच्चैःकृतं दण्डं यस्य तद् उन्नतदण्डं विनताग्रं च तद् ऊर्ध्वदण्डं चेति विनताग्रोर्ध्वदण्डकं लौहं लोहमयं वर्तुलं गोलाकारं चषकं कटोरिका कार्यमिति शेषः ।। रसबोध-९.५०;२
- चषकशब्दस्य मद्यपानपात्रार्थकत्वेऽपि पात्रमात्रार्थकत्वं प्रागेव प्रदर्शितम् ।। रसबोध-९.५०;३
- बलिजारणहेतवे गन्धकजारणार्थम् ।। रसबोध-९.५०;४

### घटयन्त्र

चतुष्प्रस्थजलाधारश् चतुरङ्गुलिकाननः ।
घटयन्त्रम् इदं प्रोक्तं तदाप्यायनकं स्मृतम् ।। रस-९.५१ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- घटयन्त्रमाह चतुरिति ।। रसबोध-९.५१;१
- षोडशशरावमितजलधारणसमर्थः चतुरङ्गुलविस्तृतमुखविशिष्टश्च घटः घटयन्त्रमिति निष्कर्षः ।। रसबोध-९.५१;२
- आप्यायनकं रसादीनां तर्पणं षाड्गुण्यसंपादनमिति यावत् ।। रसबोध-९.५१;३
- आप्यायनकम् इत्यत्र उत्थापनकम् इति पाठे रसोत्थापनसाधनमित्यर्थः ।। रसबोध-९.५१;४

### इष्टिकायन्त्र

विधाय वर्तुलं गर्तं मल्लमत्र निधाय च ।
विनिधायेष्टकां तत्र मध्यगर्तवतीं शुभाम् ।। रस-९.५२ ।।

गर्तस्य परितः कुर्यात्पालिकाम् अङ्गुलोच्छ्रयाम् ।
गर्ते सूतं विनिक्षिप्य गर्तास्ये वसनं क्षिपेत् ।। रस-९.५३ ।।

निक्षिपेद्गन्धकं तत्र मल्लेनास्यं निरुध्य च ।
मल्लपालिकयोर्मध्ये मृदा सम्यङ् निरुध्य च ।। रस-९.५४ ।।

वनोपलैः पुटं देयं कपोताख्यं न चाधिकम् ।
इष्टिकायन्त्रम् एतत् स्याद् गन्धकं तेन जारयेत् ।। रस-९.५५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- इष्टकायन्त्रमाह विधायेति ।। रसबोध-९.५५;१
- मल्लं शरावपात्रम् ।। रसबोध-९.५५;२
- पालिकाम् आलवालम् ।। रसबोध-९.५५;३
- गोलाकारं गर्तमेकम् कृत्वा तत्र शरावं संस्थाप्य तदुपरि मध्यच्छिद्रामिष्टकाम् एकां विन्यसेत् इष्टकागर्तं परितः अङ्गुलिमितोन्नतम् आलवालम् एकं च कुर्यात् तत इष्टकारन्ध्रे पारदं विनिक्षिप्य रन्ध्रमुखे वस्त्रं तदुपरि गन्धकं च विन्यस्य शरावान्तरेण रुद्ध्वा शरावालवालयोः संधिं मृदा सम्यगालिप्य च वन्यकरीषैः कपोताख्यपुटं दद्यादिति निष्कर्षः ।। रसबोध-९.५५;४

$

- टीका रससरत्नसमुच्चयटीका:
- अथेष्टिकायन्त्रं लक्षयति निधाय वर्तुलामिति ।। रसटी-९.५५;१
- मल्लं गम्भीरोदरं क्षुद्रं मृन्मयं पात्रं तद्गर्तामध्ये संस्थाप्य तत्रैकाम् इष्टिकां मध्यगर्तवर्तीं च निधायेष्टिकाघटकगर्तस्य परितः समन्ततोऽङ्गुलोच्छ्रायां पालिकाम् आलवालं विधाय तद्गर्ते पारदं क्षिप्त्वा तद्गर्तमुखे वस्त्रं प्रसार्य तच्च दृढं बद्ध्वा तदुपरि समभागं गन्धकं दत्त्वा न्युब्जमल्लेन गर्तमुखं रुद्ध्वा मल्लपालिमध्यभागं मृदा सम्यग्रुद्ध्वोपरि वन्योपलैः कपोतपुटं पुनः पुनर्देयम् ।। रसटी-९.५५;२
- इष्टिकया पारदस्य यन्त्रणाद् एतद्यन्त्रम् इष्टिकायन्त्रनाम्ना कथितम् ।। रसटी-९.५५;३
- तेन निर्धूमगन्धकजारणं कुर्यात् ।। रसटी-९.५५;४
- जीर्णे च गन्धके पारदो रक्तवर्णो भवेत् ।। रसटी-९.५५;५
- अत्र द्रुतपारदे गन्धकजारणायां गर्तास्ये वस्त्राच्छादनं वस्त्रोपरि गन्धकं च दद्यादिति विधिक्रमः ।। रसटी-९.५५;६
- यत्र तु बद्धस्य रसस्य गन्धकजारणा कर्तव्या स्यात्तदा तु पारदं वस्त्रेण बद्ध्वा तस्याधस्ताद् उपरिष्टाच्च गन्धकं दत्त्वा जारयेदित्यनुक्तोऽपि विशेषो बोध्यः ।। रसटी-९.५५;७

## हिङ्गुलाकृष्टिविद्याधरयन्त्र

स्थालिकोपरि विन्यस्य स्थालीं सम्यङ् निरुध्य च ।
ऊर्ध्वस्थाल्यां जलं क्षिप्त्वा वह्निं प्रज्वालयेद् अधः ।
एतद् विद्याधरं यन्त्रं हिङ्गुलाकृष्टिहेतवे ।। रस-९.५६ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- हिङ्गुलाकृष्टिविद्याधरयन्त्रमाह स्थालिकोपरीति ।। रसबोध-९.५६;१
- स्थालीमित्यत्र ऊर्ध्वमुखीमिति शेषो बोध्यः ।। रसबोध-९.५६;२
- अत्र हिङ्गुलाकृष्टिप्रकारस्य अनुक्तत्वात् ग्रन्थान्तरोक्तस्तत्प्रकारः प्रदर्श्यते तद्यथा जम्बीरादिरसशोधितहिङ्गुलम् अधःस्थाल्यां पर्णोपरि संस्थाप्य कठिनीघृष्टतलभागाम् उत्तानां स्थालीमपरां तदुपरि दत्त्वा मृदम्बरादिभिः संधिम् आलिप्य च अधो ज्वाला देया ऊर्ध्वस्थाल्यां जलं च उष्णे च तस्मिन् तत् निक्षिप्य पुनर्देयम् एवं त्रिंशद्वारं कुर्यात् ।। रसबोध-९.५६;३
- ग्रन्थान्तरेऽस्य ऊर्ध्वपातनमिति नामान्तरम् ।। रसबोध-९.५६;४
- कृचिदेतद् अनन्तरं ।

- रसं संमूर्छितं स्थूलपात्रम् आपूर्य काञ्जिकैः ।
- द्वियामं स्वेदयेदेनं रसोत्थापनहेतवे ।। रसबोध-९.५६;५
- इत्यधिकः पाठो विद्यते ।। रसबोध-९.५६;६

$

- टीका रससरत्नसमुच्चयटीका:
- अथ हिङ्गुलाकृष्टिविद्याधरयन्त्रमाह स्थालिकोपरि विन्यस्येति ।। रसटी-९.५६;१
- अन्तस्तले निहितशुष्कहिङ्गुलाया विशालमुखायाः स्थालिकाया उपर्युत्तानामेव लघुस्थालीं विन्यस्य स्थापयित्वा संधिलेपादिना रुद्ध्वोर्ध्वस्थाल्यां किंचिच्छीतलजलं पुनः पुनर्दद्यात् ।। रसटी-९.५६;२
- अधश्चुल्ल्यां वह्निं ज्वालयेत्प्रहरत्रयपर्यन्तम् ।। रसटी-९.५६;३
- एतद्यन्त्रं पारदस्य हिङ्गुलाद् वियुज्योर्ध्वपात्रतल आकृष्टिकरं स्यात् ।। रसटी-९.५६;४
- एतदाकृष्टरसस्य षोडशाध्याये चण्डसंग्रहगदैककपाटविधावन्यत्र चोपयोगं वक्ष्यति ।। रसटी-९.५६;५

#### डमरुयन्त्र

यन्त्रस्थाल्युपरि स्थालीं न्युब्जां दत्त्वा निरुन्धयेत् ।
यन्त्रं डमरुकाख्यं तद्रसभस्मकृते हितम् ।। रस-९.५७ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ डमरुयन्त्रमाह पारदौषधगर्भितयन्त्रस्थाल्युपरि न्युब्जामेव स्थालीं निधाय निरुन्धयेत् ।। रसटी-९.५७;१
- मृत्कर्पटादिना संधिरोधं कुर्यात् ।। रसटी-९.५७;२
- यन्त्रस्याधस्ताद् अग्निः कार्यः ।। रसटी-९.५७;३
- एतद् यन्त्रं डमरुकाख्यम् ऊर्ध्वतलगपारदभस्मकर्मण्युपयुज्यते ।। रसटी-९.५७;४

#### नाभियन्त्र

मल्लमध्ये चरेद्गर्तं तत्र सूतं सगन्धकम् ।
गर्तस्य परितः कुड्यं प्रकुर्यादङ्गुलोच्छ्रितम् ।। रस-९.५८ ।।

ततश् चाच्छादयेत् सम्यग् गोस्तनाकारमूषया ।
सम्यक् तोयमृदा रुद्ध्वा सम्यगत्रोच्यमानया ।। रस-९.५९ ।।

### (इन्स्.) तोयमृद्

लेहवत् कृतबब्बूलक्वाथेन परिमर्दितम् ।
जीर्णकिट्टरजः सूक्ष्मं गुडचूर्णसमन्वितम् ।
इयं हि जलमृत् प्रोक्ता दुर्भेद्या सलिलैः खलु ।। रस-९.६० ।।

### (इन्स्.) वह्निमृद्

खटिकापटुकिट्टैश्च महिषीदुग्धमर्दितैः ।
वह्निमृत्स्ना भवेद् घोरवह्नितापसहा खलु ।। रस-९.६१ ।।

एतया मृत्स्नया रुद्धो न गन्तुं क्षमते रसः ।
विदग्धवनिताप्रौढप्रेम्णा रुद्धः पुमानिव ।। रस-९.६२ ।।

नन्दी नागार्जुनश्चैव ब्रह्मज्योतिर् मुनीश्वरः ।
वेत्ति श्रीसोमदेवश्च नापरः पृथिवीतले ।। रस-९.६३ ।।

## Fओत्र्सेत्शुन्ग्

### नाभियन्त्र

ततो जलं विनिक्षिप्य वह्निं प्रज्वालयेदधः ।
नाभियन्त्रमिदं प्रोक्तं नन्दिना सर्ववेदिना ।
अनेन जीर्यते सूतो निर्धूमः शुद्धगन्धकः ।। रस-९.६४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- नाभियन्त्रमाह मल्लमध्ये इति ।। रसबोध-९.६४;१
- कुड्यं भित्तिः आलवालाकारमिति यावत् ।। रसबोध-९.६४;२
- अत्रोच्यमानया अत्र यन्त्रे उच्यमानया कथ्यमानया तोयमृदा लेहवद् इत्यादिना वक्ष्यमाणया परिभाषिकमृदा इत्यर्थः ।। रसबोध-९.६४;३
- अत्र प्रथमं सम्यग् आच्छादयेद् द्वितीयं सम्यक् रुद्ध्वा तृतीयं सम्यग् उच्यमानया सम्बध्यते ।। रसबोध-९.६४;४
- तोयमृत्प्रकारमाह लेहवदिति ।। रसबोध-९.६४;५
- लेपार्थमृत्तिकाप्रस्तुतप्रसङ्गक्रमेण वह्निमृत्प्रकारमाह खटिकेति ।। रसबोध-९.६४;६
- अयं विधिः पात्रमध्ये किंचिद् गर्तं कृत्वा तत्र रसगन्धौ निवेश्य गर्तस्य चतुर्दिक्षु अङ्गुलोच्छ्रायम् आलवालं कुर्यात् ततो गोस्तनाकृतिमूषया सालवालं सरसगन्धकं गर्तम् आच्छाद्य तोयमृदा सन्धिं लिम्पेत् ततस्तत्र जलं दत्त्वा यन्त्राधो वह्निं दापयेद् इति ।। रसबोध-९.६४;७

$

- टीका रससरत्नसमुच्चयटीका:
- अथ नाभियन्त्रमाह मल्लमध्य इति ।। रसटी-९.६४;१
- दृढस्थूलविस्तृतमृत्पात्रमध्ये गर्तं कुर्यात् ।। रसटी-९.६४;२
- तत्र पारदं गन्धकं च निदध्यात् ।। रसटी-९.६४;३
- ततो गर्तस्य समन्ततोऽङ्गुलोच्छ्रायं कुड्याकारं बन्धं कुर्यात् ।। रसटी-९.६४;४
- ततस्तं गर्तं गोस्तनाकारमूषया न्युब्जया पिदध्यात् ।। रसटी-९.६४;५
- अत्रोच्यमानया तोयमृदाख्यया मृदा संधिं रुद्ध्वा संशोष्योपरिस्थितसर्वमल्लभागं कण्ठपर्यन्तं जलेन पूरयेत् ।। रसटी-९.६४;६
- यन्त्रस्याधस्ताच्च चुल्ल्यां वह्निं प्रज्वालयेदित्यन्तिमश्लोकेन संबन्धो बोध्यः ।। रसटी-९.६४;७
- अत्र जलमृच्छब्दबोधार्थं जलमृदं तत्प्रसङ्गाच्च वह्निमृदं च मध्यस्थितग्रन्थेनाह लेहवदिति ।। रसटी-९.६४;८
- घनेन बब्बूलत्वक्कषायेण पुराणं लोहकिट्टचूर्णं सूक्ष्मं कणं यथा स्यात्तथा संमर्द्य तत्र गुडचूर्णं समं दत्त्वा पुनः संमर्द्य कृतेयं मृज्जलमृदिति ख्याता ।। रसटी-९.६४;९
- अथ खटिकाश्वेतचूर्णद्रव्यं खडू चास इति वाख्यातम् ।। रसटी-९.६४;१०
- पटु सैन्धवम् ।। रसटी-९.६४;११

- लोहकिट्टं च सर्वमेतन्मिथः समं गृहीत्वा महिषीदुग्धेन संमर्द्य विहितेयं मृद्वह्निमृदाख्याता ।। रसटी-९.६४;१२
- इयं च तीक्ष्णं वह्निपातं सहत इत्यन्वर्थाख्या ।। रसटी-९.६४;१३
- एतया रुद्धो रसस्तरुण्या कृतस्नेहेन बद्धः पुरुषः इवान्यत्र गन्तुं न शक्नोति ।। रसटी-९.६४;१४
- अस्य यन्त्रस्य जलयन्त्रमिति नामान्तरं केचिद्वदन्ति ।। रसटी-९.६४;१५
- पाषाणभेदिरसविधावस्योपयोगं वक्ष्यति ।। रसटी-९.६४;१६
- रससारे पारदबन्धनार्थमप्यस्य यन्त्रस्योपयोगमुदाजहार ।। रसटी-९.६४;१७

## ग्रस्तयन्त्र

मूषां मूषोदराविष्टाम् आद्यन्तःसमवर्तुलाम् ।
चिपिटां च तले प्रोक्तं ग्रस्तयन्त्रं मनीषिभिः ।
सूतेन्द्ररन्धनार्थं हि रसविद्भिर् उदीरितम् ।। रस-९.६५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- ग्रस्तयन्त्रमाह मूषामिति ।। रसबोध-९.६५;१
- सूतेन्द्ररन्धनार्थं रसपाकार्थम् ।। रसबोध-९.६५;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथ ग्रस्तयन्त्रमाह मूषामिति ।। रसटी-९.६५;१
- स्थूलमूषोदरे प्रवेशयोग्याम् आद्यन्तमध्यभागेषु तत्समवर्तुलां लघुमूषां कुर्यात् ।। रसटी-९.६५;२
- एतद्यन्त्रं ग्रस्तयन्त्रमिति ख्यातम् ।। रसटी-९.६५;३
- अनेन हि स्वोदरे रुद्धगतिः पारदो ग्रस्तः पीडितो मारकभेषजेन मारितो वा भवति ।। रसटी-९.६५;४
- कज्जलीकृतं भेषजान्तरेण संमर्दितं वा पारदं स्थूलमूषान्तस्तले संभृत्य तद्रोधार्थं किंचिल्लघुमूषां न्युब्जां तदुदरे प्रवेश्य दृढं यथा स्यात्तथा संधिरोधं कृत्वा गजपुटेन पारदं भस्मीकुर्वन्ति भिषजः ।। रसटी-९.६५;५
- रन्ध्रणं बन्धनम् ।। रसटी-९.६५;६

## स्थालीयन्त्र

स्थाल्यां ताम्रादि निक्षिप्य मल्लेनास्यं निरुध्य च ।
पच्यते स्थालिकाधस्तात् स्थालीयन्त्रम् इदं स्मृतम् ।। रस-९.६६ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ स्थालीयन्त्रमाह स्थाल्यामिति ।। रसटी-९.६६;१

- स्थाल्यां मृन्मयपात्र्यां ताम्रलोहादि निक्षिप्य मल्लेन निरुद्धमुखं कृत्वा तद्भेषजं स्थालिकाधःस्थवह्निना पच्यते इत्येतत् स्थालीयन्त्रं प्रसिद्धम् ।। रसटी-९.६६;२

## धूपयन्त्र

विधायाष्टाङ्गुलं पात्रं लौहमष्टाङ्गुलोच्छ्रयम् ।
कण्ठाधो द्व्य् अङ्गुले देशे गलाधारे हि तत्र च ।। रस-९.६७ ।।

तिर्यग्लोहशलाकाश्च तन्वीस्तिर्यग् विनिक्षिपेत् ।
तनूनि स्वर्णपत्त्राणि तासामुपरि विन्यसेत् ।। रस-९.६८ ।।

पत्त्राधो निक्षिपेद् वक्ष्यमाणम् इहैव हि ।
तत्पात्रं न्युब्जपात्रेण छादयेदपरेण हि ।। रस-९.६९ ।।

मृदा विलिप्य संधिं च वह्निं प्रज्वालयेद् अधः ।
तेन पत्त्राणि कृत्स्नानि हतान्य् उक्तविधानतः ।। रस-९.७० ।।

रसश्चरति वेगेन द्रुतं गर्भे द्रवन्ति च ।
गन्धालकशिलानां हि कज्जल्या वा मृताहिना ।। रस-९.७१ ।।

धूपनं स्वर्णपत्त्राणां प्रथमं परिकीर्तितम् ।
तारार्थं तारपत्त्राणि मृतवङ्गेन धूपयेत् ।। रस-९.७२ ।।

धूपयेच्च यथायोग्यैरन्यैरुपरसैरपि ।
धूपयन्त्रमिदं प्रोक्तं जारणाद्रव्यसाधने ।। रस-९.७३ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- धूपयन्त्रमाह विधायेति ।। रसबोध-९.७३;१
- गलाधारे शलाकास्थापनार्थं गलदेशस्थपालिकावद् आधारविशेषे इत्यर्थः ।। रसबोध-९.७३;२
- अत्र प्रथमं तिर्यक् लोहशलाका इत्यनेन द्वितीयं च विनिक्षिपेत् इत्यनेन सम्बध्यते ।। रसबोध-९.७३;३
- तिर्यक् वक्राकाराः तन्वीः सूक्ष्माः लोहशलाकाः तिर्यक् वक्रभावेन विनिक्षिपेत् इत्यन्वयः ।। रसबोध-९.७३;४
- तेनेत्यादि ।। रसबोध-९.७३;५
- उक्तविधिना हतानि कृत्स्नानि पत्राणि द्रुतं गर्भे द्रवन्ति ततश्च रसः स स्वर्णपत्रद्रवः वेगेन चरति स्वकार्यं साधयतीत्यर्थः ।। रसबोध-९.७३;६
- पत्राधो निक्षिपेद्धूममित्युक्तं किंतद्धूममित्याह गन्धेति ।। रसबोध-९.७३;७
- प्रथमं श्रेष्ठम् ।। रसबोध-९.७३;८
- दैर्घ्यविस्तारतोऽष्टाङ्गुलमानं लोहपात्रमेकं कारयित्वा तस्य कण्ठाधः अङ्गुलिद्वयपरिमितस्थाने गलाधारे सूक्ष्मतिर्यग्लोहशलाकाः तिर्यग्भावेन विन्यस्य तदुपरि कण्टकवेध्यस्वर्णपत्राणि स्थापयेत् तत्पत्राधः पात्राभ्यन्तरे गन्धकहरितालमनःशिलाभिः कृतकज्जलीं मृतनागं वा निक्षिप्य अधोमुखपात्रान्तरेण तत् पात्रं पिधाय मृदादिना सन्धिं रुद्ध्वा च पात्राधो वह्निं प्रज्वालयेत्तेन संतप्तकज्जल्यादितो धूमं निर्गत्य स्वर्णपत्रे लगिष्यति पत्राणि तानि भस्मीभवन्ति गर्भे द्रवन्ति च ।। रसबोध-९.७३;९

$

- टीका रससरत्नसमुच्चयटीका:
- अथ धूपयन्त्रमाह विधायेति ।। रसटी-९.७३;१
- अत्र यथोक्तमानं लौहं पात्रं विधाय तत्कण्ठाधो द्व्यङ्गुले देशे जलाधारं लघुपात्रविशेषं निहितं कुर्यात् ।। रसटी-९.७३;२
- जडद्रव्यस्य धारणार्थम् आश्रयभूतं पात्रं जलाधारशब्दवाच्यम् ।। रसटी-९.७३;३
- तत्र लोहशलाकास्तिर्यङ्निधाय तत्र स्वर्णपत्राणि विन्यसेत् स्थापयेत् ।। रसटी-९.७३;४
- तेषामधोभागे वक्ष्यमाणं धूमद्रव्यं निक्षिपेत् ।। रसटी-९.७३;५
- ततो यन्त्रपात्रम् अपरेण न्युब्जपात्रेण छादयेत् ।। रसटी-९.७३;६
- मृदा संधिलेपं कृत्वा यन्त्रस्याधस्ताद्वह्निं कुर्यात् ।। रसटी-९.७३;७
- उक्तविधानेन हतानि पत्राणि कृष्णानि भवन्ति ।। रसटी-९.७३;८
- ततस्तानि सरसे तप्तखल्वे यथाविधि मर्दनेन पारदो भक्षयति ।। रसटी-९.७३;९
- भक्षितानि च तानि पारदोदरे शीघ्रं द्रवन्ति ।। रसटी-९.७३;१०
- अत्र धूपद्रव्यमाह ।। रसटी-९.७३;११
- पारदेन साकं गन्धकहरितालमनःशिलानाम् अन्यतमस्य समस्तानां वा कृतायाः कज्जल्या धूपनं तया कज्जल्या भस्मीकृतनागेन धूपनं वा स्वर्णपत्राणां धूपनसंस्कारार्थं मुख्यं धूपनद्रव्यम् उदाहृतम् ।। रसटी-९.७३;१२
- तारार्थं धूपनं तूच्यत इति शेषः ।। रसटी-९.७३;१३
- तदाह तारपत्राण्युक्तकज्जल्या मृतेन वङ्गेन धूपयेत् ।। रसटी-९.७३;१४
- यथायोग्यैर् मारणयोग्यैर् उपरसैर् हिङ्गूलरसकमाक्षिकादिभिर् अपि धूपयेत् ।। रसटी-९.७३;१५
- जारणाद्रवसाधनं पत्राणां जारणोपयोगिपारदगर्भद्रवसाधनम् इत्यर्थः ।। रसटी-९.७३;१६

### कन्दुकयन्त्र (१)

स्थूलस्थाल्यां जलं क्षिप्त्वा वासो बद्ध्वा मुखे दृढम् ।
तत्र स्वेद्यं विनिक्षिप्य तन्मुखं प्रपिधाय च ।। रस-९.७४ ।।

अधस्ताज्ज्वालयेदग्निं यन्त्रं तत्कन्दुकाभिधम् ।
स्वेदनीयन्त्रमित्यन्ये प्राहुश्चेदं मनीषिणः ।। रस-९.७५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- स्पष्टम् ।। रसबोध-९.७५;१
- स्वेदनीयन्त्रतया प्रागुक्तमपि इदं संज्ञान्तरप्रदर्शनार्थं पुनरुक्तम् अथवा तत्र स्थाल्या विशेषो नोक्तः अतः या काचित् स्थाली एव ग्राह्या अत्र तु स्थूलस्थाली एव ग्राह्या अतः स्वेदनीयन्त्रात् अस्य वैशिष्ट्यम् इति ।। रसबोध-९.७५;२

$

- टीका रससरत्नसमुच्चयटीका:
- प्रागुक्तं स्वेदनीयन्त्रमेव कन्दुकयन्त्रनाम्नाह स्थूलस्थाल्यामिति ।। रसटी-९.७५;१
- अन्ये मनीषिणो धीरा वक्ष्यमाणप्रकारेण प्राहुः यद्वेति ।। रसटी-९.७५;२
- तत्कन्दुकयन्त्रमिति ।। रसटी-९.७५;३

- एवं च तेषां मते स्वेदनीयन्त्रम् अस्माद् भिन्नम् एवेति भावः ।। रसटी-९.७५;४
- पुष्पादीनाम् अतिमृदुद्रव्याणां कल्कादेर् वा स्वेदनार्थम् अस्य यन्त्रस्योपयोगो बोध्यः ।। रसटी-९.७५;५

### कन्दुकयन्त्र (२)

यद्वा स्थाल्यां जलं क्षिप्त्वा तृणं क्षिप्त्वा मुखोपरि ।
स्वेद्यद्रव्यं परिक्षिप्य पिधानं प्रविधाय च ।
अधस्ताज्ज्वालयेदग्निं यन्त्रं तत् कन्दुकं स्मृतम् ।। रस-९.७६ ।।

### खल्व > ग्रिन्द्स्तोने

खल्लयोग्या शिला नीला श्यामा स्निग्धा दृढा गुरुः ।
षोडशाङ्गुलकोत्सेधा नवाङ्गुलकविस्तरा ।। रस-९.७७ ।।

### खल्व > पेस्त्ले

चतुर्विंशाङ्गुला दीर्घा घर्षणी द्वादशाङ्गुला ।
विंशत्यङ्गुलदीर्घा वा स्यादुत्सेधे दशाङ्गुला ।
खल्लप्रमाणं तज्ज्ञेयं श्रेष्ठं स्याद्रसकर्मणि ।। रस-९.७८ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ खल्वसंज्ञायोग्या सा शिला स्यात् ।। रसटी-९.७८;१
- या नीला श्यामवर्णा वा स्निग्धादिगुणविशिष्टा षोडशाङ्गुलकोच्छ्राया तथा नवाङ्गुलकविस्तारा चतुर्विंशाङ्गुलैर् आ समन्ताद्दीर्घा च स्यात् ।। रसटी-९.७८;२
- सा खल्वयोग्येति पूर्वत्र संबन्धः ।। रसटी-९.७८;३
- घर्षणी तु द्वादशाङ्गुलदीर्घा स्यात् ।। रसटी-९.७८;४
- पुनः खल्वशिलामानविकल्पमाह विंशत्यङ्गुलेति ।। रसटी-९.७८;५
- अथवा खल्वशिला विंशत्यङ्गुलदीर्घा ।। रसटी-९.७८;६
- उत्सेध उच्छ्राये च दशाङ्गुला कार्येति विशेषः ।। रसटी-९.७८;७
- नवाङ्गुलेति विस्तारमानं तु प्रागुक्तमेव ग्राह्यम् ।। रसटी-९.७८;८

$

- टीका रससरत्नसमुच्चयबोधिनी:
- खल्लयन्त्रमाह खल्लयोग्येति ।। रसबोध-९.७८;१
- उत्सेधः पार्श्वत उन्नतः ।। रसबोध-९.७८;२
- दीर्घः आयामेन उन्नतः इति दीर्घोत्सेधयोर् भेदः ।। रसबोध-९.७८;३
- घर्षणी कण्डनी पुत्रिका इति यावत् नोा्आ इति भाषा ।। रसबोध-९.७८;४

### खल्व > सुब्त्य्पेस्

खल्लयन्त्रं त्रिधा प्रोक्तं रसादिसुखमर्दने ।। रस-९.७९ ।।

निरुद्वारौ सुमसृणौ कार्यौ पुत्रिकया युतौ ।। रस-९.८० ।।

### खल्व > अर्धचन्द्र

उत्सेधे स दशाङ्गुलः खलु कलातुल्याङ्गुलायामवान् विस्तारेण दशाङ्गुलो मुनिमितैर्निम्नस् तयैवाङ्गुलैः ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- घर्षः शिलापुत्रः ।। रसबोध-९.८०;१

पाल्यां द्व्यङ्गुलिविस्तरश्च मसृणोऽतीवार्धचन्द्रोपमो घर्षो द्वादशकाङ्गुलश्च तदयं खल्लो मतः सिद्धये ।। रस-९.८१ ।।

अस्मिन्पञ्चपलः सूतो मर्दनीयो विशुद्धये ।
तत्तदौचित्ययोगेन खल्लेष्वन्येषु योजयेत् ।। रस-९.८२ ।।

### खल्व (२)

द्वादशाङ्गुलविस्तारः खल्लोऽतिमसृणोपलः ।
चतुरङ्गुलनिम्नश्च मध्येऽतिमसृणीकृतः ।। रस-९.८३ ।।

मर्दकश् चिपिटोऽधस्तात् सुग्राहश्च शिखोपरि ।
अयं तु वर्तुलः खल्लो मर्दनेऽतिसुखप्रदः ।। रस-९.८४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- मर्दनार्थं द्वितीयं वर्तुलखल्लमाह द्वादशेति ।। रसबोध-९.८४;१
- मर्दक इति ।। रसबोध-९.८४;२
- पुत्रिका अधोभागे चिपिटवद्विस्तीर्णा उपरिभागे च सुखेन यथा धारणीया भवति तथा कर्तव्या इत्यर्थः ।। रसबोध-९.८४;३

### तप्तखल्व

लौहो नवाङ्गुलः खल्लो निम्नत्वे च षडङ्गुलः ।
मर्दकोऽष्टाङ्गुलश्चैव तप्तखल्लाभिधोऽप्ययम् ।। रस-९.८५ ।।

कृत्वा खल्लाकृतिं चुल्लीम् अङ्गारैः परिपूरिताम् ।
तस्यां निवेश्य तं खल्लं पार्श्वे भस्त्रिकया धमेत् ।। रस-९.८६ ।।

तदन्तर्मर्दिता पिष्टिः क्षारैरम्लैश्च संयुता ।
प्रद्रवत्यतिवेगेन स्वेदिता नात्र संशयः ।
कृतः कान्तायसा सोऽयं भवेत् कोटिगुणो रसः ।। रस-९.८७ ।।

# रसरत्नसमुच्चय : अध्याय 10

https://sa.wikisource.org/s/80t

### च्रुचिब्ले > स्य्नोन्य्म्स्

मूषा हि क्रौञ्चिका प्रोक्ता कुमुदी करहाटिका ।
पाचनी वह्निमित्रा च रसवादिभिरीर्यते ।। रस-१०.१ ।।

### च्रुचिब्ले > निरुक्ति

मुष्णाति दोषान् मूषा या सा मूषेति निगद्यते ।। रस-१०.२ ।।

### च्रुचिब्ले > मतेरिअल्

उपादानं भवेत्तस्या मृत्तिका लोहमेव च ।। रस-१०.३ ।।

मूषामुखविनिष्क्रान्ता वरमेकापि काकिणी ।
दुर्जनप्रणिपातेन धिग्लक्षम् अपि मानिनाम् ।। रस-१०.४ ।।

### संधिलेप

मूषापिधानयोर्बन्धे बन्धनं संधिलेपनम् ।
अन्ध्रणं रन्ध्रणं चैव संश्लिष्टं संधिबन्धनम् ।। रस-१०.५ ।।

### टोन्/ऌएह्म् fिर् टिएगेल्

मृत्तिका पाण्डुरस्थूला शर्करा शोणपाण्डुरा ।
चिराध्मानसहा सा हि मूषार्थम् अतिशस्यते ।
तदभावे च वाल्मीकी कौलाली वा समीर्यते ।। रस-१०.६ ।।

या मृत्तिका दुग्धतुषैः शणेन शिखित्रकैर् वा हयलद्दिना च ।
लौहेन दण्डेन च कुट्टिता सा साधारणा स्यात् खलु मूषिकार्थे ।। रस-१०.७ ।।

श्वेताश्मानस् तुषा दग्धाः शिखित्राः शणखर्परे ।
लद्दिः किट्टं कृष्णमृत्स्ना संयोज्या मूषिकामृदि ।। रस-१०.८ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- मूषार्थं प्रशस्तमृत्तिकामाह मृत्तिकेति ।। रसबोध-१०.८;१
- पाण्डुरस्थूला पाण्डुवर्णा स्थूला च ।। रसबोध-१०.८;२
- अथवा शोणपाण्डुरा रक्तपाण्डुमिश्रवर्णा चिराध्मानसहा दीर्घकालं व्याप्य अग्निसंतापं प्राप्यापि अविदारणशीला एवंविधा या शर्करा मृत्तिका कङ्कररूपा मृत्तिका ।। रसबोध-१०.८;३

- शर्करामृत्तिकाभावे ग्राह्यमृत्तिकामाह तदिति ।। रसबोध-१०.८;४
- वाल्मीकी कृमिशैलोद्भवा मृद् उइमाटी इति वङ्गभाषा ।। रसबोध-१०.८;५
- कौलाली कुम्भकारमृदित्यर्थः ।। रसबोध-१०.८;६
- हयलद्दिना अश्वपुरीषेन ।। रसबोध-१०.८;७
- उपादानान्तराण्याह श्वेताश्मान इति ।। रसबोध-१०.८;८
- श्वेताश्मानः श्वेतप्रस्तराः ।। रसबोध-१०.८;९
- खर्परः कपालखण्डः दग्धमृत्तिका इति यावत् ।। रसबोध-१०.८;१०
- शणखर्परे इत्यत्र शणकर्पटे इति पाठे कर्पटं छिन्नवस्त्रम् ।। रसबोध-१०.८;११
- लद्दिः हयलद्दिः ।। रसबोध-१०.८;१२
- किट्टं मण्डूरम् ।। रसबोध-१०.८;१३
- कृष्णमृत्स्ना कृष्णवर्णमृत्तिका ।। रसबोध-१०.८;१४
- मूषिकामृदा मूषार्थग्राह्यमृत्तिकया सहेत्यर्थः ।। रसबोध-१०.८;१५

$

- टीका रससरत्नसमुच्चयटीका:
- मूषार्थं प्रशस्तमृत्तिकाया लक्षणमाह मृत्तिकेति ।। रसटी-१०.८;१
- पाण्डुरा स्थूलकणा शोणमिश्रपाण्डुरकणा वा ।। रसटी-१०.८;२
- कौलाली कुलालभाण्डोत्पादनार्थम् उपादानमृत्तिका ।। रसटी-१०.८;३
- अथ सर्वमूषोपयोगिसाधारणमृत्तिकाम् आह या मृत्तिकेति ।। रसटी-१०.८;४
- दग्धतुषेति ।। रसटी-१०.८;५
- चतुर्थांशेन दग्धतुषयुक्ता प्रत्येकं तथा भागैः शिखित्रैः कोकिलैर् हयलद्दिनाश्वशकृता च युक्ता सा प्रशस्ता ।। रसटी-१०.८;६
- मूषिकामृदि चतुर्थांशेन संयोज्यद्रव्याण्याह श्वेताश्मान इति ।। रसटी-१०.८;७
- गारेत्यपरपर्यायाः ।। रसटी-१०.८;८
- ते च दग्धा एव ग्राह्याः ।। रसटी-१०.८;९

### वज्रमूषा

मृदस्त्रिभागाः शणलद्दिभागौ भागश्च निर्दग्धतुषोपलादेः ।
किट्टार्धभागं परिखण्ड्य वज्रमूषां विदध्यात्खलु सत्त्वपाते ।। रस-१०.९ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वज्रमूषामाह मृद इति ।। रसबोध-१०.९;१
- मृदः पूर्वोक्तरूपमृत्तिकायाः ।। रसबोध-१०.९;२
- शणलद्दिभागौ शणस्य लद्देश्च प्रत्येकं भागद्वयम् ।। रसबोध-१०.९;३
- परिखण्ड्य चूर्णयित्वा ।। रसबोध-१०.९;४

### योगमूषा

दग्धाङ्गारतुषोपेता मृत्स्ना वल्मीकमृत्तिका ।
तत्तद्विडसमायुक्ता तत्तद्विडविलेपिता ।। रस-१०.१० ।।

तया या विहिता मूषा योगमूषेति कथ्यते ।
अनया साधितः सूतो जायते गुणवत्तरः ।। रस-१०.११ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- योगमूषामाह दग्धेति ।। रसबोध-१०.११;१
- दग्धशब्दोऽत्र अङ्गारतुषाभ्यां प्रत्येकं सम्बध्यते ।। रसबोध-१०.११;२
- मृत्स्ना पाण्डुरस्थूलादिगुणोपेता शर्करामृत्तिकेत्यर्थः ।। रसबोध-१०.११;३
- तत्तद्विडसमायुक्ता सूतजारणार्थं प्राङ्निरूपितविडमिश्रिता ।। रसबोध-१०.११;४
- तत्तद्विडविलेपिता तेनैव विडेनालिप्ता ।। रसबोध-१०.११;५
- दग्धाङ्गारादिविडान्तं सर्वमेकत्र संनीय मूषां विरचय्य विडेन लिप्त्वा शुष्कीकृत्य गृह्णीयादिति ।। रसबोध-१०.११;६

$

- टीका रससरत्नसमुच्चयटीका:
- अथ योगमूषामाह दग्धगारेति ।। रसटी-१०.११;१
- दग्धा गारा वज्रप्रसवाः श्वेतपाषाणा दग्धं शालितुषं च प्रत्येकं चतुर्थांशेन तैस्तथा तत्तद्विडचूर्णैश्च मिश्रिता या प्रशस्ता वल्मीकमृत्तिका तया विहिता घटिता मूषा योगमूषेति कीर्त्यते ।। रसटी-१०.११;२
- इयं चाभ्रकसत्त्वादेर् जारणायां विशिष्टो यो यो विडस्तेन विलेपिता तेनैव कार्या ।। रसटी-१०.११;३
- अथ जारणायां सा पारदगर्भिता कोष्ठीयन्त्रे भस्त्रिकया ध्माता चेत्तया साधितो जारितताम्रसत्त्वादिः खोटादिरूपश्च पारदो गुणवत्तरो भवति ।। रसटी-१०.११;४
- एवं चेयं योगवाहिमूषा योगमूषेत्यन्वर्थनामिकेति भावः ।। रसटी-१०.११;५

### वज्रद्रावणिकमूषा

गारभूनागधौताभ्यां शणैर्दग्धतुषैरपि ।
समैः समा च मूषामृन्महिषीदुग्धमर्दिता ।। रस-१०.१२ ।।

क्रौञ्चिका यन्त्रमात्रं हि बहुधा परिकीर्तिता ।
तया विरचिता मूषा वज्रद्रावणिकोचिता ।। रस-१०.१३ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वज्रद्रावणोपयोगिमूषामाह गारेति ।। रसबोध-१०.१३;१
- गारशब्दोऽत्र कोष्ठागारिकार्थकः नामैकदेशेनापि नामसाकल्यग्रहणम् इति न्यायात् कोष्ठागारिका मृत्तिकाविशेषः कुमीरे पोकार मोटी इति भाषा ।। रसबोध-१०.१३;२
- भूनागशब्देनापि तन्मृत्तिका ग्राह्या एवं च गारभूनागधौताभ्यां धौतकोष्ठागारिकाकिञ्चुलूकमृद्भ्याम् ।। रसबोध-१०.१३;३

- मूषामृत् पूर्वोक्तशर्करावाल्मीकिकौलाल्यादीनाम् अन्यतमा ।। रसबोध-१०.१३;४
- गारादितुषान्तं सर्वं समम् मृत्तिका च सर्वैः समाना ग्राह्या ।। रसबोध-१०.१३;५
- क्रौञ्चिकेति ।। रसबोध-१०.१३;६
- यन्त्रमात्रे हि क्रौञ्चिका संज्ञा वर्तते सा हि बहुधा विविधप्रकारा इत्यन्वयः ।। रसबोध-१०.१३;७

$

- टीका रससरत्नसमुच्चयटीका:
- अथ हीनजातीयनातिकठिनवज्रप्रमुखकठिनपाषाणसत्त्वरत्नानां द्रावणकरीं मूषामाह गारेति ।। रसटी-१०.१३;१
- गाराः श्वेता वज्रोत्पादकाः पाषाणाः ।। रसटी-१०.१३;२
- भूनागधौतं परिभाषाध्यायोक्तं ग्राह्यम् ।। रसटी-१०.१३;३
- शणा दग्धतुषाश्चैते मिथः समाः ।। रसटी-१०.१३;४
- तैः समा समभागा प्रागुक्तलक्षणा मूषोपादानमृद् एकत्र कृत्वा महिषीदुग्धेन संमर्द्य संस्कृता चेयं मृत्क्रौञ्चिकापक्षमात्रं नानाविधमूषारूपो यो भागो यन्त्रतुल्यस्तन्निर्माणार्थं प्रशस्तत्वेन बहुषु ग्रन्थेषु कथिता ।। रसटी-१०.१३;५
- तद्विहितमूषायाः सत्त्वाहरणादिकार्येष्वग्निना चिरकालपर्यन्तं दुर्भेद्यत्वात् ।। रसटी-१०.१३;६
- भूनागोपेतत्वेन शीघ्रद्रावणोपयोगित्वाच्च ।। रसटी-१०.१३;७
- तया संस्कृतया मृदा विहिता मूषा शास्त्रे वज्रद्रावणकेति ख्याता ।। रसटी-१०.१३;८

## गारमूषा

दुग्धषड्गुणगाराष्टकिट्टाङ्गारशणान्विता ।
कृष्णमृद्भिः कृता मूषा गारमूषेत्युदाहृता ।
यामयुग्मपरिध्मानान् नासौ द्रवति वह्निना ।। रस-१०.१४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- गारमूषामाह दुग्धेति ।। रसबोध-१०.१४;१
- गारस्य षड्गुणत्वं किट्टाङ्गारशणानां च प्रत्येकम् अष्टगुणत्वं कृष्णमृदपेक्षया बोध्यम् ।। रसबोध-१०.१४;२
- दुग्धं च मर्दनयोग्यम् ।। रसबोध-१०.१४;३

$

- टीका रससरत्नसमुच्चयटीका:
- अथ गारमूषामाह दग्धेति ।। रसटी-१०.१४;१
- दग्धा ये मृत्तिकापेक्षया षड्गुणा गारास्तद्विशिष्टास्तथा लोहकिट्टा अङ्गारा निर्वाणाग्नयः कोकिलाः ।। रसटी-१०.१४;२
- तथा शणाः ताग इति ख्याताः ।। रसटी-१०.१४;३
- ते च प्रत्येकं चतुर्थांशमितास्तैर्युक्ता या कृष्णवर्णा मृत्तत्कृता मूषा शास्त्रे गारमूषेति परिकीर्तिता ।। रसटी-१०.१४;४
- तेषां पाषाणानामत्र साधकमध्ये ह्यधिकभागोपेतत्वादिति भावः ।। रसटी-१०.१४;५

### वरमूषा

वज्राङ्गारतुषास्तुल्यास् तच्चतुर्गुणमृत्तिका ।
गारा च मृत्तिकातुल्या सर्वैर् एतैर् विनिर्मिता ।
वरमूषेति निर्दिष्टा याममग्निं सहेत सा ।। रस-१०.१५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वरमूषामाह वज्रेति ।। रसबोध-१०.१५;१
- वज्रं तदाख्यलौहं पूर्वोक्तसंगत्या तत्किट्टं वा बोध्यम् ।। रसबोध-१०.१५;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथ वरमूषाम् आह वज्रेति ।। रसटी-१०.१५;१
- वज्रो हीरकः ।। रसटी-१०.१५;२
- तदलाभे वैक्रान्तं ग्राह्यम् ।। रसटी-१०.१५;३
- अङ्गारा हठान्मृत्तिकाधूलिप्रक्षेपेण निरग्नयः कोकिलाः ।। रसटी-१०.१५;४
- तथा दग्धतुषाः ।। रसटी-१०.१५;५
- सर्वे च मिथस्तुल्यभागाः ।। रसटी-१०.१५;६
- सर्वेभ्यश्चतुर्गुणा मृत्तिका तत्तुल्या गाराः श्वेतपाषाणाः ।। रसटी-१०.१५;७
- एतन्निर्मिता मूषा वरमूषेति कथ्यते ।। रसटी-१०.१५;८
- वरस्य श्रेष्ठस्य महामूल्यस्य हीरकस्यात्र घटकत्वात् ।। रसटी-१०.१५;९

### वर्णमूषा

पाषाणरहिता रक्ता रक्तवर्गानुसाधिता ।
मृत्तया साधिता मूषा क्षितिखेचरलेपिता ।
वर्णमूषेति सा प्रोक्ता वर्णोत्कर्षे नियुज्यते ।। रस-१०.१६ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वर्णमूषामाह पाषाणरहितेति ।। रसबोध-१०.१६;१
- रक्ता रक्तवर्णा ।। रसबोध-१०.१६;२
- रक्तवर्गानुसाधिता वक्ष्यमाणकुसुम्भादिमाक्षिकान्तवर्गक्वाथेन भाविता शृता वा ।। रसबोध-१०.१६;३
- क्षितिखेचरलेपिता क्षितिश्च खं च क्षितिखे तत्र चरतः इति क्षितिखेचरौ भूनागमृत् काशीशं च यद्वा क्षितिस्थः खेचरः काशीशमित्यर्थः ।। रसबोध-१०.१६;४
- वर्णोत्कर्षे प्रशस्तवर्णतापादने रक्तवर्णजनने इत्याशयः ।। रसबोध-१०.१६;५

$

- टीका रससरत्नसमुच्चयटीका:

- अथ वर्णमूषामाह पाषाणेति ।। रसटी-१०.१६;१
- पाषाणा रक्तपाषाणाः ।। रसटी-१०.१६;२
- समभागैश्च तैः सहिता या रक्ता रक्तवर्णा मृत्तिका तया साधिता विहिता मूषा वर्णमूषेति प्रोक्ता ।। रसटी-१०.१६;३
- यस्मादियं नियुज्यत उपयुज्यते निर्वाहणेन धातोः पारदस्य वा रक्तवर्णोत्पादनार्थम् ।। रसटी-१०.१६;४
- उक्तं च रसहृदये ।। रसटी-१०.१६;५
- निर्गुण्डीरसभावितपुटितं शिलया वर्तितं श्लक्ष्णम् ।
- तावन्मृदितपुटितं निरुत्थभावं व्रजेद्यावत् ।। रसटी-१०.१६;६
- तारे तन्निर्व्यूढं यावत् पीतं भवेद्रुचिरम् ।
- हेम्ना समेन मिलितं मात्रातुल्यं भवेत् कनकम् ।। रसटी-१०.१६;७
- इति ।। रसटी-१०.१६;८
- अत्र निर्वाहणं चास्यां मूषायां कार्यम् ।। रसटी-१०.१६;९
- रक्तवर्गः श्वेतवर्गश्चास्मिन्नेवाध्याये वक्ष्यमाणः ।। रसटी-१०.१६;१०

### रूप्यमूषा

पाषाणरहिता श्वेता श्वेतवर्गानुसाधिता ।
मृत् तया साधिता मूषा क्षितिखेचरलेपिता ।
रौप्यमूषेति सा प्रोक्ता वर्णोत्कर्षे नियुज्यते ।। रस-१०.१७ ।।

### विडमूषा

तत्तद्भेदमृदोद्भूता तत्तद्विडविलेपिता ।
देहलोहार्थयोगार्थं विडमूषेत्युदाहृता ।। रस-१०.१८ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- विडमूषामाह तत्तदिति ।। रसबोध-१०.१८;१
- तत्तद्भेदमृदोद्भूता शर्करादीनाम् अन्यतममृदा रचिता इत्यर्थः ।। रसबोध-१०.१८;२
- तत्तद्भेदमृदोद्भूता इत्यत्र तत्तद्विडमृदोद्भूता इति पाठे पूर्वोक्तविडेन पूर्वोक्तमृदा च उद्भूता निर्मिता ।। रसबोध-१०.१८;३
- देहलोहार्थयोगार्थं देहस्य लौहवद् दार्ढ्यसम्पादनार्था ये योगाः तदर्थं तत्कर्मसम्पादनार्थम् इत्यर्थः ।। रसबोध-१०.१८;४

$

- टीका रससरत्नसमुच्चयटीका:
- अथ विडमूषामाह तत्तद्विडमृदुद्भूतेति ।। रसटी-१०.१८;१
- अभ्रसत्त्वजारणस्वर्णजारणोपयोगीनि यानि वडवानलादिविडानि यथोद्दिष्टरसादिभावितानि चूर्णानि तथा सर्वलोहादिजारणोपयोगिविडात्मकश्चूर्णः परिभाषाध्याये विडवर्णनावसरे प्रागुक्तः ।। रसटी-१०.१८;२
- तथा पूर्वोक्ता नानाविधा पाण्डुरादिमृत्तदुद्भूता तत्सिद्धा तथा तत्तद्विडैर् ग्रासजारणसाधनैर् विशिष्टैश्चूर्णैरन्तर्विलेपिता या मूषा सा विडमूषेत्युच्यते ।। रसटी-१०.१८;३
- इयं मूषा दृढकायकररसायनविधौ साधनत्वेन देहार्था देहोपयोगिनीत्यर्थः ।। रसटी-१०.१८;४

- तथा लोहमारणोपयोगिनी ।। रसटी-१०.१८;५
- अत एव लोहार्था ।। रसटी-१०.१८;६
- तथा अर्थो धनं तथा सुवर्णाद्युत्पादनविधौ धातुवादे साधनत्वेनार्थार्था ।। रसटी-१०.१८;७
- तथा कासघ्नरत्नकरण्डकरसार्शोनाशकसर्वलोकाश्रयरसप्रभृतिनानाविधरोगघ्नरसविधौ साधनत्वेन योगार्था चेतीयं चतुर्विधकार्योपयोगिनी भवति ।। रसटी-१०.१८;८

### वज्रद्रावणिकमूषा (२)

गारभूनागधौताभ्यां तुषमृष्टशणेन च ।
समैः समा च मूषामृन्महिषीदुग्धमर्दिता ।। रस-१०.१९ ।।

क्रौञ्चिका यन्त्रमात्रे हि बहुधा परिकीर्तिता ।
तया विरचिता मूषा लिप्ता मत्कुणशोणितैः ।। रस-१०.२० ।।

बालाब्दध्वनिमूलैश्च वज्रद्रावणक्रौञ्चिका ।
सहतेऽग्निं चतुर्यामं द्रवेण व्याधिता सती ।। रस-१०.२१ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- पूर्वोक्तवज्रद्रावणोपयोगिमूषायाः प्रकारान्तरमाह गारेति ।। रसबोध-१०.२१;१
- मत्कुणः छारपोका इति ख्यातः क्रिमिविशेषः तस्य शोणितैः ।। रसबोध-१०.२१;२
- अब्दध्वनिः वनतण्डुलीयकः कांटानटे इति भाषा बालाब्दध्वनिमूलैः नवोत्पन्नतण्डुलीयमूलैः यद्वा वालः अश्वपुच्छकेशः तथा अब्दध्वनिमूलं तैः लिप्ता इत्यनेनान्वयः ।। रसबोध-१०.२१;३
- द्रवेण व्याधिता विद्धा स्पृष्टा इत्यर्थः द्रवपूर्णा इत्याशयः ।। रसबोध-१०.२१;४

$

- टीका रससरत्नसमुच्चयटीका:
- अथाव्यभिचारेण वज्रमात्रद्रावणार्थं वज्रमूषामाह गारेति ।। रसटी-१०.२१;१
- वालाब्देति ।। रसटी-१०.२१;२
- वाला नरकेशाः ।। रसटी-१०.२१;३
- अब्दध्वनिमूलं तन्दुलीयकमूलम् ।। रसटी-१०.२१;४
- इयं मूषा द्रवद्रवेण व्यथिता सती अन्तःस्थतैजसद्रव्ययोगसंयोगेन बाह्याग्निसंयोगेन च संततं पीडिता सत्यप्यग्निं सहते ।। रसटी-१०.२१;५

### मूषाप्यायन

द्रवे द्रवीभावमुखे मूषाया ध्मानयोगतः ।
क्षणमुद्धरणं यत्तन्मूषाप्यायनम् उच्यते ।। रस-१०.२२ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- मूषाप्यायनमाह द्रवे इति ।। रसबोध-१०.२२;१
- ध्मायते अनेनेति ध्मानमग्निः तद्योगतः अग्निसंयोगाद् द्रवे द्रावणोपयोगिनि द्रव्ये द्रवीभावमुखे द्रवीभवितुम् आरब्धे मूषाया यत् क्षणम् उद्धरणम् अग्नितः उत्तोलनम् अवतारणमित्यर्थः तद् आप्यायनं तर्पणं स्थायित्वसम्पादनम् इत्यर्थः ।। रसबोध-१०.२२;२

## वृन्ताकमूषा

वृन्ताकाकारमूषायां नालं द्वादशकाङ्गुलम् ।
धत्तूरपुष्पवच् चोर्ध्वं सुदृढं श्लिष्टपुष्पवत् ।। रस-१०.२३ ।।

अष्टाङ्गुलं च सच्छिद्रं सा स्याद् वृन्ताकमूषिका ।
अनया खर्परादीनां मृदूनां सत्त्वमाहरेत् ।। रस-१०.२४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वृन्ताकमूषामाह वृन्ताकेति ।। रसबोध-१०.२४;१
- वृन्ताकं वार्ताकुः वार्ताकुफलसदृशाकारां मूषां कृत्वा तत्र द्वादशाङ्गुलदीर्घं नालं योजयेत् नालाग्रभागं च धुस्तूरपुष्पवद् उपर्यधो युग्मरूपावस्थितम् अष्टाङ्गुलं सच्छिद्रं च कुर्यात् ।। रसबोध-१०.२४;२

$

- टीका रससरत्नसमुच्चयटीका:
- वृन्ताकमूषामाह वृन्ताकाकारेति ।। रसटी-१०.२४;१
- द्वादशकाङ्गुलम् ।। रसटी-१०.२४;२
- द्वादशाङ्गुलं दीर्घम् ऊर्ध्वम् उत्तानमूषाया ऊर्ध्वतनमुखभागो धत्तूरपुष्पवत् क्रमेण विस्तीर्णस्तद्वदेव च संश्लेषेण त्रिचतुष्कोणयुतो ध्मानावसरे पिहितेऽपि मुखे सति तत्कोणमार्गेणान्तःस्थधूमस्य बहिर्निर्गमनार्थं कोणघटनेनैव तन्मुखं सच्छिद्रं भवति ।। रसटी-१०.२४;३
- तच्च मुखम् अष्टाङ्गुलविस्तृतं वर्तुलसूत्रवेष्टनेनाष्टाङ्गुलमितम् इत्यर्थः ।। रसटी-१०.२४;४

## गोस्तनमूषा

मूषा या गोस्तनाकारा शिखायुक्तपिधानका ।
सत्वानां द्रावणे शुद्धौ मूषा सा गोस्तनी भवेत् ।। रस-१०.२५ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ गोस्तनमूषामाह मूषाया इति ।। रसटी-१०.२५;१
- शिखायुक्तेति ।। रसटी-१०.२५;२
- शिखराकारपिधानकसहितेयमेव चान्धमूषाभिधीयते ।। रसटी-१०.२५;३
- द्वंद्वितबीजमेलापादिविधावस्या उपयोगो बोध्यः ।। रसटी-१०.२५;४
- यत्र तु न्युब्जया तयाच्छादनं क्रियते तत्र पिधानरहिता ग्राह्या ।। रसटी-१०.२५;५

- यथा नाभियन्त्रे प्रागुक्तम् ।
- ततश्चाच्छादयेत् सम्यग्गोस्तनाकारमूषया ।
- इति ।। रसटी-१०.२५;६

## मल्लमूषा

निर्दिष्टा मल्लमूषा या मल्लद्वितयसम्पुटात् ।
पर्पट्यादिरसादीनां स्वेदनाय प्रकीर्तिता ।। रस-१०.२६ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- मल्लमूषामाह निर्दिष्टेति ।। रसटी-१०.२६;१
- मल्लं पिधानोपयोगि विस्तीर्णं किंचिद् गभीरोदरं मृन्मयं पात्रं शरावेति लोके प्रसिद्धम् ।। रसटी-१०.२६;२
- सप्तविंशतितमेऽध्यायेऽस्या उपयोगं वक्ष्यति मदनसंजीवनरसविधौ ।। रसटी-१०.२६;३
- अन्यत्रापि प्रभूतस्थले चैषोपयुज्यते ।। रसटी-१०.२६;४
- तदेवोच्यते पर्पट्यादीति ।। रसटी-१०.२६;५

## पक्वमूषा

कुलालभाण्डरूपा या दृढा च परिपाचिता ।
पक्वमूषेति सा प्रोक्ता पोट्टल्यादिविपाचने ।। रस-१०.२७ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- पक्वमूषामाह कुलालेति ।। रसबोध-१०.२७;१
- घटकपालयोः पृथक् पृथक् निर्माणार्थं यः प्रतिरूपः सः कुलालभाण्डशब्देनोच्यते तद्रूपा इत्यर्थः ।। रसबोध-१०.२७;२
- पोटल्यादिविपाचने रत्नगर्भपोटल्यादिपाके इत्यर्थः ।। रसबोध-१०.२७;३

$

- टीका रससरत्नसमुच्चयटीका:
- त्रयोदशाध्यायोक्तपर्पटीप्रभृतिरसानाम् अल्पस्वेदसाध्यानां पक्वमूषामाह कुलालेति ।। रसटी-१०.२७;१
- वस्त्रमयपोटलीव भेषजगर्भितं भेषजमयमूषा कपर्दिकाशङ्खादि भूमौ गजपुटादिना पाचयितुम् यत्र पात्रान्तरे ध्रियते पाकोत्तरम् आच्छादनसहितं च गृह्यते ।। रसटी-१०.२७;२
- यथा राजयक्ष्मचिकित्सायां मृगाङ्कपोटलीविधौ स रसः पोटलीत्युच्यते ।। रसटी-१०.२७;३

## गोलमूषा

निर्वक्त्रगोलकाकारा पुटनद्रव्यगर्भिणी ।
गोलमूषेति सा प्रोक्ता सत्वरद्रवरोधिनी ।। रस-१०.२८ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- गोलमूषामाह निर्वक्त्रेति ।। रसबोध-१०.२८;१
- मुखविरहितगोलाकारा इत्यर्थः ।। रसबोध-१०.२८;२
- सत्वरद्रवरोधिनी द्रवपदार्थस्रावनिवारिणी इत्यर्थः ।। रसबोध-१०.२८;३
- मध्यस्थितपुटनद्रव्या सम्यङ्निरुद्धानना गोलाकृतिमूषा गोलमूषा बोध्या ।। रसबोध-१०.२८;४

$

- टीका रससरत्नसमुच्चयटीका:
- अथ गोलमूषामाह निर्वक्त्रेति ।। रसटी-१०.२८;१
- गत्वरद्रव्यं पारदरसकमनःशिलाहरितालप्रभृति मध्ये दत्त्वा कुलालेन या निर्मुखैव विधीयते एतत्समा ताम्रमूषा रसहृदयेऽष्टादशावबोधेऽभिहिता ।। रसटी-१०.२८;२
- अत एव तदुदाहरणमत्र नोपयोगि ।। रसटी-१०.२८;३
- मृन्मयोदाहरणप्रयोगो नोपलभ्यते ।। रसटी-१०.२८;४

### महामूषा

तले या कूर्पराकारा क्रमादुपरि विस्तृता ।
स्थूलवृन्ताकवत् स्थूला महामूषेत्यसौ स्मृता ।
सा चायोऽभ्रकसत्त्वादेः पुटाय द्रावणाय च ।। रस-१०.२९ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- महामूषामाह तले इति ।। रसबोध-१०.२९;१
- कूर्पराकारा कूर्परः कफोणिः भुजमध्यसन्धिर् इत्यर्थः तदाकारा ।। रसबोध-१०.२९;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथ महामूषामाह तल इति ।। रसटी-१०.२९;१
- अयोऽभ्रकेति ।। रसटी-१०.२९;२
- अत्रायःशब्देन कान्तं ग्राह्यम् ।। रसटी-१०.२९;३
- तस्यान्तःपीतरेखाविशिष्टस्य छागरक्तेन भावनया शुद्धस्य ।। रसटी-१०.२९;४
- पिण्डीबद्धस्य कोष्ठयन्त्रोदरे मूषायां लघुभस्त्रया धमनाद्भवति सत्त्वनिपातनम् ।। रसटी-१०.२९;५

### मण्डूकमूषा

मण्डूकाकारा या निम्नतायामविस्तरा ।
षडङ्गुलप्रमाणेन मूषा मण्डूकसंज्ञिका ।
भूमौ निखन्य तां मूषां दद्यात्पुटमथोपरि ।। रस-१०.३० ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- मण्डूकमूषामाह मण्डूकेति ।। रसबोध-१०.३०;१
- मण्डूकः भेकः तदाकारा ।। रसबोध-१०.३०;२
- षडङ्गुलप्रमाणेन निम्नतायामविस्तरा षडङ्गुलप्रमाणगभीरतादैर्घ्यविस्तारयुक्ता ।। रसबोध-१०.३०;३

$

- टीका रससरत्नसमुच्चयटीका:
- मण्डूकमूषामाह मण्डूकेति ।। रसटी-१०.३०;१
- तदाकारमूषाया गाम्भीर्यदैर्घ्यपरिणाहाः षडङ्गुलमिताः कार्याः ।। रसटी-१०.३०;२
- उपरि मृत्तिकया ताम् चतुरङ्गुलमितम् आच्छाद्य भूमिपृष्ठोपरीत्यर्थः ।। रसटी-१०.३०;३

## मूसल-/मुशलमूषा

मूषा या चिपिटा मूले वर्तुलाष्टाङ्गुलोच्छ्रया ।
मूषा सा मूसलाख्या स्याच्चक्रिबद्धरसे हिता ।। रस-१०.३१ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- मुषलमूषामाह मूषेति ।। रसबोध-१०.३१;१
- वर्तुला मूलाद् ऊर्ध्वमिति बोध्यम् ।। रसबोध-१०.३१;२
- चक्रिबद्धरसे स्त्रीरोगाधिकारोक्त औषधविशेषः ।। रसबोध-१०.३१;३

$

- टीका रससरत्नसमुच्चयटीका:
- मुशलमूषामाह मूषेति ।। रसटी-१०.३१;१
- चक्रिबद्धरसो द्वाविंशाध्याये वक्ष्यमाणः ।। रसटी-१०.३१;२

## कोष्ठी (गेनेरल् देङ्इनितिओन्)

सत्त्वानां पातनार्थाय पातितानां विशुद्धये ।
कोष्ठिका विविधाकारास्तासां लक्षणम् उच्यते ।। रस-१०.३२ ।।

---

- टीका रससरत्नसमुच्चयटीका:

- अल्पाग्निसाध्यस्य द्रव्यपाकस्य साधनाय मूषा नानाविधा उक्ताः ।। रसटी-१०.३२;१
- संप्रति प्रभूताग्निसाध्यस्य द्रव्यपाकस्य साधनार्थं विविधाः कोष्ठीर् वक्तुकामः प्रथमं तासां प्रयोजनमाह सत्वानामिति ।। रसटी-१०.३२;२
- मूषामृदैव कोष्ठीर् विदध्याद् इत्यभिप्रायेणैवात्र कोष्ठीनां मृद्विशेषो नोक्तः ।। रसटी-१०.३२;३
- रसरत्नाकरे तु मृत्तिकाद्रव्याणां प्रमाणमपि स्पष्टं कृत्वाभिहितम् ।। रसटी-१०.३२;४
- तथा च तद्ग्रन्थः ।
- गारा दग्धास्तुषा दग्धा वल्मीकमृत्तिका ।
- अजाश्वानां मलं दग्धं यावत् तत् कृष्णतां गतम् ।। रसटी-१०.३२;५
- पाषाणभेदपत्राणि कृष्णा मृच्च समं समम् ।
- वज्रवल्ल्या द्रवैर्मर्थं दिनं वा पेषयेद्दृढम् ।। रसटी-१०.३२;६
- तेन कोष्ठीर् वङ्कनाला वज्रमूषाश्च कारयेत् ।
- मृन्मयकोशस्य कोष्ठीति नाम प्रसिद्धम् ।। रसटी-१०.३२;७
- सा च द्विविधा ।। रसटी-१०.३२;८
- भूमिकोष्ठी चलत्कोष्ठी च ।। रसटी-१०.३२;९
- यत्कोष्ठीयन्त्रं प्रागुदितं सा चलत्कोष्ठीति निगद्यते ।। रसटी-१०.३२;१०
- इदानीम् उच्यमानास्तु सर्वा भूमिकोष्ठ्यः ।। रसटी-१०.३२;११
- ताश्च द्विविधाः ।। रसटी-१०.३२;१२
- प्रकाशकोष्ठी सपिधानकोष्ठी चेति भेदेन ।। रसटी-१०.३२;१३

## अङ्गारकोष्ठी

राजहस्तसमुत्सेधा तदर्धायामविस्तरा ।
चतुरस्रा च कुड्येन वेष्टिता मृन्मयेन च ।। रस-१०.३३ ।।

एकभित्तौ चरेद्द्वारं वितस्त्याभोगसंयुतम् ।
द्वारं सार्धवितस्त्या च संमितं सुदृढं शुभम् ।। रस-१०.३४ ।।

देहल्यधो विधातव्यं धमनाय यथोचितम् ।
प्रादेशप्रमिता भित्तिर् उत्तरङ्गस्य चोर्ध्वतः ।। रस-१०.३५ ।।

द्वारं चोपरि कर्तव्यं प्रादेशप्रमितं खलु ।
ततश्चेष्टिकया रुद्ध्वा द्वारसंधिं विलिप्य च ।। रस-१०.३६ ।।

शिखित्रैस्तां समापूर्य धमेद्भस्त्राद्वयेन च ।
शिखित्रान् धमनद्रव्यम् ऊर्ध्वद्वारेण निक्षिपेत् ।। रस-१०.३७ ।।

सत्वपातनगोलांश्च पञ्च पञ्च पुनः पुनः ।
भवेद् अङ्गारकोष्ठीयं खराणां सत्वपातिनी ।। रस-१०.३८ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- अङ्गारकोष्ठिकालक्षणमाह राजहस्तेति ।। रसबोध-१०.३८;१

- राजहस्तसमुत्सेधा हस्तद्वयोन्नता ।। रसबोध-१०.३८;२
- राजहस्तस्य विस्तृतव्याख्या गजपुटव्याख्यायां द्रष्टव्या ।। रसबोध-१०.३८;३
- चतुरस्रा चतुष्कोणा ।। रसबोध-१०.३८;४
- वितस्त्याभोगसंयुतं द्वादशाङ्गुलविस्तृतम् ।। रसबोध-१०.३८;५
- द्वारं सार्धवितस्त्या च इत्यस्य देहल्यधः इत्यनेन संबन्धः ।। रसबोध-१०.३८;६
- देहली द्वारनिम्ने पिण्डिका ।। रसबोध-१०.३८;७
- प्रादेशप्रमिता अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते इत्युक्तलक्षणा तर्जनीसहितविस्तृताङ्गुष्ठप्रमाणा ।। रसबोध-१०.३८;८
- उत्तरङ्गस्य द्वारोर्ध्वस्थदारुणः ।। रसबोध-१०.३८;९
- हस्तद्वयोत्सेधं हस्तमितायामविस्तारं चतुष्कोणं समन्तात् मृन्मयभित्तिवेष्टितं च चुल्ल्याकारमेकं मार्त्तिकं यन्त्रं कृत्वा तस्य एकभित्तौ वितस्तिविस्तरं द्वारं द्वारपिण्डिकाधः अष्टादशाङ्गुलमानं द्वारान्तरं च कुर्यात् ।। रसबोध-१०.३८;१०
- द्वारोर्ध्वभागे अङ्गुष्ठतर्जन्योर् मध्यवत् विस्तृतां भित्तिं स्थापयित्वा तदुपरि तद्वद्विस्तृतं द्वारमन्यत् विदध्यात् ततः इष्टकया द्वारसन्धिं रुद्ध्वा आलिप्य च कोष्ठीमङ्गारैः परिपूर्य द्वाभ्यां भस्त्राभ्यां धमेत् ।। रसबोध-१०.३८;११
- भस्मीभूते च अङ्गारे पुनरपि अङ्गारं सत्त्वपातनगोलादिकं च पञ्च पञ्च कृत्वा ऊर्ध्वद्वारेण पुनः पुनः निक्षिपेत् ।। रसबोध-१०.३८;१२
- इयम् अङ्गारकोष्ठी खरद्रव्याणां सत्त्वपातने शुभा ज्ञेया ।। रसबोध-१०.३८;१३

$

- टीका रससरत्नसमुच्चयटीका:
- प्रथमं सपिधानकोष्ठीमाह राजहस्तेति ।। रसटी-१०.३८;१
- सपादहस्तस्त्रिंशदङ्गुलात्मकस्तन्मित उत्सेध उच्छ्रयो यस्यास्तथोक्ता ।। रसटी-१०.३८;२
- तदर्धमात्रौ दैर्घ्यविस्तारौ यस्यास्तथोक्ता ।। रसटी-१०.३८;३
- तथा चतुरस्रा चतुष्कोणा सर्वतो दार्ढ्याय मृन्मयेन कुड्येन भित्त्या बहिर्वेष्टिता कार्या ।। रसटी-१०.३८;४
- तेन चतसृषु दिक्षु चतस्रो भित्तयः सम्भवन्ति ।। रसटी-१०.३८;५
- एकभित्ताविति सामान्यत उक्तमपि योग्यतया पूर्वभित्तौ पश्चिमभित्तौ वेति विशेषार्थे पर्यवस्यति ।। रसटी-१०.३८;६
- तस्यां दिशि स्थितायां भित्तौ द्वारं वितस्त्या संमितं कार्यम् ।। रसटी-१०.३८;७
- यद्वितस्तिमितं दीर्घं सूत्रं तद्वर्तुलं निधायान्तरवकाशो यावान् सम्भवति तन्मितं वर्तुलं चतुरङ्गुलमितम् इत्यर्थः ।। रसटी-१०.३८;८
- अन्तःस्थितज्वालायाः सत्त्वनिर्गमकालबोधिकायाः परीक्षार्थं चरेत् कुर्यात् ।। रसटी-१०.३८;९
- तदर्थं प्रकाश आवश्यकः ।। रसटी-१०.३८;१०
- स तु प्राच्यां प्रतीच्यां वाधिक्येन लभ्यत इति प्रकाशयोग्यत्वाद् विशिष्टा दिगेवात्र गृहीता ।। रसटी-१०.३८;११
- तद्द्वारस्याधोभागो देहली द्वारदेहसंरक्षिका सा द्वित्र्यङ्गुलमिता कार्या ।। रसटी-१०.३८;१२
- तादृग्देहल्या अधोभागे भूतलं संलग्नं पूर्ववदेव सार्धवितस्तिमितसूत्रेण परिच्छिन्नम् अर्थात् षडङ्गुलं वर्तुलं द्वारं भस्त्रायोजनाय कार्यम् ।। रसटी-१०.३८;१३
- अत्र वितस्तिदीर्घा तावद् भित्तिरेव सार्धवितस्तिदीर्घा च द्वारद्वयार्थं पर्याप्ता न भवति ।। रसटी-१०.३८;१४
- अत उक्तं सूत्रमितं वर्तुलं चेति ।। रसटी-१०.३८;१५
- केचित्तु क्रमनिम्नभूमिनिखाततिर्यग्गर्ताभागोऽपि सार्धवितस्तिमानार्थं संग्राह्य इति नोक्तसूत्रदैर्घ्यमानापेक्षा लोहकाराणां तथैव संप्रदायोऽपि संप्रति ध्मानविधौ दृश्यत इति वदन्ति ।। रसटी-१०.३८;१६
- तत्तु नोचितम् ।। रसटी-१०.३८;१७
- तादृशगर्ताभागस्य पातालकोष्ठिकायां वक्ष्यमाणत्वात् ।। रसटी-१०.३८;१८
- ऊर्ध्वभागे कोष्ठिकाया उत्तराङ्गस्योर्ध्वाङ्गस्य च कर्तव्या या भित्तिः सा चतुर्विधापि प्रादेशप्रमिता दशाङ्गुलमितैवार्थाच्छिखाकारवत् संकुचिता कार्या ।। रसटी-१०.३८;१९
- शिखास्थान ऊर्ध्वं द्वारं तु प्रादेशमितायामविस्तारम् एव कार्यम् ।। रसटी-१०.३८;२०

- ततस्तद्द्वारं चेष्टिकया रुद्ध्वा प्रागुक्तवितस्तिमितं द्वारं च कोकिलैः समापूर्य धमेत् ।। रसटी-१०.३८;२१
- किं कृत्वा रुद्ध्वा धमेत्तदाह प्रथमं शिखित्रान् कोकिलान् ध्मानार्हम् अभ्रकादिद्रवं चोर्ध्वद्वारेण क्रमेण निक्षिपेत् ।। रसटी-१०.३८;२२
- किं तद् ध्मानद्रव्यं पिण्डीकृतं भागशः सकृदेव वा निक्षिपेद् इत्याकाङ्क्षायामाह सत्त्वपातनगोलान् इति ।। रसटी-१०.३८;२३
- पुनः पुनः प्रतिप्रक्षेपकालावसरं संततं ध्मात्वा यदाङ्गाराः कार्श्यं प्राप्नुयुः श्वेतभस्मावृताश्च भवेयुस्तदा पुनः कोकिलान् दत्त्वा पुनर्धमनं कार्यम् ।। रसटी-१०.३८;२४
- एवं भस्त्राद्वयेन प्रहरपर्यन्तं संततं ध्मानेन प्रायः कठिनद्रव्याणां सत्त्वनिर्गमनकालः समुपजायते ।। रसटी-१०.३८;२५
- परं तु नायं कालः सत्त्वनिर्गमनज्ञापकः स्वातन्त्रेण किंतु शुक्ला वह्निज्वालैव ज्ञायमाना ।। रसटी-१०.३८;२६
- उक्तं हि परिभाषाध्याये ।
- यदा हुताशो दीप्तार्चिः शुक्लोत्थानसमन्वितः ।
- शुद्धावर्तस्तदा ज्ञेयः स कालः सत्त्वनिर्गमे ।
- इति ।। रसटी-१०.३८;२७
- तदा स्फुटिपिण्डीर् बहिर् निष्कास्य किट्टं पृथक्कृत्य गुरुमार्गेण सत्त्वमात्रं ग्राह्यम् ।। रसटी-१०.३८;२८
- अथ द्वितीयः सत्त्वपिण्डानां प्रक्षेपकालः प्राप्नोतीति बोध्यम् ।। रसटी-१०.३८;२९
- अथ मृदुद्रव्याणां सत्त्वपातार्थम् अल्पध्मानापेक्षा ।। रसटी-१०.३८;३०

### पातालकोष्ठी

दृढभूमौ चरेद्गर्तं वितस्त्या संमितं शुभम् ।
वर्तुलं चाथ तन्मध्ये गर्तमन्यं प्रकल्पयेत् ।। रस-१०.३९ ।।

चतुरङ्गुलविस्तारनिम्नत्वेन समन्वितम् ।
गर्ताद्धरणिपर्यन्तं तिर्यङ्नालसमन्वितम् ।। रस-१०.४० ।।

किंचित् समुन्नतं बाह्यगर्ताभिमुखनिम्नगम् ।
मृच्चक्रीं पञ्चरन्ध्राढ्यां गर्भगर्तोदरे क्षिपेत् ।। रस-१०.४१ ।।

आपूर्य कोकिलैः कोष्ठीं प्रधमेद् एकभस्त्रया ।
पातालकोष्ठिका ह्य् एषा मृदूनां सत्त्वपातिनी ।
ध्मानसाध्यपदार्थानां नन्दिना परिकीर्तिता ।। रस-१०.४२ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- पातालकोष्ठिकामाह दृढभूमाविति ।। रसबोध-१०.४२;१
- कठिनमृत्तिकायां वितस्तिमानं वर्तुलं गर्तम् एकं कृत्वा तन्मध्ये चतुरङ्गुलविस्तारं चतुरङ्गुलगभीरं गर्ताद् भूपृष्ठपर्यन्तयायिवक्राकृतिनालसंयुक्तम् ईषदुच्छ्रितं च गर्तमन्यं कुर्यात् ।। रसबोध-१०.४२;२
- ततः अभ्यन्तरगर्तमध्ये पञ्चरन्ध्रसंयुक्तां मृच्चक्रीं स्थापयित्वा अङ्गारैः कोष्ठीं परिपूर्य च एकभस्त्रया प्रधमेत् ।। रसबोध-१०.४२;३
- मृदुद्रव्याणां सत्त्वपातनार्थम् इयं पातालकोष्ठीति ज्ञेयमिति निष्कर्षः ।। रसबोध-१०.४२;४

$

- टीका रससरत्नसमुच्चयटीका:
- अतस्तदुपयोगिकोष्ठीविशेषमाह दृढभूमाविति ।। रसटी-१०.४२;१

- तत्र द्वादशाङ्गुलं गर्तं विधाय तत्तलमध्ये चतुरङ्गुलगाम्भीर्यविस्तारम् अन्यं वर्तुलं गर्तं कृत्वा गर्भगर्ततलम् आरभ्य पृष्ठभागपर्यन्तं बाह्यगर्ताभिमुखं तत्सल्लग्नं किंचित्समुन्नतं तिर्यङ्नालसमन्वितं द्वारं विधाय गर्भगर्तोपरि मृच्चक्रीं पञ्चरन्ध्रविशिष्टां वायोर् ऊर्ध्वगमनार्थं क्षिपेत् ।। रसटी-१०.४२;२
- तदुपर्यङ्गारांस्तदुपरि सत्त्वपातनगोलांश्च निक्षिप्य सर्वां कोष्ठीं कोकिलैः पूरयित्वैकभस्त्रया धमेत् ।। रसटी-१०.४२;३
- एषा पातालकोष्ठिकेत्युच्यते ।। रसटी-१०.४२;४

## गारकोष्ठी

द्वादशाङ्गुलनिम्ना या प्रादेशप्रमिता तथा ।
चतुरङ्गुलतश्चोर्ध्वं वलयेन समन्विता ।। रस-१०.४३ ।।

भूरिच्छिद्रवतीं चक्रीं वलयोपरि निक्षिपेत् ।
शिखित्रांस्तत्र निक्षिप्य प्रधमेद् वङ्कनालतः ।
गारकोष्ठीयम् आख्याता मृष्टलोहविनाशिनी ।। रस-१०.४४ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अधोध्मानविशिष्टां कोष्ठीमुक्तोर्ध्वधमनविशिष्टां कोष्ठीमाह द्वादशेति ।। रसटी-१०.४४;१
- प्रादेशायामविस्तारा कोष्ठी भूतलोपरि कार्या ।। रसटी-१०.४४;२
- सा च तलभागम् आरभ्योपरि चतुरङ्गुलभागं विहाय तदुपरि वलयेन कटकेन समन्वितां तां कृत्वा वलयोपरि प्रभूतच्छिद्रयुक्तां चक्रीं निक्षिप्य तत्र कोकिलांश्च दत्त्वा वङ्कनालतः प्रधमेत् ।। रसटी-१०.४४;३
- मृत्तिकापेक्षया अधिकगारभागमिश्रितमृदुपादानेयं कोष्ठी गारकोष्ठीत्युच्यते ।। रसटी-१०.४४;४
- इयं कांस्यरीतिप्रमुखं यत्सृष्टलोहं तन्मध्ये संसर्गघटकयोर् मध्य एकस्यावशेषकरी द्वितीयं विनाश्येत्यर्थः ।। रसटी-१०.४४;५

$

- टीका रससरत्नसमुच्चयबोधिनी:
- गारकोष्ठीमाह द्वादशेति ।। रसबोध-१०.४४;१
- द्वादशाङ्गुलगभीरा प्रादेशप्रमाणविस्तारविशिष्टा कोष्ठी एका कार्या तस्या ऊर्ध्वं चतुरङ्गुले वलयाकारम् आलवालम् एकं दत्त्वा तदुपरि बहुच्छिद्रां चक्रीं निधाय अङ्गारं निक्षिप्य च वङ्कनालेन प्रधमेत् इति ।। रसबोध-१०.४४;२
- मृष्टलोहविनाशिनी शोधितलौहमारिणी इत्यर्थः ।। रसबोध-१०.४४;३

## वङ्कनाल

मूषामृद्भिर् विधातव्यम् अरत्निप्रमितं दृढम् ।
अधोमुखं च तद्वक्त्रे नालं पञ्चाङ्गुलं खलु ।
वङ्कनालम् इदं प्रोक्तं दृढध्मानाय कीर्तितम् ।। रस-१०.४५ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:

- गारकोष्ठिकायां वङ्कनालम् इत्युक्तं किं तत् वङ्कनालम् इत्याशंसायामाह मूषामृद्भिरिति ।। रसबोध-१०.४५;१
- शर्करादीनाम् अन्यतमाभिः मूषोपयोगिमृद्भिः अरत्निप्रमितं दृढं नालं कृत्वा तन्मुखे पञ्चाङ्गुलप्रमाणम् अधोमुखं नालम् एकं योजयेत् दृढध्मानाय तद् वङ्कनालं वेदितव्यम् ।। रसबोध-१०.४५;२

## मूषाकोष्ठी/तिर्यक्प्रधमनकोष्ठी

कोष्ठी सिद्धरसादीनां विधानाय विधीयते ।
द्वादशाङ्गुलकोत्सेधा सा बुध्ने चतुरङ्गुला ।
तिर्यक्प्रधमनास्या च मृदुद्रव्यविशोधिनी ।। रस-१०.४६ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ सिद्धरसानां खोटबद्धादीनाम् अभ्रकादिसत्त्वानां च काचटङ्कणसौवीरादिना शोधयितुं साधनभूतां कोष्ठीमाह द्वादशाङ्गुलेति ।। रसटी-१०.४६;१
- अस्यां कोष्ठ्यां स्थापितमूषामध्ये सिद्धरसादि प्रक्षिप्य संततध्मानावसरेऽन्तरान्तरा मुहुः काचचूर्णादि दत्त्वा धमेत् ।। रसटी-१०.४६;२
- मृदुद्रव्यं सत्त्वादि ।। रसटी-१०.४६;३
- इयं कोष्ठी बुध्नभागमारभ्य मुखभागपर्यन्तं क्रमविस्तृता प्रादेशप्रमितवर्तुलमुखी कार्येत्यनुक्तमपि बोध्यम् ।। रसटी-१०.४६;४
- पूर्वस्यास्तथामानमुखस्योक्तत्वात् ।। रसटी-१०.४६;५

## पुट

रसादिद्रव्यपाकानां प्रमाणज्ञापनं पुटम् ।
नेष्टो न्यूनाधिकः पाकः सुपाकं हितम् औषधम् ।। रस-१०.४७ ।।

लोहादेरपुनर्भावो गुणाधिक्यं ततोऽग्रता ।
अनप्सु मज्जनं रेखापूर्णता पुटतो भवेत् ।। रस-१०.४८ ।।

पुटाद् ग्राव्णो लघुत्वं च शीघ्रव्याप्तिश्च दीपनम् ।
जारितादपि सूतेन्द्राल्लोहानाम् अधिको गुणः ।। रस-१०.४९ ।।

यथाश्मनि विशेद् वह्निर् बहिःस्थपुटयोगतः ।
चूर्णत्वाद्धि गुणावाप्तिस्तथा लोहेषु निश्चितम् ।। रस-१०.५० ।।

---

- टीका रससरत्नसमुच्चयटीका:
- संप्रति मूषाकोष्ठ्यपेक्ष्याधिकतराग्निजनकपुटान् वक्तुं तेषां प्रयोजनमाह रसेति ।। रसटी-१०.५०;१
- रसलोहप्रभृतिकठोरद्रव्याणां सम्यक्पाको भेषजार्थमपेक्ष्यते ।। रसटी-१०.५०;२
- स च पाकः क्रियारूपस्तुलया परिमाणेन वा परिच्छेतुं न शक्यते ।। रसटी-१०.५०;३
- सुपाकस्य प्रमाणबोधकं पुटम् एवाग्निदीपकोपलतुषगोर्वरसंपूर्यगर्तादिविशेष एव सम्भवति ।। रसटी-१०.५०;४

- एतद्गर्तापूरितोपलाग्निनैकः सुपाकोऽभवदिति तत्पुटविशेषावृत्तिः कार्या ।। रसटी-१०.५०;५
- यथोक्तगुणलाभपर्यन्तमिति भावः ।। रसटी-१०.५०;६
- न्यूनपाकेन गन्धवर्णरसस्पर्शः सम्यङ्न जायते ।। रसटी-१०.५०;७
- अधिपाकेन तु द्रव्यं निःसारं दग्धं भवत्योदनवत् ।। रसटी-१०.५०;८
- अथ पुटस्य योगतो गुणांल्लोहस्थान् आह लोहादेरिति ।। रसटी-१०.५०;९
- अपुनर्भावो न प्राकृतस्वरूपापादनं पञ्चमित्रसंस्कारेणापि ।। रसटी-१०.५०;१०
- गुणाधिक्यमामावस्थापन्ने तस्मिन् भक्षिते जाठराग्न्यपाकेन रोगवारका गुणास्तथा पुष्ट्यादयो मार्दवादयश्चानुद्भूतास्तेषाम् उद्भवेनाधिक्याभासः ।। रसटी-१०.५०;११
- तेन चाग्रता श्रेष्ठताधिकमूल्यता ।। रसटी-१०.५०;१२
- तथाप्सु प्रक्षिप्तस्य तस्य न मज्जनम् उपरितरणम् ।। रसटी-१०.५०;१३
- अङ्गुलिभ्यां पीडितस्य तस्य सूक्ष्माङ्गुलिरेखासु प्रविष्टत्वं च ।। रसटी-१०.५०;१४
- अभ्रकवज्रहरितालादिरूपपाषाणविशेषेषु तु लघुत्वादयो गुणाः पुटात्प्रादुर्भवन्ति ।। रसटी-१०.५०;१५
- किं बहुना गुणवर्णनेन ।। रसटी-१०.५०;१६
- यत्र गुणाः सर्वे सम्भूयोत्कटा निवसन्ति तस्मात् पारदादपि जीर्णरसोपरसमणिलोहात् सुसिद्धानां लोहानां गुणा यथाविधिसेविनो नरस्य शरीरेऽधिका एव ।। रसटी-१०.५०;१७
- भूरिफलयुतोऽपि सिद्धरसस्य हि क्रामणार्थं किंचित्स्फुटितयौवना कामिनी संनिहितापेक्ष्यते भाषणचुम्बनालिङ्गनार्थं तत्स्तनाभ्यामङ्गमर्दनार्थं च ।। रसटी-१०.५०;१८
- तदसंनिधौ सर्वशरीरे क्रामणाभावेन न मन्मथः ।। रसटी-१०.५०;१९
- सांनिध्ये तु प्रमादेन मैथुनम् ।। रसटी-१०.५०;२०
- ततश्च मारणम् आपद्यते ।। रसटी-१०.५०;२१
- किंच रससेविनो वर्षपर्यन्तं परिहारविशेषः ।। रसटी-१०.५०;२२
- आदौ क्षेत्रीकरणं चावश्यकम् ।। रसटी-१०.५०;२३
- पारदसिद्धावनुभूतसर्वक्रियासाधकः प्रभूतद्रव्यादिसंपच्चापेक्ष्यते ।। रसटी-१०.५०;२४
- अत एव नातिनिरपायस्य लोहस्य गुणानाम् आधिक्यमुपचर्यते ।। रसटी-१०.५०;२५
- ननु पाषाणतोऽपि कठिनाणां लोहविशेषाणां नावयवविश्लेष इति कथम् उक्तलाभ इत्याशङ्क्य निदर्शनेन पुनर्लोहगुणान् दृढीकरोति यथाश्मनीति ।। रसटी-१०.५०;२६
- अन्तरग्निप्रवेशेन सर्वं सम्भवतीति भावः ।। रसटी-१०.५०;२७

### महापुट

निम्नविस्तरतः कुण्डे द्विहस्ते चतुरस्रके ।
वनोत्पलसहस्रेण पूरिते पुटनौषधम् ।। रस-१०.५१ ।।

क्रौञ्च्यां रुद्धं प्रयत्नेन पिष्टिकोपरि निक्षिपेत् ।
वनोत्पलसहस्रार्धं क्रौञ्चिकोपरि विन्यसेत् ।
वह्निं प्रज्वालयेत्तत्र महापुटमिदं स्मृतम् ।। रस-१०.५२ ।।

---

- टीका रससरत्नसमुच्चयटीका:

- संप्रति गर्ताविशेषं महापुटमाह भूमिमध्य इष्टिकादिभिः कृते कुड्ये कुड्यमये गर्ते गाम्भीर्यविस्ताराभ्यां द्विहस्ते तथा चतुष्कोणे तादृग्गर्ते वन्यच्छगणैः सहस्रसंख्याकैः पूरिते सति शरावसंपुटितं भेषजं पिष्टिकोपरि पूरितच्छगणोपरि स्थापयेत् ।। रसटी-१०.५२;१
- तादृशमूषिकोपर्यर्धसहस्रं छगणानां पूरयेत् ।। रसटी-१०.५२;२
- ततो दीपयेत् ।। रसटी-१०.५२;३

## गजपुट

राजहस्तप्रमाणेन चतुरस्रं च निम्नकम् ।
पूर्णं चोपलसाठीभिः कण्ठावध्यथ विन्यसेत् ।। रस-१०.५३ ।।

विन्यसेत्कुमुदीं तत्र पुटनद्रव्यपूरिताम् ।
पूर्णच्छगणतोऽर्धानि गिरिण्डानि विनिक्षिपेत् ।
एतद्गजपुटं प्रोक्तं महागुणविधायकम् ।। रस-१०.५४ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ गजपुटमाह राजहस्तेति ।। रसटी-१०.५४;१
- राजहस्तस्त्रिंशदङ्गुलिमितः ।। रसटी-१०.५४;२
- तन्मितं निम्नं गम्भीरं तन्मितविस्तारं च गर्तं बोध्यं ।। रसटी-१०.५४;३
- निम्नमित्यत्र विस्तारशब्दो लुप्तनिर्दिष्टः ।। रसटी-१०.५४;४
- तदुपलशाठीभिः कण्ठपर्यन्तं पूरयेत् ।। रसटी-१०.५४;५
- उपलाः कठिना महान्तो वन्यच्छगणास्ततोऽल्पदेहाः शाठ्यः ।। रसटी-१०.५४;६
- तत्र मूषां भेषजगर्भितां विन्यस्य पूर्वविन्यस्तच्छगणतोऽर्धमानानि गिरिण्डानि वन्यच्छगणानि विनिक्षिपेत् इत्येतद्गजपुटाख्यं मतम् ।। रसटी-१०.५४;७

## वाराहपुट

इत्थं चारत्निके कुण्डे पुटं वाराहमुच्यते ।। रस-१०.५५ ।।

## कुक्कुटपुट

पुटं भूमितले तत्तद्वितस्तिद्वितयोच्छ्रयम् ।
तावच्च तलविस्तीर्णं तत्स्यात्कुक्कुटकं पुटम् ।। रस-१०.५६ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ कुक्कुटपुटमाह ।। रसटी-१०.५६;१
- भूमिपृष्ठभागे कुड्येन निर्मितं चतुर्विंशत्यङ्गुलोच्छ्रायं तावन्मानमेव तले मुखे च विस्तृतमेतादृशं यद्गर्तं भेषजं पक्तुमुपलादिभिः पूर्यते तत्कुक्कुटपुटसंज्ञं भवति ।। रसटी-१०.५६;२

$

- टीका रससरत्नसमुच्चयबोधिनी:
- कुक्कुटपुटमाह पुटमिति ।। रसबोध-१०.५६;१
- वितस्तिद्वितयोच्छ्रयं हस्तप्रमाणोन्नतम् ।। रसबोध-१०.५६;२
- तावच्च तलविस्तीर्णं अधोभागेऽपि हस्तप्रमाणविस्तृतम् ।। रसबोध-१०.५६;३
- एतत्तु भूमेरुपरि एव कार्यं न तु गर्तं खनित्वा ।। रसबोध-१०.५६;४

## कपोतपुट

यत्पुटं दीयते भूमाव् अष्टसंख्यैर् वनोपलैः ।
बद्ध्वा सूतार्कभस्मार्थं कपोतपुटमुच्यते ।। रस-१०.५७ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- यच्च गर्तं भूमितले मृदादिभिः कृतमष्टसंख्यैर्वनोपलैर्दीयते ज्वालया प्रज्वलितं क्रियते बद्धपारदस्य भस्मकरणार्थं तत्कपोतपुटमुच्यते ।। रसटी-१०.५७;१

$

- टीका रससरत्नसमुच्चयबोधिनी:
- बद्ध्वा मूषायां रुद्ध्वेत्यर्थः ।। रसबोध-१०.५७;१
- सूतार्कभस्मार्थं रसभस्मार्थं ताम्रभस्मार्थं च ।। रसबोध-१०.५७;२

## गोवर

गोष्ठान्तर्गोक्षुरक्षुण्णं शुष्कं चूर्णितगोमयम् ।
गोवरं तत्समादिष्टं वरिष्ठं रससाधने ।। रस-१०.५८ ।।

## गोवरपुट

गोवरैर्वा तुषैर्वापि पुटं यत्र प्रदीयते ।
तद्गोवरपुटं प्रोक्तं रसभस्मप्रसिद्धये ।। रस-१०.५९ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- गोर्वरैस्तुषैर्वा यत्र गजपुटगर्तायां पुटं दीयते भेषजं पक्वं क्रियते तद्गोर्वरपुटमुच्यते ।। रसटी-१०.५९;१

### भाण्डपुट

स्थूलभाण्डे तुषापूर्णे मध्ये मूषासमन्विते ।
वह्निना विहिते पाके तद्भाण्डपुटमुच्यते ।। रस-१०.६० ।।

### वालुकापुट

अधस्तादुपरिष्टाच्च क्रौञ्चिकाच्छाद्यते खलु ।
वालुकाभिः प्रतप्ताभिर्यत्र तद्वालुकापुटम् ।। रस-१०.६१ ।।

### भूधरपुट

वह्निमित्राः क्षितौ सम्यङ्निखन्याद् द्व्यङ्गुलादधः ।
उपरिष्टात्पुटं यत्र पुटं तद् भूधराह्वयम् ।। रस-१०.६२ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- वह्निमित्राः मूषाः दीर्घकालं वह्निना सहावस्थानात् अस्या वह्निमित्रत्वं ज्ञातव्यम् ।। रसबोध-१०.६२;१
- स्पष्टमन्यत् ।। रसबोध-१०.६२;२

$

- टीका रससरत्नसमुच्चयटीका:
- अथ भूधरपुटमाह वह्निमित्रामिति ।। रसटी-१०.६२;१
- वह्निमित्रा मूषा शराव इति यावत् ।। रसटी-१०.६२;२
- जयसुन्दरादिरसविधावस्या उपयोगो बोध्यः ।। रसटी-१०.६२;३

### लावकपुट

ऊर्ध्वं षोडशिकामूत्रैस्तुषैर्वा गोवरैः पुटम् ।
यत्र तल्लावकाख्यं स्यात् सुमृदुद्रव्यसाधने ।। रस-१०.६३ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ लावकपुटमाह ऊर्ध्वमिति ।। रसटी-१०.६३;१
- शरावाकारमूषां संपुटितां भूमौ निधाय तदुपरि षोडशवनोपलमितैस् तुषैर् गोर्वरैर् वा यत्पुटं दीयते पाकः क्रियते तल्लावकम् इति ख्यातम् ।। रसटी-१०.६३;२
- षोडश एव षोडशिका ।। रसटी-१०.६३;३
- सा संख्या चात्र वन्योपलानामेव ग्राह्या ।। रसटी-१०.६३;४
- तन्मात्रैस् तद्वन्यच्छगणतुलितैर् इत्यर्थः ।। रसटी-१०.६३;५

### पुट > देfऔल्त् दिमेन्सिओन्स्

अनुक्तपुटमाने तु साध्यद्रव्यबलाबलात् ।
पुटं विज्ञाय दातव्यम् ऊहापोहविचक्षणैः ।। रस-१०.६४ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- पुटानां हि प्रायो वन्यच्छगणसाध्यत्वात्तदुपस्थितिः ।। रसटी-१०.६४;१
- अथ कुम्भपुटं ग्रन्थान्तरोक्तं वक्ष्यामि ।
- मृद्घटे बहुरन्ध्राणि कृत्वाङ्गुलसमानि वै ।
- चत्वारिंशत्ततस्तस्मिञ्शीतमुल्मुकचूर्णकम् ।। रसटी-१०.६४;२
- अर्धम् आपूरयित्वा च मुखे दद्याच्छरावकम् ।
- कर्पटेन मृदा लिप्त्वा छायाशुष्कं च कारयेत् ।। रसटी-१०.६४;३
- तस्मिन्नङ्गारकान् क्षिप्त्वा चुल्ल्यां वा चेष्टिकासु च ।
- निधाय त्रिदिनाच्छीतं गृहीत्वौषधिमाहरेत् ।। रसटी-१०.६४;४
- एतत् कुम्भपुटं ज्ञेयं कथितं शास्त्रदर्शिभिः ।
- इति ।। रसटी-१०.६४;५

### स्य्नोन्य्म्स् fओर् उपल

पिष्टकं छगणं छाणम् उत्पलं चोपलं तथा ।
गिरिण्डोपलसाठी च वराटी छगणाभिधाः ।। रस-१०.६५ ।।

### (अ-)कृत्रिमलोहानि

सुवर्णं रजतं ताम्रं त्रपु सीसकम् आयसम् ।
षडेतानि च लोहानि कृत्रिमौ कांस्यपित्तलौ ।। रस-१०.६६ ।।

### षड्लवण

लवणानि षड् उच्यन्ते सामुद्रं सैन्धवं विडम् ।
सौवर्चलं रोमकं च चूलिकालवणं तथा ।। रस-१०.६७ ।।

### क्षारत्रय

क्षारत्रयं समाख्यातं यवसर्जिकटङ्कणम् ।। रस-१०.६८ ।।

### क्षारपञ्चक

पलाशमुष्ककक्षारौ यवक्षारः सुवर्चिका ।
तिलनालोद्भवः क्षारः संयुक्तं क्षारपञ्चकम् ।। रस-१०.६९ ।।

### मधुरत्रय

घृतं गुडो माक्षिकं च विज्ञेयं मधुरत्रयम् ।। रस-१०.७० ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- तुम्बिनी कटुतुम्बी सरलकाष्ठं वा ।। रसबोध-१०.७०;१

### ओइल् > fओर् संस्कारस्

कङ्गुणी तुम्बिनी घोषा करीरश्रीफलोद्भवम् ।
कटुवार्त्ताकसिद्धार्थसोमराजीविभीतजम् ।। रस-१०.७१ ।।

अतसीजं महाकालीनिम्बजं तिलजं तथा ।
अपामार्गाद्देवदालीदन्तीतुम्बुरुविग्रहात् ।। रस-१०.७२ ।।

अङ्कोलोन्मत्तभल्लातपलाशेभ्यस् तथैव च ।
एतेभ्यस्तैलमादाय रसकर्मणि योजयेत् ।। रस-१०.७३ ।।

### वसावर्ग

जम्बूकमण्डूकवसा वसा कच्छपसम्भवा ।
कर्कटीशिशुमारी च गोशूकरनरोद्भवा ।
अजोष्ट्रखरमेषाणां महिषस्य वसा तथा ।। रस-१०.७४ ।।

### मूत्रवर्ग

मूत्राणि हस्तिकरभमहिषीखरवाजिनाम् ।
गोऽजावीनां स्त्रियः पुंसां पुष्पं बीजं तु योजयेत् ।। रस-१०.७५ ।।

### पञ्चमाहिष

माहिषाम्बु दधि क्षीरं साभिघारं शकृद्रसः ।

#### छागलपञ्चक

तत्पञ्चमाहिषं ज्ञेयं तद्वच्छागलपञ्चकम् ।। रस-१०.७६ ।।

### अम्लवर्ग

अम्लवेतसजम्बीरनिम्बुकं बीजपूरकम् ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- अम्लीकं तिन्तिडीफलम् ।। रसबोध-१०.७७कख;१

चाङ्गेरी चणकाम्लं च अम्लीकं कोलदाडिमम् ।। रस-१०.७७ ।।

अम्बष्ठा तिन्तिडीकं च नागरं रसपत्त्रिका ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- रसपत्त्रिका कपित्थाम्लम् ।। रसबोध-१०.७८कख;१

करवन्दं तथा चान्यदम्लवर्गः प्रकीर्तितः ।। रस-१०.७८ ।।

चणकाम्लश्च सर्वेषामेक एव प्रशस्यते ।
अम्लवेतसमेकं वा सर्वेषामुत्तमोत्तमम् ।

### अम्लवर्ग > उसे

रसादीनां विशुद्ध्यर्थं द्रावणे जारणे हितम् ।। रस-१०.७९ ।।

### अम्लपञ्चक

कोलदाडिमवृक्षाम्लचुल्लिकाचुक्रिकारसः ।
पञ्चाम्लकं समुद्दिष्टं तच्चोक्तं चाम्लपञ्चकम् ।। रस-१०.८० ।।

### पञ्चमृत्तिका

इष्टिका गैरिका लोणं भस्म वल्मीकमृत्तिका ।
रसप्रयोगकुशलैः कीर्तिताः पञ्चमृत्तिकाः ।। रस-१०.८१ ।।

### विषवर्ग

शृङ्गीकं कालकूटं च वत्सनाभं सकृत्रिमम् ।
पित्तं च विषवर्गोऽयं स वरः परिकीर्तितः ।। रस-१०.८२ ।।

रसकर्मणि शस्तोऽयं तद्भेदनविधाव् अपि ।
अयुक्त्या सेवितश्चायं मारयत्येव निश्चितम् ।। रस-१०.८३ ।।

### उपविष

लाङ्गली विषमुष्टिश्च करवीरं जया तथा ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- नीलकः भल्लातकः ।। रसबोध-१०.८४कख;१

नीलकः कनकोऽर्कश्च वर्गो ह्य् उपविषात्मकः ।। रस-१०.८४ ।।

### दुग्धवर्ग

हस्त्यश्ववनिता धेनुर्गर्दभी छागिकाविका ।
उष्ट्रिकोदुम्बराश्वत्थभानुन्यग्रोधतिल्वकम् ।। रस-१०.८५ ।।

दुग्धिका स्नुग्गुणश् चैव तथैवोत्तमकण्टिका ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- उत्तमकण्टिका एरण्डविशेषः वागा भेरेण्डा जामालगोटा इति च भाषा यद्वा उत्तमकण्टिका ।। रसबोध-१०.८६कख;१

एषां दुग्धैर् विनिर्दिष्टो दुग्धवर्गो रसादिषु ।। रस-१०.८६ ।।

### विष्ठावर्ग

पारावतस्य चाषस्य कपोतस्य कलापिनः ।
गृध्रस्य कुक्कुटस्यापि विनिर्दिष्टो हि विड्गणः ।

### विड्वर्ग > उसे

शोधनं सर्वलोहानां पुटनाल्लेपनात् खलु ।। रस-१०.८७ ।।

### रक्तवर्ग

कुसुम्भं खदिरो लाक्षा मञ्जिष्ठा रक्तचन्दनम् ।
अक्षी च बन्धुजीवश्च तथा कर्पूरगन्धिनी ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- कर्पूरगन्धिनी कर्पूरगन्धिहरिद्राविशेषः ।। रसबोध-१०.८८अ-द;१

माक्षिकं चेति विज्ञेयो रक्तवर्गोऽतिरञ्जनः ।। रस-१०.८८ ।।

### पीतवर्ग

किंशुकः कर्णिकारश्च हरिद्राद्वितयं तथा ।
पीतवर्गोऽयमादिष्टो रसराजस्य कर्मणि ।। रस-१०.८९ ।।

### श्वेतवर्ग

तगरः कुटजः कुन्दो गुञ्जा जीवन्तिका तथा ।
सिताम्भोरुहकन्दश्च श्वेतवर्ग उदाहृतः ।। रस-१०.९० ।।

### कृष्णवर्ग

कदली कारवेल्ली च त्रिफला नीलिका नलः ।
पङ्कः कासीसबालाम्रं कृष्णवर्ग उदाहृतः ।। रस-१०.९१ ।।

### रञ्जन wइथ् चोलोउरिन्ग् वर्गस्

रक्तवर्गादिवर्गैश्च द्रव्यं यज्जारणात्मकम् ।
भावनीयं प्रयत्नेन तादृग्रागाप्तये खलु ।। रस-१०.९२ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- काचः मृत्तिकाविशेषः स च क्षाररसः उष्णवीर्यः अञ्जनाद्दृष्टिकारकः विडाख्यलवणो वा ।। रसबोध-१०.९२;१
- शिप्रा शुक्तिविशेषः इत्यर्थः ।। रसबोध-१०.९२;२

### शोधनीयवर्ग

काचटङ्कणशिप्राभिः शोधनीयो गणो मतः ।। रस-१०.९३ ।।

सत्त्वानां बद्धसूतस्य लोहानां मलनाशनः ।
कापालीकङ्गुणध्वंसी रसवादिभिर् उच्यते ।। रस-१०.९४ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- शोधनीगणं तदुपयोगं चाह काचटङ्कणसौवीरैरिति ।। रसटी-१०.९४;१
- सौवीरं अञ्जनविशेषम् ।। रसटी-१०.९४;२
- अयं गणः सूतस्य खोटबद्धादिरूपस्याभ्रकसत्त्वादीनां च यो गुणो वङ्गकापालिका नागकापालिका कालिकादिर् दोषात्मकस्तद्ध्वंसी ।। रसटी-१०.९४;३

- अत एवायं रसवादिभिर् इष्यते ।। रसटी-१०.९४;४

## वर्ग > रेमोविन्ग् हर्द्नेस्स् ओf मेतल्स्

महिषी मेषशृङ्गी च कलिङ्गो धवबीजयुक् ।
शशास्थीनि च योगोऽयं लोहकाठिन्यनाशनः ।। रस-१०.९५ ।।

## वर्ग > मेल्तिन्ग् ओf मेतल्स्

गुडगुग्गुलुगुञ्जाज्यसारघैष् टङ्गणान्वितैः ।
दुर्द्रावाखिललोहादेर् द्रावणाय गणो मतः ।। रस-१०.९६ ।।

क्षाराः सर्वे मलं हन्युर् अम्लं शोधनजारणम् ।
मान्द्यं विषाणि निघ्नन्ति स्नैग्ध्यं स्नेहाः प्रकुर्वते ।। रस-१०.९७ ।।

# रसरत्नसमुच्चय : अध्याय 11

https://sa.wikisource.org/s/80u

### weight units

षट् त्रुट्यश् चैकलिक्षा स्यात् षड् लिक्षा यूकम् उच्यते ।
षड्यूकास्तु रजःसंज्ञं कथितं तव सुव्रते ।। रस-११.१ ।।

षड्रजः सर्षपः साक्षात्सिद्धार्थः स च कीर्तितः ।
षट्सिद्धार्थैन देवेशि यवस्त्वेकः प्रकीर्तितः ।। रस-११.२ ।।

षड्यवैर् एकगुञ्जा स्यात्त्रिगुञ्जो वल्ल उच्यते ।
षड्भिरेव तु गुञ्जाभिर्माष एकः प्रकीर्तितः ।
माषा द्वादश तोलः स्यादष्टौ तोलाः पलं भवेत् ।। रस-११.३ ।।

### wएइघ्त् उनित्स्

त्रुटिः स्यादणुभिः षड्भिस्तैर्लिक्षा षड्भिरीरिता ।
ताभिः षड्भिर्भवेद् यूका षड्यूकास् तद् रजः स्मृतम् ।। रस-११.४ ।।

षड्रजः सर्षपः प्रोक्तस्तैः षड्भिर्यव ईरितः ।
एका गुञ्जा यवैः षड्भिर्निष्पावस्तु द्विगुञ्जकः ।। रस-११.५ ।।

स्याद्गुञ्जात्रितयं वल्लो द्वौ वल्लौ माष उच्यते ।
द्वौ माषौ धरणं ते द्वे शाणनिष्ककलाः स्मृताः ।। रस-११.६ ।।

निष्कद्वयं तु वटकः स च कोल इतीरितः ।
स्यात्कोलत्रितयं तोलः कर्षो निष्कचतुष्टयम् ।। रस-११.७ ।।

### कर्ष > स्य्नोन्य्म्स्

उदुम्बरं पाणितलं सुवर्णं कवलग्रहः ।
अक्षं बिडालपदकं शुक्तिः पाणितलद्वयम् ।। रस-११.८ ।।

शुक्तिद्वयं पलं केचिदन्ये शुक्तित्रयं विदुः ।

### पल > स्य्नोन्य्म्स्

तदेव कथितं मुष्टिः प्रकुञ्चो बिल्वमित्यपि ।। रस-११.९ ।।

पलद्वयं तु प्रसृतं तद्द्वयं कुडवोऽञ्जलिः ।
कुडवौ मानिका तौ स्यात्प्रस्थो द्वे मानिके स्मृतः ।। रस-११.१० ।।

प्रस्थद्वयं शुभं तौ द्वौ पात्रकं द्वयमाढकम् ।
तैश् चतुर्भिर् घटोन्माननल्वनार्मणशूर्पकाः ।। रस-११.११ ।।

द्रोणस्य शब्दाः पर्यायाः पलानां शतकं तुला ।
चत्वारिंशत्पलशततुला भारः प्रकीर्तितः ।। रस-११.१२ ।।

रसार्णवादिशास्त्राणि निरीक्ष्य कथितं मया ।
रसोपयोगि यत् किंचिद् दिङ्मात्रं तत्प्रदर्शितम् ।। रस-११.१३ ।।

अधुना रसराजस्य संस्कारान् सम्प्रचक्ष्महे ।। रस-११.१४ ।।

## १८ संस्कारस्

स्यात्स्वेदनं तदनु मर्दनमूर्छने च उत्थापनं पतनरोधनियामनानि ।
संदीपनं गगनभक्षणमानमत्र संचारणा तदनु गर्भगता द्रुतिश्च ।। रस-११.१५ ।।

बाह्या द्रुतिः सूतकजारणा स्याद् ग्रासस्तथा सारणकर्म पश्चात् ।
संक्रामणं वेधविधिः शरीरे योगस् तथाष्टादशधात्र कर्म ।। रस-११.१६ ।।

न योज्यो मर्मणि छिन्ने न च क्षाराग्निदग्धयोः ।। रस-११.१७ ।।

## मेर्चुर्य् > गुण दुरिन्ग् संस्कारस्

शुद्धः स मृद्वग्निसहो मूर्छितो व्याधिनाशनः ।। रस-११.१८ ।।

निष्कम्पवेगस् तीव्राग्नाव् आयुरारोग्यदो मृतः ।। रस-११.१९ ।।

### त्रिदोष

विषं वह्निर्मलश्चेति दोषा नैसर्गिकास्त्रयः ।
रसे मरणसंतापमूर्छानां हेतवः क्रमात् ।। रस-११.२० ।।

---

- टीका रससरत्नसमुच्चयटीका:
- विषमिति ।। रसटी-११.२०;१
- एते दोषा नैसर्गिकाः ।। रसटी-११.२०;२
- तद्वियोगकरणं दोषान्तरापेक्षयातिदुर्घटम् इति स्वाभाविका इत्युपचर्यन्ते ।। रसटी-११.२०;३
- वस्तुतस्तु देवप्रार्थितमहादेवेन तेषां संबन्धः पारदे योजित इति भावः ।। रसटी-११.२०;४

### यौगिकदोषाः

योगिकौ नागवङ्गौ द्वौ तौ जाड्याध्मानकुष्ठदौ ।। रस-११.२१ ।।

---

- टीका रससरत्नसमुच्चयटीका:

- योगिकौ दोषावाह यौगिकाविति ।। रसटी-११.२१;१
- निकटवर्तिनागवङ्गखनियोगेन मिश्रणाज्जातो नागाख्य एको दोषो वङ्गाख्य एकश्चेति तो द्वौ जाड्यमाध्मानं कुष्ठं च कुरुतः ।। रसटी-११.२१;२

### औपाधिकाः =कञ्चुकाः

औपाधिकाः पुनश्चान्ये कीर्तिताः सप्तकञ्चुकाः ।
भूमिजा गिरिजा वार्जास् ते च द्वे नागवङ्गजौ ।। रस-११.२२ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- उपाधिना संनिहितवस्तुसंबन्धमात्रेण वस्तुनि बहिरेव व्याप्य तिष्ठन्ति किंचित् कालावस्थायिनश्च ये दोषास्ते औपाधिकाः ।। रसटी-११.२२;१
- ते च सप्तविधाः ।। रसटी-११.२२;२
- कञ्चुकाख्यया शास्त्र उदिताः ।। रसटी-११.२२;३
- तेषां मध्ये भूमिजा एकप्रकाराः ।। रसटी-११.२२;४
- तेषाम् अवान्तरभेदेन शास्त्रेऽनुपयोगान्नामतोऽनादृतेन बहुवचनम् ।। रसटी-११.२२;५
- गिरिजा एकविधाः ।। रसटी-११.२२;६
- वार्जा जलजाश्चान्यविधाः ।। रसटी-११.२२;७
- तथा नागेन वणिजादिभिर् मिश्रीकृतेन जातौ दोषौ द्वौ ।। रसटी-११.२२;८
- वङ्गजावपि द्वौ ।। रसटी-११.२२;९
- इत्येवं सप्त कञ्चुकाः पूर्वोक्ताश्च पञ्च दोषाः ।। रसटी-११.२२;१०
- इत्थं पारदे द्वादश दोषा रसज्ञैः प्रोक्ताः ।। रसटी-११.२२;११

द्वादशैते रसे दोषाः प्रोक्ता रसविशारदैः ।। रस-११.२३ ।।

### सप्तकञ्चुकनामानि

पर्पटी पाटनी भेदी द्रावी मलकरी तथा ।
अन्धकारी तथा ध्वाङ्क्षी विज्ञेयाः सप्त कञ्चुकाः ।। रस-११.२४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- पर्पट्यादि सप्त कञ्चुकानां संज्ञाः तत्र पर्पटीसदृशशोषकत्वात् पर्पटी पर्पटी यथा शोषिणी ग्राहिणी च पारदस्य पर्पट्याख्यकञ्चुकोऽपि नरदेहे तत्क्रियाजननी विदारकत्वात् पाटनी मलभेदकत्वाद् भेदिनी शारीरधातूनां द्रवत्वसंपादनाद् द्रावी दोषवर्धकत्वात् मलकरी अन्धत्वजननाद् अन्धकारी ध्वाङ्क्षो यथा कर्कशस्वरो भवति तथा स्वरपारुष्यजननाद् ध्वाङ्क्षीति ज्ञेयम् ।। रसबोध-११.२४;१

$

- टीका रससरत्नसमुच्चयटीका:

- उक्तसप्तकञ्चुकानां क्रमेण नामान्तराण्याह पर्पटीति ।। रसटी-११.२४;१
- रसोपरि पर्पटी पर्पटाकारा भवति ।। रसटी-११.२४;२
- सा पर्पटीत्युच्यते ।। रसटी-११.२४;३
- पाटनी त्वचोविदारणकरी ।। रसटी-११.२४;४
- भेदी त्वचि रन्ध्रकरी ।। रसटी-११.२४;५
- द्रावी लोहादिद्रवकरी ।। रसटी-११.२४;६
- मलकरी वातादिदोषकरी ।। रसटी-११.२४;७
- अन्धकारी कृष्णत्वकरी ।। रसटी-११.२४;८
- ध्वाङ्क्षी कालिमा ।। रसटी-११.२४;९

## कञ्चुकस् > आयुर्वेदीय स्य्म्प्तोम्स्

भूमिजाः कुर्वते कुष्ठं गिरिजा जाड्यमेव च ।
वारिजा वातसंघातं दोषाढ्यं नागवङ्गयोः ।। रस-११.२५ ।।

तस्मात् सूतविधानार्थं सहायैर्निपुणैर्युतः ।
सर्वोपस्करमादाय रसकर्म समारभेत् ।। रस-११.२६ ।।

## संस्कारस् > देfऔल्त् wएइघ्त्स्

द्वे सहस्रे पलानां तु सहस्रं शतमेव वा ।
अष्टाविंशत् पलान्येव दश पञ्चैकमेव वा ।। रस-११.२७ ।।

पलार्धेनैव कर्तव्यः संस्कारः सूतकस्य च ।
सुदिने शुभनक्षत्रे रसशोधनमारभेत् ।। रस-११.२८ ।।

## १. स्वेदन

त्र्यूषणं लवणासूर्यौ चित्रकार्द्रकमूलकम् ।
क्षिप्त्वा सूतो मुहुः स्वेद्यः काञ्जिकेन दिनत्रयम् ।। रस-११.२९ ।।

## २. मर्दन

गृहधूमेष्टिकाचूर्णं तथा दधि गुडान्वितम् ।
लवणासुरीसंयुक्तं क्षिप्त्वा सूतं विमर्दयेत् ।। रस-११.३० ।।

षोडशांशं तु तद् द्रव्यं सूतमानान् नियोजयेत् ।
सूतं क्षिप्त्वा समं तेन दिनानि त्रीणि मर्दयेत् ।। रस-११.३१ ।।

जीर्णाभ्रकं तथा बीजं जीर्णसूतं तथैव च ।
नैर्मल्यार्थं हि सूतस्य खल्ले धृत्वा विमर्दयेत् ।। रस-११.३२ ।।

गृह्णाति निर्मलो रागान् ग्रासे ग्रासे विमर्दितः ।
मर्दनाख्यं हि यत्कर्म तत्सूतगुणकृद् भवेत् ।। रस-११.३३ ।।

### ३. मूर्छन

गृहकन्या मलं हन्यात्त्रिफला वह्निनाशिनी ।
चित्रमूलं विषं हन्ति तस्माद् एभिः प्रयत्नतः ।। रस-११.३४ ।।

मिश्रितं सूतकं द्रव्यैः सप्तवाराणि मूर्छयेत् ।
इत्थं संमूर्छितः सूतो दोषशून्यः प्रजायते ।। रस-११.३५ ।।

### संस्कार > उत्थापन

अस्माद्विरेकात् संशुद्धो रसः पात्यस्ततः परम् ।
उद्धृतः काञ्जिकक्वाथात् पूतिदोषनिवृत्तये ।। रस-११.३६ ।।

### संस्कार > पातन

ताम्रेण पिष्टिकां कृत्वा पातयेदूर्ध्वभाजने ।
वङ्गनागौ परित्यज्य शुद्धो भवति सूतकः ।। रस-११.३७ ।।

### संस्कार > ऊर्ध्व-, अधःपातन

शुल्वेन पातयेत् पिष्टीं त्रिधोर्ध्वं सप्तधा त्व् अधः ।। रस-११.३८ ।।

### संस्कार > अधःपातन

त्रिफलाशिग्रुशिखिभिर् लवणासुरीसंयुतैः ।
नष्टपिष्टं रसं कृत्वा लेपयेच्चोर्ध्वभाजने ।
ततो दीप्तैरधः पातमुत्पलैस्तत्र कारयेत् ।। रस-११.३९ ।।

### संस्कार > पातन

हरिद्राङ्कोलशम्पाककुमारीत्रिफलाग्निभिः ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- शम्पाकः आरग्वधः ।। रसबोध-११.४०कख;१

तण्डुलीयकवर्षाभूहिङ्गुसैन्धवमाक्षिकैः ।। रस-११.४० ।।

पिष्टं रसं सलवणैः सर्पाक्ष्यादिभिरेव वा ।
पातयेद् अथवा देवि व्रणघ्नो यक्ष्मलोचनैः ।। रस-११.४१ ।।

इत्थं ह्य् अधऊर्ध्वपातेन पातितोऽसौ यदा भवेत् ।
तदा रसायने योग्यो भवेद् द्रव्यविशेषतः ।। रस-११.४२ ।।

## संस्कार > अधःपातन

अथवा दीपकयन्त्रे निपातितः सर्वदोषनिर्मुक्तः ।। रस-११.४३ ।।

## संस्कार > तिर्यक्पातन

तिर्यक्पातनविधिना निपातितः सूतराजस्तु ।
श्लक्ष्णीकृतम् अभ्रदलं रसेन्द्रयुक्तं तथारनालेन ।। रस-११.४४ ।।

खल्ले दत्त्वा मृदितं यावत् तन् नष्टपिष्टताम् एति ।
कुर्यात् तिर्यक्पातनपातितसूतं क्रमेण दृढवह्निम् ।। रस-११.४५ ।।

संस्वेद्यः पात्योऽसौ न पतति यावद् दृढश् चाग्नौ ।
तदासौ शुध्यते सूतः कर्मकारी भवेद्ध्रुवम् ।। रस-११.४६ ।।

मर्दनैर् मूर्छनैः पातैर् मन्दः शान्तो भवेद् रसः ।। रस-११.४७ ।।

## संस्कार > निरोधन

सृष्ट्यम्बुजैर् निरोधेन ततो मुखकरो रसः ।
स्वेदनादिवशात्सूतो वीर्यं प्राप्नोत्यनुत्तमम् ।। रस-११.४८ ।।

## संस्कार > नियमन

नियम्योऽसौ ततः सम्यक् चपलत्वनिवृत्तये ।
कर्कोटीफणिनेत्राभ्यां वृश्चिकाम्बुजमार्कवैः ।
समं कृत्वारनालेन स्वेदयेच्च दिनत्रयम् ।। रस-११.४९ ।।

## संस्कार > नियमन

मरिचैर् भूखगयुक्तैर् लवणासुरीशिग्रुटङ्कणोपेतैः ।
काञ्जिकयुक्तैस्त्रिदिनं ग्रासार्थी जायते स्वेदात् ।। रस-११.५० ।।

## संस्कार > दीपन

त्रिक्षारसिन्धुखगभूशिखिशिग्रुराजीतीक्ष्णाम्लवेतसमुखैर् लवणोषणाम्लैः ।
नेपालताम्रदलशोषितमारनाले साम्लासवाम्लपुटितं रसदीपनं तत् ।। रस-११.५१ ।।

## संस्कार > दीपन

स्वेदयेदासवाम्लेन वीर्यतेजःप्रवृद्धये ।
यथोपयोगं स्वेद्यः स्यान् मूलिकानां रसेषु च ।। रस-११.५२ ।।

## रसमूलिकास्

सर्पाक्षी क्षीरिणी वन्ध्या मत्स्याक्षी शङ्खपुष्पिका ।
काकजङ्घा शिखिशिखा ब्रह्मदण्ड्याखुकर्णिका ।। रस-११.५३ ।।

वर्षाभूः कम्बुकी दूर्वा सैर्यकोत्पलशिम्बिकाः ।
शतावरी वज्रलता वज्रकन्दाग्निकर्णिका ।। रस-११.५४ ।।

श्वेतार्कशिग्रुधत्तूरमृगदूर्वारसाङ्कुशाः ।
रम्भा रक्ताभनिर्गुण्डी लज्जालुः सुरदालिका ।। रस-११.५५ ।।

मण्डूकपर्णी पाताली चित्रकं ग्रीष्मसुन्दरा ।
काकमाची महाराष्ट्री हरिद्रा तिलपर्णिका ।। रस-११.५६ ।।

जाती जयन्ती श्रीदेवी भूकदम्बः कुसुम्भकः ।
कोशातकी नीरं कणा लाङ्गली कटुतुम्बिका ।। रस-११.५७ ।।

चक्रमर्दोऽमृता कन्दः सूर्यावर्तेषु पुङ्खिका ।
वाराही हस्तिशुण्डी च प्रायेण रसमूलिकाः ।। रस-११.५८ ।।

रसस्य भावने स्वेदे मूषालेपे च पूजिताः ।
इत्यष्टौ सूतसंस्काराः समा द्रव्ये रसायने ।
कार्यास्ते प्रथमं शेषा नोक्ता द्रव्योपयोगिनः ।। रस-११.५९ ।।

## मेर्चुर्य् > बन्धन > इन्त्रोद्.

पञ्चविंशतिसंख्याकान् रसबन्धान् प्रचक्ष्महे ।
येन येन हि चाञ्चल्यं दुर्ग्रहत्वं च नश्यति ।
रसराजस्य सम्प्रोक्तो बन्धनार्थो हि वार्त्तिकैः ।। रस-११.६० ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ प्रथमाध्याये मूर्छित्वा हरति रुजम् इतिपद्योक्ता विषयास्त्रय एवात्र ग्रन्थे वक्तव्याः ।। रसटी-११.६०;१
- मूर्छनं बन्धनं मारणं च ।। रसटी-११.६०;२
- तत्र मूर्छनं तु मर्दनपूर्वकं पुटेन प्रागुक्तमेव ।। रसटी-११.६०;३
- यन्त्रमूर्छनं त्वस्मिन्नध्याये देहोपयोगिसर्वबन्धोत्तरं वक्ष्यामि ।। रसटी-११.६०;४
- द्वितीयो विषयोऽत्र बन्धरूपो वर्ण्यते ।। रसटी-११.६०;५
- पञ्चविंशतीति ।। रसटी-११.६०;६
- ननु ग्रन्थान्तरे पाटखोटजलूकाभस्मेति बन्धश्चतुर्विध एवाख्यातः ।। रसटी-११.६०;७
- अत्र तु पञ्चविंशतिसंख्याक इति प्रतिजानाति ।। रसटी-११.६०;८
- एतद्विरुद्धमिव भातीत्याशङ्क्य चाञ्चल्यदुर्ग्रहत्वाभावरूपसामान्यस्य सर्वबन्धेषु सत्त्वेऽपि बन्धजनककारणभेदानुरोधेन बन्धभेदोऽपि वार्तिकैरादृत इत्याह येन येनेति ।। रसटी-११.६०;९

### बन्धन > सुब्त्य्पेस्

हठारोटौ तथाभासः क्रियाहीनश्च पिष्टिका ।
क्षारः खोटश्च पोटश्च कल्कबन्धश्च कज्जलिः ।। रस-११.६१ ।।

सजीवश्चैव निर्जीवो निर्बीजश्च सबीजकः ।
शृङ्खलाद्रुतिबन्धौ च बालकश्च कुमारकः ।। रस-११.६२ ।।

तरुणश् च तथा वृद्धो मूर्तिबद्धस् तथापरः ।
जलबन्धोऽग्निबन्धश्च सुसंस्कृतकृताभिधः ।
महाबन्धाभिधश्चेति पञ्चविंशतिर् ईरिताः ।। रस-११.६३ ।।

केचिद्वदन्ति षड्विंशो जलूकाबन्धसंज्ञकः ।
स तावन्नेष्यते देहे स्त्रीणां द्रावेऽतिशस्यते ।। रस-११.६४ ।।

### बन्धन > हठ

हठो रसः स विज्ञेयः सम्यक् शुद्धिविवर्जितः ।
स सेवितो नृणां कुर्यान् मृत्युं वा व्याधिमुद्धतम् ।। रस-११.६५ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- पारदम् आपणाद् आनीय निम्बूरसेन संमर्द्य गालयित्वा मयूरतुत्थादिसमभागं चतुर्थांशं वा तत्र दत्त्वा मर्दनेन बद्धो रसः क्रियते ।। रसटी-११.६५;१
- स सेवितश्चेन् मृत्युं कुर्याद्व्याधिं वा ।। रसटी-११.६५;२

### बन्धन > आरोट

सुशोधितो रसः सम्यगारोट इति कथ्यते ।
स क्षेत्रीकरणे श्रेष्ठः शनैर्व्याधिविनाशनः ।। रस-११.६६ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- आरोटलक्षणम् आह सुशोधित इति ।। रसटी-११.६६;१
- त्रिविधपातनेन शुद्धं पश्चाच्छुद्धं चूर्णीकृतम् अभ्रकदलं समभागं दत्त्वा काञ्जिकेन मर्दनपूर्वकं पारदं नष्टपिष्टं कृत्वोर्ध्वाधस्तिर्यक्पातनेनासकृत्कृतेनाग्निसहः पारद आरोट इति निगद्यते ।। रसटी-११.६६;२
- तं च माक्षीकशिलाजतुलोहचूर्णपथ्याक्षविडङ्गघृतमधुभिः संयुतं कृत्वा क्षेत्रीकरणाय युञ्जीतेति रसहृदये ।। रसटी-११.६६;३
- माक्षीकसहितो नष्टपिष्टिरूपः पातनेनाग्निस्थाय्यपि पारदोऽपि आरोट इति कथ्यते ।। रसटी-११.६६;४

### आभासबन्ध

पुटितो यो रसो याति योगं मुक्त्वा स्वभावताम् ।
भावितो धातुमूलाद्यैर् आभासो गुणवैकृतेः ।। रस-११.६७ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- आभासबन्धमाह पुटित इति ।। रसबोध-११.६७;१
- धातुमूलाद्यैः प्रागुक्तस्वर्णादिधातुभिस्तथा सर्पाक्ष्यादिमूलिकाभिः भावितः पुटितश्च रसः गुणवैकृतेः द्रव्यान्तरसंयोगेन स्वाभाविकगुणविपर्ययात् स्वभावतां स्वाभाविकगुणादिकं मुक्त्वा योगं योगवाहितां याति स आभासः कथ्यते इति शेषः ।। रसबोध-११.६७;२

$

- टीका रससरत्नसमुच्चयटीका:
- आभासलक्षणमाह यः पारदो धातुभिर् मनःशिलागन्धकादिभिस्तथा मूलिकाद्यैः सर्पाक्ष्यादिमूलिकाभिः पत्रपुष्पादिभिश्च सह भावितो द्रवं दत्त्वा मर्दितस्ततो भूधरयन्त्रे पुटेन पुटितो भस्मीकृतः स्वभावतः स्वभावं चाञ्चल्यदुर्ग्रहत्वादि मुक्त्वा धात्वादियोगं याति तत्तद्रोगनाशकयोगगुणं च याति गुणप्रदो भवति ।। रसटी-११.६७;१
- अल्पकालपर्यन्तं ततः पथ्यसेविनोऽपि नरस्य गुणवैकृते सति गुणविक्रियायां सत्यां स बद्धपारद आभास इति कीर्तितः ।। रसटी-११.६७;२
- गुणाभासकरत्वात् ।। रसटी-११.६७;३
- विकृतिरेव वैकृतम् ।। रसटी-११.६७;४

### क्रियाहीन

असंशोधितलोहाद्यैः साधितो यो रसोत्तमः ।
क्रियाहीनः स विज्ञेयो विक्रियां यात्यपथ्यतः ।। रस-११.६८ ।।

### पिष्टिकाबन्ध

तीव्रातपे गाढतरावमर्दात्पिष्टी भवेत्सा नवनीतरूपा ।
स रसः पिष्टिकाबन्धो दीपनः पाचनस्तराम् ।। रस-११.६९ ।।

### क्षारबन्ध

शङ्खशुक्तिवराटाद्यैर् योऽसौ संसाधितो रसः ।
क्षारबन्धः परं दीप्तिपुष्टिकृच्छूलनाशनः ।। रस-११.७० ।।

---

- टीका रससरत्नसमुच्चयटीका:
- शङ्खशुक्तीति ।। रसटी-११.७०;१

- भस्मीकृतानां शङ्खशुक्त्यादीनां वृक्षक्षारादीनां च मूषां कृत्वा तत्संपुटे पारदं प्रक्षिप्य संपुटितः पारदो लघुपुटदानेन भस्मीभवतीति क्षारबन्धोऽसावग्निदीप्त्यादिकृद् भवेत् ।। रसटी-११.७०;२

$

- टीका रससरत्नसमुच्चयबोधिनी:
- क्षारबन्धमाह शङ्खेति ।। रसबोध-११.७०;१
- संसाधितः मर्दनपुटनादिभिः सुसम्पादितः ।। रसबोध-११.७०;२
- स्पष्टम् अन्यत् ।। रसबोध-११.७०;३

## खोटबन्ध

बन्धो यः खोटतां याति ध्मातो ध्मातः क्षयं व्रजेत् ।
खोटबन्धः स विज्ञेयः शीघ्रं सर्वगदापहः ।। रस-११.७१ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- खोटबन्धमाह बन्ध इति ।। रसबोध-११.७१;१
- खोटतां वह्निस्थोऽपि अनुड्डयनस्वभावतां यदुक्तम् ।
- अग्निमध्ये यदा तिष्ठेत् खोटबद्धस्य लक्षणम् ।
- इति ।। रसबोध-११.७१;२
- ध्मातो ध्मातः भस्त्रया पुनः पुनर् आध्मापित इत्यर्थः क्षयं व्रजेत् द्रव्यान्तरेण सह एकीभावात् अदर्शनतां गच्छेदित्यर्थः ।। रसबोध-११.७१;३

$

- टीका रससरत्नसमुच्चयटीका:
- अथ खोटबन्धमाह बन्ध इति ।। रसटी-११.७१;१
- खोटकरणप्रकारस्तु रससार उवाच ।
- बन्धने याश्च विख्याता अष्टावेव महौषधीः ।
- ताभिष्टङ्कणयुक्ताभिर् भावयेच्च रसेश्वरम् ।
- ताभिर् विलिप्तमूषायां धमनात् खोटतां व्रजेत् ।। रसटी-११.७१;२
- इति ।। रसटी-११.७१;३
- स एवातिध्मानात् क्षयं गच्छति ।। रसटी-११.७१;४
- स च खोटबन्धो बोध्यः ।। रसटी-११.७१;५
- अत्र पारदो जीर्णषड्गुणगन्धो ग्राह्यः ।। रसटी-११.७१;६
- अभ्रकदानेन पिष्टीकृतो वा ग्राह्यः ।। रसटी-११.७१;७
- सोमवल्लीरसे पिष्ट्वा दापयेच्च पुटत्रयम् ।
- सोमवल्लीरसेनैव सप्तवारांश्च भावयेत् ।। रसटी-११.७१;८
- तदभ्रं मृद्भाण्डे दद्याद् रसेन सह संयुतम् ।
- मूलं तु शरपुङ्खाया गव्यक्षीरेण घर्षयेत् ।। रसटी-११.७१;९

- कल्केन मेलयेत् सूतं गगनं च तदधोर्ध्वगम् ।
- स्थापयेद् रवितापे तु निर्मुखो ग्रसते क्षणात् ।
- जायते पिष्टिका शीघ्रं नात्र कार्या विचारणा ।। रसटी-११.७१;१०
- इति ।। रसटी-११.७१;११
- पिष्टीबन्धस्तु खोटक इति वर्णनाद् अत्र पिष्टिकारूपम् उच्यते ।। रसटी-११.७१;१२
- खोटलक्षणं ग्रन्थान्तरे तु ।
- ध्मातो द्रुतो भवेत् खोट आहतश्चूर्णतां व्रजेत् ।
- पुनर् ध्मातो द्रुतः खोट इति खोटस्य लक्षणम् ।। रसटी-११.७१;१३
- घनसत्त्वपादजीर्णः कान्तपादजीर्णः समतीक्ष्णजीर्णश्चेद्वायं क्षेत्रीकरणार्थम् अपि प्रशस्तः ।। रसटी-११.७१;१४

### पोटबन्ध

द्रुतकज्जलिका मोचापत्त्रके चिपिटीकृता ।
स पोटः पर्पटी सैव बालाद्यखिलरोगनुत् ।। रस-११.७२ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- पाटबन्धं लक्षयति द्रुतेति ।। रसटी-११.७२;१
- अधोऽग्निना कटाहे तापेन द्रुता जातद्रवा या कज्जली सा तत्क्षणे कदलीदले प्रक्षिप्य तद्दलेनाच्छाद्य पीडनेन चिपिटीकृता पाटबन्धः पर्पटिकाबन्धश्चेति ख्याता बालवृद्धादीनाम् अनुपानभेदेन सर्वरोगघ्नी ।। रसटी-११.७२;२

### कल्कबन्ध

स्वेदाद्यैः साधितः सूतः पङ्कत्वं समुपागतः ।
कल्कबद्धः स विज्ञेयो योगोक्तफलदायकः ।। रस-११.७३ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- योगोक्तफलदायकः यस्मिन् योगे स प्रयोज्यः तस्य फलौत्कर्ष्यप्रद इत्यर्थः अथवा स्वेदनमर्दनार्थं गृहीतकल्कद्रव्याणाम् उपयोगे यत् फलं तत्फलप्रद इत्यर्थः ।। रसबोध-११.७३;१

### कज्जलीबन्ध

कज्जली रसगन्धोत्था सुश्लक्ष्णा कज्जलोपमा ।
तत्तद्योगेन संयुक्ता कज्जलीबन्ध उच्यते ।। रस-११.७४ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- कज्जलीबन्धमाह कज्जलीति ।। रसबोध-११.७४;१
- सुश्लक्ष्णा चिक्कणा ।। रसबोध-११.७४;२
- तत्तद्योगेन संयुक्ता रसगन्धकशोधकद्रव्यसंयोगेन शुद्धा इत्यर्थः ।। रसबोध-११.७४;३

$

- टीका रससरत्नसमुच्चयटीका:
- कज्जलीबन्धं लक्षयति ।। रसटी-११.७४;१
- तत्तद्योगेन रोगवारकविशिष्टौषधीमिश्रणमर्दनयोगेन युक्ता सती कज्जलीबन्ध उच्यते ।। रसटी-११.७४;२
- अत्र तत्तद्योगेन संयुक्तेति न लक्षणघटकम् ।। रसटी-११.७४;३
- तेन विना कज्जल्याः सिद्धत्वात् ।। रसटी-११.७४;४
- किंतु योगवाहित्वेनेयं सर्वरोगनाशिकेति बोधनाय तदुक्तिः ।। रसटी-११.७४;५

## सजीव

भस्मीकृतो गच्छति वह्नियोगाद् रसः सजीवः स खलु प्रदिष्टः ।
संसेवितोऽसौ न करोति भस्मकार्यं जवाद् रोगविनाशनं च ।। रस-११.७५ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- सजीवबद्धम् आह भस्मीकृतेति ।। रसटी-११.७५;१
- ताम्बूलीदलरसमर्दितः पश्चाद् वन्ध्याकर्कोटकीकन्दमध्ये प्रक्षिप्य संपुटितो बहिर् मृद्वस्त्राभ्यां संपुटितो भूमौ गजपुटेन पुटितो भस्मीभवति ।। रसटी-११.७५;२
- एवं प्रकारान्तरेणापि भस्मीकृतः पारदोऽग्नौ पात्रे धृतश्चेदाकाशे गच्छति ।। रसटी-११.७५;३
- पक्षच्छेदाभावात् ।। रसटी-११.७५;४
- भस्मकार्यं जरामरणाभावरूपं स तु न करोति ।। रसटी-११.७५;५
- व्याधिनाशमपि न ।। रसटी-११.७५;६

## निर्जीव

जीर्णाभ्रको वा परिजीर्णगन्धो भस्मीकृतश्चाखिललोहमौलिः ।
निर्जीवनामा हि स भस्मसूतो निःशेषरोगान् विनिहन्ति सद्यः ।। रस-११.७६ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- निर्जीवबन्धमाह जीर्णाभ्रक इति ।। रसबोध-११.७६;१
- जीर्णाभ्रकः ग्रासीकृताभ्र इत्यर्थः ।। रसबोध-११.७६;२
- परिजीर्णगन्धः सम्यग्ग्रासितगन्धक इत्यर्थः ।। रसबोध-११.७६;३

- अखिलेति ।। रसबोध-११.७६;४
- अखिलानां सर्वेषां लोहानां स्वर्णादीनामित्यर्थः मौलिः शिरोभूषणस्वरूपः सर्वलोहोपयोगे ये गुणा भवन्ति तेभ्योऽप्यधिकगुणप्रद इत्यर्थः ।। रसबोध-११.७६;५
- वह्नियोगेऽपि निर्गमनासामर्थ्यात् अस्य निर्जीवत्वं बोध्यम् ।। रसबोध-११.७६;६

### निर्बीज

रसस्तु पादांशसुवर्णजीर्णः पिष्टीकृतो गन्धकयोगतश्च ।
तुल्यांशगन्धैः पुटितः क्रमेण निर्बीजनामा सकलामयघ्नः ।। रस-११.७७ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- निर्बीजबन्धं लक्षयति रसस्त्विति ।। रसटी-११.७७;१
- अत्र सुवर्णं न तु बीजीकृतं किंतु शुद्धं जारणायन्त्रे संस्कृतं पत्त्ररूपं ग्राह्यम् ।। रसटी-११.७७;२
- पिष्टीकृतो द्वादशांशे पारद एकांशं गन्धकं त्रुटिशो मुहुर् दत्त्वाम्लेन संमर्दितस्ततस्तुल्यांशगन्धैः क्रमेण पुटितः प्रथमं गन्धकं चतुर्थांशं दत्त्वा भूधरयन्त्रे पुटितस्ततोऽर्धांशं गन्धकं दत्त्वा तथा पुटितस्ततः पादोनं गन्धकं दत्त्वा पुटितस्तदूर्ध्वं समभागमितं दत्त्वा पुटित इति क्रमशब्दार्थः ।। रसटी-११.७७;३
- गन्धैर् इति बहुवचनम् अतन्त्रम् ।। रसटी-११.७७;४

### सबीजबन्धन

पिष्टीकृतैर् अभ्रकसत्त्वहेमतारार्ककान्तैः परिजारितो यः ।
हतस्ततः षड्गुणगन्धकेन सबीजबद्धो विपुलप्रभावः ।। रस-११.७८ ।।

### शृङ्खलाबन्ध

वज्रादिनिहतः सूतो हतः सूतः समोऽपरः ।
शृङ्खलाबद्धसूतस्तु देहलोहविधायकः ।
चित्रप्रभावां वेगेन व्याप्तिं जानाति शंकरः ।। रस-११.७९ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- वज्रेण भस्मीकृतेन चूर्णीकृतेन वा निहतो मारितो यः सूतस्तन्मध्ये मारितम् अन्यं सूतकम् अपि निक्षिपेत् ।। रसटी-११.७९;१
- सोऽपि रसो बद्धः खोटरूपः शृङ्खलाबद्ध इत्युच्यते ।। रसटी-११.७९;२
- एतन्मारणप्रकारस्तु रसार्णवे उक्तः ।। रसटी-११.७९;३

$

- टीका रससरत्नसमुच्चयबोधिनी:
- शृङ्खलाबन्धमाह वज्रादीति ।। रसबोध-११.७९;१

- वज्रादिनिहतः हीरकादिसहयोगेन मारितः सूतः तद्वा समः समपरिमितः अपरश्च हतः प्रकारान्तरेण मारितः सूतः शृङ्खलाबद्धसूतः उभयोर् मर्दनाद् इति शेषः ।। रसबोध-११.७९;२
- चित्रप्रभावाम् अलौकिकसामर्थ्यां वेगेन व्याप्तिं शृङ्खलाबन्धसूतस्य देहे इति शेषः ।। रसबोध-११.७९;३

### द्रुतिबन्ध

युक्तोऽपि बाह्यद्रुतिभिश्च सूतो बन्धंगतो वा भसितस्वरूपः ।
स राजिकापादमितो निहन्ति दुःसाध्यरोगान् द्रुतिबद्धनामा ।। रस-११.८० ।।

---

- टीका रससरत्नसमुच्चयटीका:
- अथ द्रुतिबद्धम् आह युक्तोऽपीति ।। रसटी-११.८०;१
- बीजानां जारणेन यदि रसो महाप्रभावो भवतीति तन्न चित्रम् ।। रसटी-११.८०;२
- रसोपरसधातूनां या बहिर्द्रुतयस् ताभिर् युक्तोऽपि ताभिर् जारितोऽपि पारदो बद्धमात्रो बन्धोत्तरं भस्मीकृतो वा द्रुतिबद्धनामा सर्षपचतुर्थांशमात्रया सेवितश्चेद्दुःसाध्यरोगान् निहन्ति ।। रसटी-११.८०;३

$

- टीका रससरत्नसमुच्चयबोधिनी:
- द्रुतिबन्धमाह युक्त इति ।। रसबोध-११.८०;१
- बाह्यद्रुतिभिः रसस्य द्रवत्वसम्पादकक्रियाविशेषैः युक्तः अपि बन्धं गतः बन्धनतां प्राप्तः वा अथवा भसितस्वरूपः भस्मीभूतः सूतः द्रुतिबद्धनामा ज्ञेयः ।। रसबोध-११.८०;२
- सः द्रुतिबद्धसूतः राजिका राई इति ख्यातः रक्तवर्णसर्षपविशेषः तस्याः पादमितः चतुर्थभागपरिमितः ।। रसबोध-११.८०;३

### बालबन्ध

समाभ्रजीर्णः शिवजस्तु बालः संसेवितो योगयुतो जवेन ।
रसायनो भाविगदापहश्च सोपद्रवारिष्टगदान्निहन्ति ।। रस-११.८१ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- बालाख्यबद्धं लक्षयति समेति ।। रसटी-११.८१;१
- अभ्रं कृष्णवज्राभ्रसत्त्वम् ।। रसटी-११.८१;२
- शिवजः पारदः ।। रसटी-११.८१;३
- समाभ्रजीर्णश्चतुःषष्टिद्वात्रिंशत्षोडशादिभागक्रमेण ।। रसटी-११.८१;४
- अस्योपयोगः पत्त्रलेपेऽपि बोध्यः ।। रसटी-११.८१;५

### कुमारबन्ध

हरोद्भवो यो द्विगुणाभ्रजीर्णः स स्यात्कुमारो मिततण्डुलोऽसौ ।
त्रिः सप्तरात्रैः खलु पापरोगसंघातघाती च रसायनं च ।। रस-११.८२ ।।

### तरुणबन्ध

चतुर्गुणव्योमकृताशनोऽसौ रसायनाग्र्यस् तरुणाभिधानः ।
स सप्तरात्रात् सकलामयघ्नो रसायनो वीर्यबलप्रदाता ।। रस-११.८३ ।।

### वृद्धबन्ध

यस्याभ्रकः षड्गुणितो हि जीर्णः प्राप्ताग्निसख्यः स हि वृद्धनामा ।
देहे च लोहे च नियोजनीयः शिवादृते कोऽस्य गुणान् प्रवक्ति ।। रस-११.८४ ।।

### मूर्तिबन्ध

यो दिव्यमूलिकाभिश्च कृतोऽत्यग्निसहो रसः ।
विनाभ्रजारणात्स स्यान्मूर्तिबन्धो महारसः ।। रस-११.८५ ।।

अयं हि जार्यमाणस्तु नाग्निना क्षीयते रसः ।
योजितः सर्वयोगेषु निरौपम्यफलप्रदः ।। रस-११.८६ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- मूर्तिबद्धं लक्षयति य इति ।। रसटी-११.८६;१
- दिव्यमूलिकाश्चतुःषष्टिमूलिकाः प्रागुक्तास्ताभिस्तद्रसेन मर्दनस्वेदनादिना पक्षच्छेदात् ।। रसटी-११.८६;२
- अभ्रजारणाद् विनाप्यत्यग्निसहो बद्धः कृतो द्रव्यान्तरानभिव्याप्त्या केवलं देहेनैव बद्धो मूर्तिबद्ध इत्युच्यते ।। रसटी-११.८६;३
- तथा वैक्रान्तवज्रसंस्पर्शात् ।। रसटी-११.८६;४
- तेन चूर्णीकृतेन सह मर्दनादपि रसो बद्धो भवतीति सोऽपि मूर्तिबद्ध इत्युच्यते ।। रसटी-११.८६;५
- एवं च मूर्तिबन्धो द्विविधः सम्भवति ।। रसटी-११.८६;६

### जलबन्ध

शिलातोयमुखैस्तोयैर् बद्धोऽसौ जलबन्धवान् ।
स जरारोगमृत्युघ्नः कल्पोक्तफलदायकः ।। रस-११.८७ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- जलबन्धं लक्षयति ।। रसटी-११.८७;१
- शिलातोयमुखैः शिलातोयचन्द्रतोयप्रमुखैर् जलैः सह मर्दनादिना बद्धः पारदो जलबद्ध इति कीर्तितः ।। रसटी-११.८७;२
- कल्पोक्तेति ।। रसटी-११.८७;३

- पारदकल्पोक्तफलेत्यर्थः ।। रसटी-११.८७;४
- एतस्य जलस्य विस्तरो रसार्णवे स्पष्टीकृतः ।। रसटी-११.८७;५
- क्षिप्तं जले भवेत् काष्ठं शिलाभूतं च दृश्यते ।
- बहिरन्तश्च देवेशि वेधकं तत् प्रकीर्तितम् ।। रसटी-११.८७;६
- हिङ्गुलं हरितालं च गन्धकं च मनःशिला ।
- एषां गन्धापहारं यत् कुरुते तच्च वेधकम् ।। रसटी-११.८७;७

## अग्निबन्ध

केवलो योगेषु वा ध्मातः स्याद्गुटिकाकृतिः ।
अक्षीणश्चाग्निबद्धोऽसौ खेचरत्वादिकृत् स हि ।। रस-११.८८ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- अग्निबन्धमाह केवल इति ।। रसबोध-११.८८;१
- केवलः द्रव्यान्तरासंयुक्त इत्यर्थः ।। रसबोध-११.८८;२
- योगयुक्तः द्रव्यान्तरसंयुक्तः ।। रसबोध-११.८८;३
- ध्मातः अग्नौ संतप्तः ।। रसबोध-११.८८;४
- अक्षीणः अग्नितापेऽपि यथामात्रायां स्थितः न तु किंचिद् अप्यूनः ।। रसबोध-११.८८;५
- खेचरत्वादिकृत् मुखे धृतः नभोगतिसामर्थ्यप्रदः इत्यर्थः ।। रसबोध-११.८८;६
- उद्देशग्रन्थे जलबन्धोऽग्निबन्धश्च सुसंस्कृतकृताभिधः इत्यनेन अग्निबन्धानन्तरं महाबन्धाच्च प्राक् सुसंस्कृतकृताख्यबन्धान्तरस्य समुल्लेखो विद्यते विवरणग्रन्थे तु तदुल्लेखादर्शनात् बन्धः सः लिपिकरप्रमादात् प्रमादान्तराद्वा अदर्शनतां गत इति मन्ये ।। रसबोध-११.८८;७
- किंच सुसंस्कृतकृताभिधः इत्यस्य अग्निबन्धस्य विशेषणत्वमपि न युज्यते तथात्वे बन्धस्य चतुर्विंशतिसंख्यत्वात् पञ्चविंशतिसंख्याकान् रसबन्धान् प्रचक्ष्महे इति प्रतिज्ञाहान्यापत्तेरिति ।। रसबोध-११.८८;८

$

- टीका रससरत्नसमुच्चयटीका:
- अथाग्निबद्धं पारदमाह केवल इति ।। रसटी-११.८८;१
- आदौ षड्गुणेनाभ्रकजारणेनाग्निसहः पारदो मणिजीर्णः पातनायन्त्रेणोत्थापितः स द्रुतो भवति ।। रसटी-११.८८;२
- स च केवलस्तीक्ष्णलोहयुक्तो वा ध्मातः सन् गुटिकाकृतिश्चाग्नावक्षयश्च भवति ।। रसटी-११.८८;३
- अत एवायम् अग्निबद्ध इत्युच्यते ।। रसटी-११.८८;४
- अयं मुखे धृतश्चेत् पुरुषस्याकाशगामित्वशस्त्राग्न्यभेद्यत्वसायुज्यसारूप्यादिमुक्तिकरो भवेत् ।। रसटी-११.८८;५

## मूर्छन

विष्णुक्रान्ताशशिलताकुम्भीकनकमूलकैः ।
विशालानागिनीकन्दव्याघ्रपादीकुरुण्टकैः ।। रस-११.८९ ।।

वृश्चिकालीभशुण्डीभ्यां हंसपादा सहासुरैः ।
अप्रसूतगवां मूत्रैः पिष्टं वा कुलके पचेत् ।। रस-११.९० ।।

पक्वमेवं मृतैर् लोहैर्मर्दितं विपचेद् रसम् ।
यन्त्रेषु मूर्छा सूतानामेष कल्पः समासतः ।। रस-११.९१ ।।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- निबिडः नोन्नतानतः समानसर्वावयवः इत्यर्थः ।। रसबोध-११.९१;१

**महाबन्ध**

हेम्ना वा रजतेन वा सहचरो ध्मातो व्रजत्येकताम् अक्षीणो निबिडो गुरुश्च गुटिकाकारोऽतिदीर्घोज्ज्वलः ।

---

- टीका रससरत्नसमुच्चयबोधिनी:
- निर्बन्धः यथायथम् असंपादितबन्धनक्रियः चेत् क्षणात् द्रवति अग्नौ इति शेषः ।। रसबोध-११.९२कख;१

चूर्णत्वं पटुवत् प्रयाति निहतो घृष्टो न मुञ्चेन्मलं निर्गन्धो द्रवति क्षणात् स हि महाबन्धाभिधानो रसः ।। रस-११.९२ ।।

---

- टीका रससरत्नसमुच्चयटीका:
- महाबन्धमाह हेम्ना वेति ।। रसटी-११.९२;१
- अत्र हेम चतुर्थांशम् अर्धांशं वा ग्राह्यम् ।। रसटी-११.९२;२
- रजतमपि तथैव ।। रसटी-११.९२;३
- बन्धौषधिलिप्तवज्रमूषामध्ये तयोर् अन्यतरेण युक्तो ध्मातोऽग्निबद्ध एव पारदो वक्ष्यमाणलक्षणविशिष्टः सुसंस्कृतकृतसंज्ञां महाबन्धसंज्ञां च लभते ।। रसटी-११.९२;४
- तान्येव लक्षणान्य् आह ध्मातो व्रजत्येकताम् इत्यादिना ।। रसटी-११.९२;५
- पटुवत् ।। रसटी-११.९२;६
- सैन्धवतुल्यं चूर्णत्वं याति ।। रसटी-११.९२;७
- निहतः संद्रवति ।। रसटी-११.९२;८
- अग्नियोगादिति शेषः ।। रसटी-११.९२;९

**जलूकाबन्ध**

सूते गर्भनियोजितार्धकनके पादांशनागेऽथवा पञ्चाङ्गुष्ठकशाल्मलीकृतमदाश्लेष्मातबीजैस् तथा ।
तद्वत् तेजिनीकोलकाख्यफलजैश् चूर्णं तिलं पत्त्रकं तप्ते खल्लतले निधाय मृदिते जाता जलूका वरा ।। रस-११.९३ ।।

### जलूकाबन्ध

सैषा स्यात्कपिकच्छूरोमपटले चन्द्रावतीतैलके चन्द्रे टङ्कणकामपिप्पलीजले स्विन्ना भवेत् तेजिनी ।
तप्ते खल्लतले विमर्द्य विधिवद्यत्नाद्वटी या कृता सा स्त्रीणां मददर्पनाशनकरी ख्याता जलूका वरा ।। रस-११.९४ ।।

बाल्ये चाष्टाङ्गुला योज्या यौवने च दशाङ्गुला ।
द्वादशैव प्रगल्भानां जलौका त्रिविधा मता ।। रस-११.९५ ।।

धृत्वा सूतमुखे पात्रं मेषीक्षीरं प्रदापयेत् ।
स्थापयेदातपे तीव्रे वासराण्येकविंशतिः ।। रस-११.९६ ।।

द्वितीयात्र मया प्रोक्ता जलौका द्रावणे हिता ।
पुरुषाणां स्थिता मूर्ध्नि द्रावयेद्बीजम् अद्भुतम् ।। रस-११.९७ ।।

### जलूकाबन्ध

मुनिपत्त्ररसं चैव शाल्मलीवृन्तवारि च ।
जातीमूलस्य तोयं च शिंशपातोयसंयुतम् ।। रस-११.९८ ।।

श्लेष्मातकफलं चैव त्रिफलाचूर्णम् एव च ।
कोकिलाक्षस्य चूर्णं च पारदं मर्दयेद् बुधः ।। रस-११.९९ ।।

जलूका जायते दिव्या रामाजनमनोहरा ।
सा योज्या कामकाले तु कामयेत्कामिनी स्वयम् ।। रस-११.१०० ।।

### जलूकाबन्ध

त्रिफलाभृङ्गमहौषधमधुसर्पिश्छागदुग्धगोमूत्रे ।
नागं सप्तनिषिक्तं समरसजारितं जलूका स्यात् ।। रस-११.१०१ ।।

### जलूकाबन्ध

भानुस्वरदिनसंख्याप्रमाणसूतं गृहीतदीनारम् ।
अङ्कोलराजवृक्षककन्यारसतश्च शोधनं कुर्यात् ।। रस-११.१०२ ।।

शशिरेखावरवर्णिनीसकोकिलाक्षापामार्गकनकानाम् ।
चूर्णैः सहैकविंशतिदिनानि संमर्दयेत् सम्यक् ।। रस-११.१०३ ।।

निशायाः काञ्जिकं यूषं दत्त्वा योनौ प्रवेशयेत् ।
बालमध्यमवृद्धासु योज्या विज्ञाय तत्क्रमात् ।
नीरसानामपि नृणां योषा स्यात्संगमोत्सुका ।। रस-११.१०४ ।।

### जलूकबन्ध

रसभागं चतुष्कं च वङ्गभागं च पञ्चमम् ।
सुरसारसमं युक्तं टङ्कणेन समन्वितम् ।। रस-११.१०५ ।।

त्रिदिनं मर्दयित्वा च गोलकं तं रसोद्भवम् ।
लिङ्गाग्रे योनिनिक्षिप्तं यावद् आयुर्वशंकरम् ।। रस-११.१०६ ।।

### जलूकबन्ध

कर्पूरसूरणसुभृङ्गसुमेघनादैर् नागं निषिच्य तु मिथो वलयेद् रसेन ।
लिङ्गस्थितेन वलयेन नितम्बिनीनां स्वामी भवत्यनुदिनं स तु जीवहेतुः ।। रस-११.१०७ ।।

### जलूकबन्ध

टङ्कणपिप्पलिकाभिः सूरणकर्पूरमातुलुङ्गरसैः ।
कृत्वा स्वलिङ्गलेपं योनिं विद्रावयेत् स्त्रीणाम् ।। रस-११.१०८ ।।

### मदनवलय

अग्न्यावर्तितनागे हरबीजं निक्षिपेत्ततो द्विगुणम् ।
मुनिकनकनागसर्पैर् दन्त्याथ सिञ्च्याच्च तन्मध्यम् ।। रस-११.१०९ ।।

तक्रेण मर्दयित्वा गणेन मदनवलयं कुर्यात् ।
रतिसमये वनितानां रतिगर्वविनाशनं कुरुते ।। रस-११.११० ।।

### मदनवलय

व्याघ्रीबृहतीफलरससूरणकन्दं च चणकपत्त्राम्लम् ।
कपिकच्छुवज्रवल्लीपिप्पलिकाम्लिकाचूर्णम् ।। रस-११.१११ ।।

अग्न्यावर्तितनागं नववारं मर्दयेद्धिमैर्द्रव्यैः ।
स्मरवलयं कृत्वैतद्वनितानां द्रावणं कुरुते ।। रस-११.११२ ।।

### मेर्चुर्य् > मारण

पलाशबीजकं रक्तजम्बीराम्लेन सूतकम् ।
सजीवं मर्दितं यन्त्रे पाचितं म्रियते ध्रुवम् ।। रस-११.११३ ।।

### मेर्चुर्य् > मारण

खरमञ्जरि बीजान्वितपुष्करबीजैः सुचूर्णितैः कल्कम् ।
कृत्वा सूतं पुटयेद् दृढमूषायां भवेद्भस्म ।। रस-११.११४ ।।

### मेर्चुर्य् > मारण

काकोदुम्बरिकाया दुग्धेन सुभावितो हिङ्गुः ।
मर्दनपुटनविधानात्सूतं भस्मीकरोत्येव ।। रस-११.११५ ।।

### मेर्चुर्य् > मारण

देवदालीं हरिक्रान्तामारनालेन पेषयेत् ।
तदद्रवैः सप्तधा सूतं कुर्यान्मर्दितमूर्छितम् ।। रस-११.११६ ।।

तत्सूतं खर्परे दद्याद्दत्वा दत्वा तु तदद्रवम् ।
चुल्ल्योपरि पचेच् चाह्नि भस्म स्याल्लवणोपमम् ।। रस-११.११७ ।।

### मेर्चुर्य् > मारण

अपामार्गस्य बीजानि तथैरण्डस्य चूर्णयेत् ।
तच्चूर्णं पारदे देयं मूषायाम् अधरोत्तरम् ।
रुद्ध्वा लघुपुटैः पच्याच् चतुर्भिर् भस्मतां नयेत् ।। रस-११.११८ ।।

### मेर्चुर्य् > मारण

कटुतुम्ब्युद्भवे कन्दे गर्भे नारीपयःप्लुते ।
सप्तधा स्वेदितः सूतो म्रियते गोमयाग्निना ।। रस-११.११९ ।।

### मेर्चुर्य् > मारण

अङ्कोलस्य शिफावारिपिष्टं खल्ले विमर्दयेत् ।
सूतं गन्धकसंयुक्तं दिनान्ते तं निरोधयेत् ।
पुटयेद्भूधरे यन्त्रे दिनान्ते स मृतो भवेत् ।। रस-११.१२० ।।

### मेर्चुर्य् > मारण

वटक्षीरेण सूताभ्रौ मर्दयेत्प्रहरत्रयम् ।
पाचयेत्तेन काष्ठेन भस्मीभवति तद्रसः ।। रस-११.१२१ ।।

### रस > भस्म > सेवन

अथातुरो रसाचार्यं साक्षाद्देवं महेश्वरम् ।
साधितं च रसं शृङ्गदन्तवेण्वादिधारितम् ।। रस-११.१२२ ।।

अर्चयित्वा यथाशक्ति देवगोब्राह्मणानपि ।
पर्णखण्डे धृतं सूतं जग्ध्वा स्यादनुपानतः ।। रस-११.१२३ ।।

घृतसैन्धवधान्यकजीरकार्द्रकसंस्कृतम् ।

तण्डुलीयकधान्यकपटोलालम्बुषादिकम् ।। रस-११.१२४ ।।

गोजीर्णशाल्यन्नं गव्यं क्षीरं घृतं दधि ।
हंसोदकं मुद्गरसः पथ्यवर्गः समासतः ।। रस-११.१२५ ।।

बृहती बिल्वकूष्माण्डं वेत्राग्रं कारवेल्लकम् ।
माषं मसूरं निष्पावं कुलत्थं सर्षपं तिलम् ।। रस-११.१२६ ।।

लङ्घनोद्वर्तनस्नानताम्रसुरासवान् ।
आनूपमांसं धान्याम्लं भोजनं कदलीदले ।
कांस्ये च गुरुविष्टम्भि तीक्ष्णोष्णं च भृशं त्यजेत् ।। रस-११.१२७ ।।

## ककारादिगण

कण्टारीफलकाञ्जिकं च कमठस् तैलं तथा राजिकाम् ।
निम्बूकं कतकं कलिङ्गकफलं कूष्माण्डकं कर्कटी ।
कारी कुक्कुटकारवेल्लकफलं कर्कोटिकायाः फलम् ।
वृन्ताकं च कपित्थकं खलु गणः प्रोक्तः ककारादिकः ।। रस-११.१२८ ।।

देवीशास्त्रोदितः सोऽयं ककारादिगणो मतः ।

## ककारादिगण

शास्त्रान्तरविनिर्दिष्टः कथ्यतेऽन्यप्रकारतः ।। रस-११.१२९ ।।

कङ्गुः कन्दुककोलकुक्कुटकलक्रोडाः कुलत्थास्तथा ।
कण्टारी कटुतैलकृष्णगलकः कूर्मः कलायः कणा ।
कर्कारुश्च कठिल्लकं च कतकं कर्कोटकं कर्कटी काली काञ्जिकमेषकादिकगणः श्रीकृष्णदेवोदितः ।। रस-११.१३० ।।

यस्मिन्रसे च कण्ठोक्त्या ककारादिर्निषेधितः ।
तत्र तत्र निषेद्धव्यं तदौचित्यमतोऽन्यतः ।। रस-११.१३१ ।।

उद्गारे सति दध्यन्नं कृष्णमीनं सजीरकम् ।
अभ्यङ्गम् अनिलक्षोभे तैलैर् नारायणादिभिः ।। रस-११.१३२ ।।

अरतौ शीततोयेन मस्तकोपरि सेचनम् ।
तृष्णायां नारिकेलाम्बु मुद्गं सशर्करम् ।। रस-११.१३३ ।।

द्राक्षादाडिमखर्जूरकदलीनां फलं भजेत् ।
रसवीर्यविवृद्ध्यर्थं दधिक्षीरेक्षुशर्कराः ।
शीतोपचारम् अन्यं च रसत्यागविधौ पुनः ।। रस-११.१३४ ।।

भक्षयेद् बृहतीं बिल्वं सकृत्साधारणो विधिः ।। रस-११.१३५ ।।

# रसरत्नसमुच्चय : अध्याय 12

https://sa.wikisource.org/s/80v

ज्वरस्य रक्तपित्तस्य कासस्य श्वासहिध्मयोः ।
वैस्वर्यस्य क्षयस्यापि तथारोचप्रसेकयोः ।। रस-१२.१ ।।

छर्दिहृद्रोगयोश् चैव तृष्णामयोद्भवार्शसाम् ।
उदावर्तातिसाराणां ग्रहण्यर्तिप्रवाहिणोः ।। रस-१२.२ ।।

विसूच्या वह्निमान्धस्य मूत्रकृच्छ्राश्मरुजाम् ।
मेहस्य सोमरोगस्य पिटिकानां च विद्रधेः ।। रस-१२.३ ।।

वृद्धिगुल्मादिरोगाणां शूलानामुदरस्य च ।
पाण्डुशोफविसर्पाणां कुष्ठश्वित्रनभस्वताम् ।। रस-१२.४ ।।

वातास्रस्यावृतानां च वन्ध्यानां गर्भिणीरुजाम् ।
सूतिकाबालरोगाणाम् उन्मादेऽपस्मृताव् अपि ।। रस-१२.५ ।।

नेत्ररोगे कर्णरोगे नासारोगास्यरोगयोः ।
शिरःसंजातरोगेषु व्रणे भङ्गे भगंदरे ।। रस-१२.६ ।।

ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे विषेषु च ।
जरायास्त्वनपत्यानां बीजपोषणहेतवे ।। रस-१२.७ ।।

परिपाट्यानया सर्वं रोगाणां हि चिकित्सनम् ।
रसलोहविषैर् अत्र योगैर्वक्ष्ये यथागमम् ।। रस-१२.८ ।।

रोमाञ्चकम्पौ वदने मधुत्वमुज्जृम्भणं मस्तकतोददाहौ ।
वातज्वरस्योक्तम् इदं हि लक्ष्म भुक्तोत्तरं स्याद्यदि शश्वदेव ।। रस-१२.९ ।।

विरेकशोषास्यकटुत्वतीव्रतापप्रलापभ्रममूर्छनानि ।
एतानि पित्तज्वरलक्षणानि वमिः सतृष्णाङ्गविदाहिता च ।। रस-१२.१० ।।

कासश्वासौ मुखे जाड्यं माधुर्यं बहुनिद्रता ।
प्रस्वेदः स्वल्पदाहश्च श्लेष्मजज्वरलक्षणम् ।। रस-१२.११ ।।

मिश्रितं लक्षणं यत्तु द्वयोस् त्रिषु भवेच्च तत् ।। रस-१२.१२ ।।

विमर्दिताभ्यां रसगन्धकाभ्यां नीरेण कुर्यादिह गोलकं तम् ।
भाण्डे नवीने विनिवेश्य पश्चात्तद्गोलकस्योपरि ताम्रपात्रम् ।। रस-१२.१३ ।।

सार्धं मुहूर्तं विनिरुध्य धीमान् उद्दीपयेद् दीप्तकृशानुनास्य ।
अधस्ततः सिध्यति पर्पटीयं नवज्वरारण्यकृशानुमेघः ।। रस-१२.१४ ।।

विलिप्य पूर्वं रसनां च तालुदेशं च सिन्धूद्भवजीरकार्द्रैः ।
वल्लोन्मितां चार्द्रकतोयमिश्राम् एनां नियोज्य स्थगयेत् पटेन ।। रस-१२.१५ ।।

घर्मोद्गमो यावदतः परं च तक्रौदनं पथ्यमिह प्रयोज्यम् ।

कुर्याद्दिनानां त्रितयं यदीत्थं ज्वरस्य शङ्कापि तदा भवेत्किम् ।। रस-१२.१६ ।।

सूतार्कगन्धचपलाजयपालतिक्तापथ्यात्रिवृच्च विषतिन्दुकजान् समांशान् ।
संभाव्य वज्रिपयसा मधुना त्रिवल्लस् त्रैलोक्यडम्बररसोऽभिनवज्वरघ्नः ।। रस-१२.१७ ।।

पादांशकं साररविः समांशगन्धो विपक्वः स्वकषायपिष्टः ।
रसः क्रमान्माषमितोऽनिलादिज्वरेषु नाम्ना किल मेघनादः ।। रस-१२.१८ ।।

दरदजलदयुक्तं शुद्धसूतं च गन्धं प्रहरमथ सुपिष्टं वल्लयुग्मं च दद्यात् ।
ज्वरगजहरिसंज्ञं शृङ्गवेरोदकेन प्रथमजनितदाही क्षीरभक्तेन भोज्यः ।। रस-१२.१९ ।।

संतप्तसीसभागं च पारदं गन्धकं कणाम् ।
समभागं पृथक् तत्र मेलयेच्च यथाविधि ।। रस-१२.२० ।।

जम्बीरस्य रसे सर्वं मर्दयेच्च दिनत्रयम् ।
मेघनादकुमार्योश्च रसे चापि दिनत्रयम् ।। रस-१२.२१ ।।

दिनद्वयमजामूत्रे गवां मूत्रे दिनत्रयम् ।
भावयेच्च यथायोग्यं तस्मिन्नेतानि दापयेत् ।। रस-१२.२२ ।।

सैन्धवं चित्रकं भागं सौवर्चललवणं तथा ।
तेन सम्मेलनं कृत्वा भावयेच्च पुनः पुनः ।। रस-१२.२३ ।।

अनेन विधिना सम्यक् सिद्धो भवति तद्रसः ।
शर्कराघृतसंयुक्तं दद्याद्वल्लत्रयं रसम् ।। रस-१२.२४ ।।

गोधूमस्यौदनं पथ्यं माषसूपं च वास्तुकम् ।
धात्रीफलसमायुक्तं सर्वज्वरविनाशनम् ।
दीपिकारस इत्येष तन्त्रज्ञैः परिकीर्तितः ।। रस-१२.२५ ।।

पारदं रसकं तालं तुत्थं गन्धकटङ्कणम् ।
सर्वमेतत्समं शुद्धं कारवल्ल्या द्रवैर्दिनम् ।। रस-१२.२६ ।।

मर्दयेत्तेन कल्केन ताम्रपात्रोदरं लिम्पेत् ।
अङ्गुलार्धार्धमानेन तं पचेत्सिकताह्वये ।। रस-१२.२७ ।।

यन्त्रे यावत्स्फुटन्त्येवं व्रीहयस्तस्य पृष्ठतः ।
ततः सुशीतलं ग्राह्यं ताम्रपात्रोदराद् भिषक् ।। रस-१२.२८ ।।

शीतभञ्जी रसो नाम चूर्णयेन्मरिचैः समम् ।
माषैकं पर्णखण्डेन भक्षयेन्नाशयेज्ज्वरम् ।
त्रिदिनैर् विषमं तीव्रमेकद्वित्रिचतुर्थकम् ।। रस-१२.२९ ।।

सूततालशिलास्तुल्या मर्दयेत्कर्कटीरसे ।
ताम्रपात्रे विनिक्षिप्य तत्कल्कं कज्जलीकृतम् ।। रस-१२.३० ।।

विपचेद्वालुकायन्त्रे यथोक्तविधिना ततः ।
दद्यान्मरिचचूर्णेन माषमात्रं भिषग्वरः ।। रस-१२.३१ ।।

प्रपिबेदुष्णतोयस्य चुलुकं शीतकज्वरे ।
शीतभञ्जी रसः सोऽयं शीतज्वरनिवारणः ।। रस-१२.३२ ।।

कूष्माण्डचूर्णतिलजैः प्रविशुद्धतालं गाढं विमर्द्य सुषवीसलिलेन तुल्यम् ।
सूतेन हिङ्गुलभुवा सिकताख्ययन्त्रे गोलं विधाय परिवृत्तकपालमध्ये ।। रस-१२.३३ ।।

पत्त्रेण तं दिनपतेश्च पिधाय रुद्ध्वा संधिं तयोर्गुडसुधाखटिकाशिवाभिः ।
वह्नौ पचेन्मृदुनि पात्रशिरःस्थशालीवैवर्ण्यमात्रम् अवधिं प्रविधाय धीमान् ।। रस-१२.३४ ।।

वल्लं ततः सुरसमिश्रममुष्य दद्यात् सर्पिः सिताकणपयोमधु चानुपेयम् ।
जेतुं ज्वरान् प्रविषमान् इह वान्तिशान्त्यै मौलौ सुशीतलजलस्य ददीत धाराम् ।। रस-१२.३५ ।।

अथामयान्तं रसराजमौलिभूषामणिं तं मृतजीवनाख्यम् ।
सुधारसेनेव रसेन येन संजीवनं स्यात् सहसातुराणाम् ।। रस-१२.३६ ।।

रसहिङ्गुलजेपालैर् वृद्ध्या दन्त्यम्बुमर्दितैः ।
दिनार्धेन ज्वरं हन्याद्गुञ्जैकं सितया सह ।। रस-१२.३७ ।।

शुद्धं सूतं विषं गन्धं धूर्तबीजं त्रिभिः समम् ।
चतुर्भिश्च समं व्योषं चूर्णीकृत्य निधापयेत् ।। रस-१२.३८ ।।

दन्तभाण्डेऽथ वा शार्ङ्गे काष्ठे नैव कदाचन ।
वातश्लेष्मज्वरे देयं द्वंद्वजे वा त्रिदोषजे ।। रस-१२.३९ ।।

रसेन शृङ्गवेरस्य जम्बीरस्याथवा पुनः ।
गुञ्जाद्वयं च जीर्णेऽस्मिन्दधिभक्तं प्रयोजयेत् ।। रस-१२.४० ।।

एकद्वित्रिदिनैर्हन्याज् ज्वरान् दोषक्रमेण तु ।
महाज्वराङ्कुशो नाम रसोऽयं शम्भुनोदितः ।। रस-१२.४१ ।।

तालं ताम्ररजो रसश्च गगनं गन्धश्च नेपालकं दीनारप्रमितं तदर्धमुदितं टङ्कं शिलामाक्षिकम् ।
दीनारद्वितयं विषस्य शिखिनः पिष्ट्वा रसैः पाचितो यश्चिन्तामणिवज्ज्वरौघविजयी नाम्ना तु मृत्युंजयः ।। रस-१२.४२ ।।

तालं ताम्रम् अयोरजश्च चपला तुत्थाभ्रकं कान्तकं नागं स्याच्च समांशकं सुमृदितं मूलं च पौनर्नवम् ।
भृङ्गीकासहरीपुनर्नवामहामन्दारपत्त्रोद्भवैः कल्कं वालुकयन्त्रपाचितम् इदं सर्वज्वरस्यान्तकृत् ।। रस-१२.४३ ।।

तुत्थेन तुल्यः शिवजश्च गन्धो जम्बीरनीरेण विमर्दनीयः ।
दिनत्रयं मेलय तेन तुल्यं व्योषं ततः सिध्यति चन्द्रसूर्यः ।। रस-१२.४४ ।।

वल्लो विजेतुं विषमावलम्बि दलेन देयो भुजगाख्यवल्ल्याः ।
दुग्धं हितं स्यादिह शृङ्गवेररसेन शैत्येषु निषेवणीयः ।। रस-१२.४५ ।।

तक्रं सगर्भाज्वरशूलयोस्तु द्राक्षाम्बुना पथ्यमनन्तरोक्तम् ।
रोधं वरायाः सलिलेन शूलं जम्बीरनीरेण वराजलेन ।। रस-१२.४६ ।।

अपस्मृताव् अत्र नियोजनीयमभ्यञ्जनं बिम्बपयोभवाभ्याम् ।
घृतौदनं स्यादिह भोजनाय जम्बीरनीरेण निहन्ति गुल्मम् ।। रस-१२.४७ ।।

हिङ्ग्वम्लिकानिम्बुरसेन देयं प्लीहोदरे स्यादिह तक्रभक्तः ।

स्तम्भार्थमस्मिन्ससितं पयः स्याद् गुडो नियोज्यो वमनप्रशान्त्यै ।। रस-१२.४८ ।।

अशीतिर् यस्य वर्षाणि वसुवर्षाणि यस्य वा ।
विषं तस्य न दातव्यं दत्तं चेद् दोषकारकम् ।। रस-१२.४९ ।।

मेघपारदगन्धाश्मविषव्योषपटूनि च ।
जीरकद्वयमेतानि समभागानि कारयेत् ।। रस-१२.५० ।।

सिन्दुवाररसेनापि लशुनस्य रसेन च ।
अपामार्गरसेनापि सप्तरात्रं विमर्दयेत् ।। रस-१२.५१ ।।

तत्पक्वं वालुकायन्त्रे गुञ्जामात्रं प्रयोजयेत् ।
सनागवल्लीमरिचं ततः शीताम्बु पाययेत् ।। रस-१२.५२ ।।

उमाप्रसादनो नाम रसः शीतज्वरापहः ।
चातुर्थिकं त्रिरात्रं वा नाशयेत् किमुतापरान् ।। रस-१२.५३ ।।

टङ्कणं रसगन्धौ च समभागान्प्रकल्पयेत् ।
नेपालं द्विगुणं दत्त्वा मर्दयेत् खल्लमध्यतः ।। रस-१२.५४ ।।

श्लक्ष्णतां याति तद्यावत्तावत्तन्मर्दयेच्छनैः ।
सैन्धवं मरिचं शङ्खं चिञ्चाक्षारं समाक्षिकम् ।। रस-१२.५५ ।।

तत्तुल्यम् एतत् कृत्वाथ निम्बूतोयेन मर्दयेत् ।
चणप्रमाणवटिकाम् भक्षयेद्दिवसत्रयम् ।। रस-१२.५६ ।।

ऐकाहिकं द्व्याहिकं च त्र्याहिकं च चतुर्थकम् ।
सर्वज्वरविनाशाय ज्वराङ्कुश इति स्मृतः ।। रस-१२.५७ ।।

अभ्रकं गन्धकं सूतं तोलकैकं पृथक्पृथक् ।
गृहीत्वा विषतोलार्धं तोलार्धं तिन्तिडीफलम् ।। रस-१२.५८ ।।

एतत्सर्वं समं कृत्वा मर्दयेत् खल्लमध्यतः ।
श्लक्ष्णतां याति तद्यावत् तावत् संमर्दयेच्छनैः ।। रस-१२.५९ ।।

विस्तारे परिणाहे च गर्तां कृत्वा षडङ्गुलाम् ।
फणिवल्लीदलान्यन्तर्गर्तायां प्रक्षिपेन्नरः ।। रस-१२.६० ।।

पर्णेषु सूतकल्कं तं गर्तायां स्थापयेद् दृढम् ।
कल्काद् उपरि तत्पर्णैर् गर्तावक्त्रं प्रपूरयेत् ।। रस-१२.६१ ।।

गर्तायां तु ततो देयं पुटमारण्यकोत्पलैः ।
स्वाङ्गशीतलतां ज्ञात्वा समाकर्षेत्ततः परम् ।। रस-१२.६२ ।।

सूतलिप्तदलैः सार्धं कल्कं खल्ले विमर्दयेत् ।
तोलार्धममृतं क्षिप्त्वा तोलार्धं तिन्तिडीफलम् ।। रस-१२.६३ ।।

स्थापयेत्खल्लितं कल्कं योजयेद् गुञ्जमात्रया ।
शृङ्गवेराम्भसा युक्तं तीक्ष्णचित्रकसैन्धवैः ।। रस-१२.६४ ।।

संनिपाते तथा वाते त्रिदोषे विषमज्वरे ।
अग्निमान्द्ये ग्रहिण्यां च तथा देयोऽतिसारिणि ।। रस-१२.६५ ।।

भोजनं दधिभक्तं च रसेऽस्मिन् संप्रयोजयेत् ।
व्याध्यादिकं यथा कुर्यादुदकं ढालयेत् ततः ।। रस-१२.६६ ।।

एष योगवरः श्रीमान्प्राणिनां प्राणदायकः ।
चिन्तामणिरितिख्यातो रसः सर्वाङ्गसुन्दरः ।। रस-१२.६७ ।।

सूतेन्द्रं परिमर्द्य पञ्चपटुभिः क्षारैस् त्रिभिस् तं ततः पिण्डे हिङ्गुमहौषधासुरीमये संस्वेद्य धान्योदके ।
निर्गुण्ड्यम्बुहुताशमन्थतिलपर्ण्युन्मत्तभृङ्गार्द्रकं कामातागिरिकर्णिकाप्लवदलापञ्चाङ्गुलोत्थैर् जलैः ।। रस-१२.६८ ।।

सूतेन्द्रेण समैर् विमर्द्य सहजैः पित्तैस्ततो भावयेद् दंष्ट्रिच्छागलुलायमत्स्यशिखिनां सा संनिपाताञ्जयेत् ।
विख्याता भुवि लोकनाथगुटिका मारीचमात्रा हिता स्यादस्याः सहितं दधीक्षुशकलं वीर्यं भवेच्छीतलम् ।। रस-१२.६९ ।।

वज्रवैक्रान्तयोर् भस्म प्रत्येकं निष्कसम्मितम् ।
शृङ्गीविषं द्विनिष्कं च त्रिनिष्कं चूलिकापटु ।। रस-१२.७० ।।

पञ्चनिष्कोऽग्निजारश्च सर्वमेकत्र मेलयेत् ।
तावद्भस्म रसं यावन्मर्दयेद् दिवसत्रयम् ।। रस-१२.७१ ।।

शार्ङ्गष्टादिकवर्गस्य क्षारनीरेण भावयेत् ।
त्रयोविंशतिवाराणि विमर्द्य च विशोष्य च ।। रस-१२.७२ ।।

ततो विमर्द्य दिवसं क्षिपेद् दन्तकरण्डके ।
मृतसंजीवनाख्योऽयं सूचिकाभरणो रसः ।। रस-१२.७३ ।।

संनिपातेन तीव्रेण मुमुर्षोर् भूगतस्य च ।
तालुनि वृश्चयित्वाथ रसमेनं विनिक्षिपेत् ।। रस-१२.७४ ।।

सूच्यातिसूक्ष्मया तोयभिन्नयातिप्रयत्नतः ।
ततस्तैलेन तं लिस्वा निर्वाते संनिवेशयेत् ।। रस-१२.७५ ।।

ततोऽर्धप्रहराद् ऊर्ध्वं मुक्तमूत्रपुरीषकम् ।
लब्धसंज्ञं प्रतापाढ्यं दोलयन्तं शिरो मुहुः ।। रस-१२.७६ ।।

आयुष्मन्तं विजानीयादन्यथा चान्यथा खलु ।
ततः शीताम्बुसम्पूर्णे कटाहे तं निवेशयेत् ।। रस-१२.७७ ।।

तत्र चोत्क्वथितं तोयम् अपनीयापरं क्षिपेत् ।
याचमानम् अमुं पश्चात् पाययेत् ससितं पयः ।। रस-१२.७८ ।।

दधि वा सितयोपेतं नारिकेलजलं तथा ।
रम्भाफलानि दद्याच्च म्रियते सोऽन्यथा खलु ।। रस-१२.७९ ।।

लब्धसंज्ञं प्रभाषन्तं याचमानं फलादिकम् ।
तस्मादाकृष्य तैलाक्तं तैलं पिष्ट्वापनीय च ।। रस-१२.८० ।।

लेपयेद्गन्धकर्पूरैर् आ पादतलमस्तकम् ।
इत्यादिशिशिरैर् द्रव्यैः सप्तरात्रम् उपाचरेत् ।। रस-१२.८१ ।।

कर्णाक्षिनासिकावक्त्रे क्षिपेत् पोताश्रयं मुहुः ।
अष्टमेऽहनि सम्प्राप्ते दर्दुरीमूलजं रसम् ।। रस-१२.८२ ।।

ससितं पाययेद् वेगम् अवतारयितुं रसम् ।
रसेऽवतारिते पश्चाद् यथेष्टं भोजनं दधि ।। रस-१२.८३ ।।

श्वासोच्छ्वासयुतं चान्यैर् मुक्तजीवनलक्षणैः ।
कटाहे जलसम्पूर्णे निक्षिपेद् बोधलब्धये ।। रस-१२.८४ ।।

लब्धबोधं तमाकृष्य पूर्ववत् समुपाचरेत् ।
जीवित्वा यावद् आयुष्यं म्रियते तदनन्तरम् ।। रस-१२.८५ ।।

संनिपाते महाघोरे मज्जन्तं मृत्युसागरे ।
उद्धरेत्तस्य धर्मस्य ब्रह्माप्यन्तं न विन्दति ।। रस-१२.८६ ।।

संनिपातमहामृत्युभयनिर्मुक्तमानवः ।
अपि सर्वस्वदानेन प्राणाचार्यं प्रपूजयेत् ।। रस-१२.८७ ।।

अन्यथा नरके तावद् यावत् कल्पविकल्पना ।
इत्याज्ञा शांकरी ज्ञेया शम्भुना परिकीर्तिता ।। रस-१२.८८ ।।

प्रकाशा नैव कर्तव्या रसोत्तरणमूलिका ।
शास्त्रं विना प्रयच्छन्ते मन्दा वित्ताभिकाङ्क्षया ।
गुरुप्रसादम् आसाद्य संनिपाते प्रयुज्यताम् ।। रस-१२.८९ ।।

शार्ङ्गष्टा च तथा व्याघ्री करीरस् तिलपर्णिका ।
इन्द्रवारुणिका मुस्ता हरिद्राङ्कोलमूलिका ।। रस-१२.९० ।।

अपामार्गः कणा स्वर्णं कटुतुम्बी च तिन्तिडी ।
शार्ङ्गष्टादिकवर्गोऽयं संनिपातहरः परम् ।। रस-१२.९१ ।।

सूतं गन्धकतालकं मणिशिलां ताप्यं लवं तुत्थकं जेपालं विषटङ्कणं मधुफलं कृत्वा समांशं दृढम् ।
कृत्वा कज्जलिकां विषोल्बणफणेः पित्तैश्च संभावयेत् क्षिप्त्वा सीसककूपिके रसवरं सूचीमुखं नामतः ।। रस-१२.९२ ।।

ब्रह्मद्वारि विकीर्णलोहितलवे गुञ्जैकमात्रं ददेद् दत्त्वा सम्पुटबद्धतन्द्रिकधनुर्वाते सशाखाहिमे ।
कासं श्वासमरोचकं प्रलपनं कम्पं च हिक्कातुरं मूकत्वं बधिरत्वम् उन्मदम् अपस्मारं जयेत् तत्क्षणात् ।। रस-१२.९३ ।।

रसगन्धकताम्राभ्रं लाङ्गलीवह्निरामठम् ।
वन्ध्यापटोलनिर्गुण्डीसुगन्धानिम्बपल्लवाः ।। रस-१२.९४ ।।

पाठाक्षारत्रयं क्ष्वेडबोलधत्तूरतण्डुलैः ।
शृङ्गीमधुकसारं च जम्बीराम्लेन मर्दयेत् ।। रस-१२.९५ ।।

कुर्याद्धि निष्कमानेन वटिका सा नियच्छति ।
सस्वेददाहाभिन्यासं संनिपातगजांकुशः ।। रस-१२.९६ ।।

ससारा वैष्णवी सेना अचला कादि कङ्कणा ।
रागरुद्रोपमोपेता प्रौढा मस्तकशालिनी ।। रस-१२.९७ ।।

त्रिभागं तालकं विद्याद् एकभागं तु पारदम् ।
तदर्धं गन्धकं चैव तदर्धं तु मनःशिला ।। रस-१२.९८ ।।

कारवल्लीदलरसैर् मर्दयेत् तत्प्रहरत्रयम् ।
पाचितो वालुकायन्त्रे चातुर्थिकहरो रसः ।। रस-१२.९९ ।।

स्याद् रसेन समायुक्तो गन्धकः सुमनोहरः ।
हियावल्लित्रिगुणितो निर्गुण्डीरसमर्दितः ।। रस-१२.१०० ।।

सप्तवाराणि तद् योज्यम् आर्द्रकस्वरसेन तु ।
संततादिज्वरं हन्याच्चातुर्थिकगजांकुशः ।। रस-१२.१०१ ।।

ताप्यतालकजेपालवत्सनाभमनःशिलाः ।
ताम्रगन्धकसूतं च मुसलीरसमर्दितः ।
मृत्युंजय इति ख्यातः कुक्कुटीपुटपाचितः ।। रस-१२.१०२ ।।

वल्लद्वयं प्रयुञ्जीत यथेष्टं दधिभोजनम् ।
नवज्वरं संनिपातं हन्यादेष महारसः ।। रस-१२.१०३ ।।

शुद्धं सूतं विषं गन्धं मरिचं टङ्कणं कणाम् ।
मर्दयेद् धूर्तजद्रावैर् दिनम् एकं तु शोषयेत् ।। रस-१२.१०४ ।।

पञ्चवक्त्रो रसो नाम द्विगुञ्जः संनिपातजित् ।
अर्कमूलकषायं च सत्र्यूषम् अनुपाययेत् ।
दध्योदनं हितं तत्र जलयोगं च कारयेत् ।। रस-१२.१०५ ।।

रसगन्धकतुल्यांशं धत्तूरफलजद्रवैः ।
मर्दयेद् दिनमेकं तु तत्तुल्यं त्रिकटु क्षिपेत् ।
उन्मत्ताख्यो रसो नाम्ना नस्ये स्यात्संनिपातजित् ।। रस-१२.१०६ ।।

निस्त्वग्जेपालजं बीजं दशनिष्कं प्रचूर्णयेत् ।
मरिचं पिप्पलीं सूतं प्रतिनिष्कं विमिश्रयेत् ।। रस-१२.१०७ ।।

भाव्यं जम्बीरजैर्द्रावैः सप्ताहं तत् प्रयत्नतः ।
संनिपातं निहन्त्याशु अञ्जने यः शिवः स्मृतः ।। रस-१२.१०८ ।।

मदनफलं विडलवणं सर्षपाः प्रतिनिष्कद्वयम् ।
चूर्णयित्वा त्रिफलाक्वाथेन सटङ्कणं पिबेत् ।। रस-१२.१०९ ।।

कुष्ठे ज्वरे कामलायां कण्ठरोगे ह्य् अजीर्णके ।
नस्ये च गिरिकर्ण्युत्थबीजैकं शीतवारिणा ।। रस-१२.११० ।।

प्रत्येकं रसगन्धयोर् द्विपलयोः कृत्वा मषीं शुद्धयोर् रम्यां म्लेच्छलुलायलोचनमनोधात्रीप्रकुञ्चत्रयम् ।
पथ्याया बदरत्रिकं त्रिकटु षट्शाणं वचा धर्मिणी वेल्लाम्भोधरपत्त्रकद्विरदकिञ्जल्काश्वगन्धाह्वयम् ।। रस-१२.१११ ।।

पिष्ट्वैतत् समसारम् अखिलं कर्षोन्मितं न्यस्य तत् प्रोन्मर्याधकरञ्जकामृतयुतं सागस्तिकत्र्यूषणैः ।

भूधात्रीविजयासरित्पतिफलं ज्वालामुखीमार्कवैः प्रत्येकं विदधीत निश्चलमतिः सप्त क्रमाद्भावनाः ।। रस-१२.११२ ।।

पित्तैरथो पञ्च विधाय पञ्चभिः करञ्जपत्त्रामृतधूपनं ततः ।
दत्त्वार्द्रकस्य स्वरसेन तण्डुलाकृतिं विदध्याद्गुटिकां भिषग्वरः ।। रस-१२.११३ ।।

देयैका संनिपाते प्रतिहतविषये मोहनेत्रप्रसुप्त्योः स्याद्गुल्मे साजमोदा पवनविकृतिषु त्र्यूषणेन ग्रहण्याम् ।
दातव्या जीरकेण द्विपतुरगनृणां प्राणसंरक्षणाय कायाम्भोधिर् एतं रसकसमरसं वैद्यनाथोऽभ्यधत्त ।। रस-१२.११४ ।।

गन्धकाभ्रसमः सूतो वाराहीरसमर्दितः ।
पाचितो वालुकायन्त्रे त्रिफलाव्योषचित्रकैः ।। रस-१२.११५ ।।

त्रिक्षारं पञ्चलवणहिङ्गुगुग्गुलुदीप्यकैः ।
सजीरकैः सेन्द्रयवैः पृथग्रससमैर्युतः ।। रस-१२.११६ ।।

माषमात्रोऽनुपानेन द्विपलस्योष्णवारिणः ।
अभिन्यासानलभ्रंशग्रहणीपाण्डुगुल्मिनाम् ।। रस-१२.११७ ।।

कुर्यात्प्राणपरित्राणमतः प्राणेश्वरः स्मृतः ।
व्याधिवृद्धौ प्रयोगोऽस्य द्वौ वारौ वैद्यसंमतः ।। रस-१२.११८ ।।

रसायोव्योषकङ्कुष्ठशिलातालाभ्रहिङ्गुलान् ।
कुम्भ्यग्निभृङ्गमारीतण्डुलीयकमाक्षिकान् ।। रस-१२.११९ ।।

हस्तिशुण्डीयुतांस् तुल्यांस् तदर्धशिवगन्धकान् ।
त्र्यहम् आर्द्राम्बुना पिष्ट्वा कूपीस्थं वालुकाग्निना ।। रस-१२.१२० ।।

जयाजम्बीरनिर्गुण्डीचाङ्गेरीवारि निक्षिपेत् ।
पक्त्वा चतुर्दशाहानि पिष्ट्वार्द्राक्तं विशोषयेत् ।। रस-१२.१२१ ।।

मृतसंजीवनाख्योऽयं रसो वल्लमितोऽशितः ।
द्राग् जयेदौषधं संनिपातादीन् सकलान् गदान् ।। रस-१२.१२२ ।।

रसभागो भवेदेको गन्धको द्विगुणो मतः ।
विषतालककङ्कुष्ठशिलाहिङ्गुललोहकम् ।। रस-१२.१२३ ।।

वह्नित्रिकटुभृङ्गाह्वहेममाक्षिकमभ्रकम् ।
हस्तिशुण्डी विषं कुम्भी तण्डुलीयकताम्रकौ ।। रस-१२.१२४ ।।

एषां प्रत्येकमेकैकं भागमादाय चूर्णयेत् ।
आर्द्रकस्य द्रवेणैव मर्दयेच्च दिनत्रयम् ।। रस-१२.१२५ ।।

जम्बीरस्य रसो ग्राह्यः पलत्रयपरीक्षितः ।
त्रिफलायाश्च निर्गुण्ड्याः प्रत्येकं च पलत्रयम् ।। रस-१२.१२६ ।।

रसस्य पलमात्रं तु चाङ्गेर्याः परिकीर्तितम् ।
काचकूप्यां विनिक्षिप्य यन्त्रे क्षिप्त्वा प्रयत्नवान् ।। रस-१२.१२७ ।।

उद्धृत्यार्द्रकनिर्यासैर् मर्दयित्वा विशोषयेत् ।
मृतसंजीवनो नाम रसोऽयंविदितो भुवि ।

गुञ्जाद्वयं ददीतास्य संनिपातापनुत्तये ।। रस-१२.१२८ ।।

वङ्गं नागं च सूतं च नेपालं गन्धकं तथा ।
शुल्बं विषं समांशेन रसेनार्द्रेण मर्दयेत् ।। रस-१२.१२९ ।।

पुनर् मर्येत निर्गुण्ड्याश् चाङ्गेर्या रसमर्दितः ।
वल्लप्रयोगेण रसोऽयं संनिपातनुत् ।। रस-१२.१३० ।।

गन्धकं च रसं शुद्धं प्रत्येकं कर्षसम्मितम् ।
एकत्र कज्जलीं कृत्वा ततः कुर्वीत गोलकम् ।। रस-१२.१३१ ।।

नवभाण्डे विनिक्षिप्य ताम्रपात्रेण गोपयेत् ।
दृढं निरुध्य तत् पात्रमग्नावारोपयेत् ततः ।। रस-१२.१३२ ।।

व्रीहिस्फुटनमात्रेण स्वाङ्गशीतं समुद्धरेत् ।
नवज्वरे प्रयुञ्जीत रसं पर्पटिकाह्वयम् ।। रस-१२.१३३ ।।

आर्द्रकस्य रसेनैव त्रिवल्लं त्रिदिनं भिषक् ।
ज्वरितं छादयेद्गाढं यावत्स्वेदः समुद्भवेत् ।। रस-१२.१३४ ।।

तक्रभक्तं भवेत्पथ्यं ज्वरमुक्तस्य देहिनः ।
नवज्वरारिर् इत्येष रसः परमदुर्लभः ।
वातज्वरे विशेषेण रसः साधारणो मतः ।। रस-१२.१३५ ।।

टङ्कणं रसगन्धौ च मरिचानि समांशकम् ।
सर्वं जम्बीरनीरेण दिनानि त्रीणि मर्दयेत् ।। रस-१२.१३६ ।।

संशोष्य शर्करायुक्तं मत्स्यपित्तेन भावयेत् ।
भावितं तद्रसं सिद्धमार्द्रकस्वरसैस्त्र्यहम् ।। रस-१२.१३७ ।।

वल्लं वारत्रयं देयं पानार्थं वारि शीतलम् ।
तक्रभक्तं भवेत्पथ्यं वृन्ताकफलसंयुतम् ।
सर्वान् नवज्वरान् हन्ति रसोऽयं जलमञ्जरी ।। रस-१२.१३८ ।।

कान्तस्य कण्टवेध्यानां पात्राणां भस्म कारयेत् ।
तत्समश्च रसो गन्धष्टङ्कणो निम्बवारिणा ।
ततः संपेष्य तत्कल्कं मर्दयेत्त्रिदिनं पुनः ।। रस-१२.१३९ ।।

रसतुल्येन मत्स्यस्य पित्तेन परिभावयेत् ।
सिद्धः कान्तरसो ह्य् एष प्रयोज्योऽभिनवज्वरे ।
शृङ्गवेरानुपानेन मात्रया भिषगुत्तमैः ।। रस-१२.१४० ।।

रसगन्धौ तथा वङ्गम् अभ्रकं समभागतः ।
मेलयित्वाथ वङ्गेन समं सूतं विमर्दयेत् ।। रस-१२.१४१ ।।

तत्रैकीकृत्य गन्धाभ्रे पेष्यं जम्बीरवारिणा ।
सामान्यं पुटम् आदद्यात् सप्तधा साधितं रसम् ।। रस-१२.१४२ ।।

कुमार्या चित्रकेणापि भावयित्वाथ सप्तधा ।

गुडेन जीरकेणापि ज्वरे जीर्णे प्रयोजयेत् ।। रस-१२.१४३ ।।

कासे श्वासे कुमार्या च त्रिफलाक्वाथयोगतः ।
उन्मादं च धनुर्वातम् अमृताक्वाथयोगतः ।
इत्येवं रोगतापघ्नो रसश् चन्द्रोदयाभिधः ।। रस-१२.१४४ ।।

नागं वङ्गं रसं ताम्रं गन्धकं टङ्कणं तथा ।
विषं च नेपालं हरितालं समं तथा ।। रस-१२.१४५ ।।

वटक्षीरेण संमर्द्य सर्वं कुर्यात्तु गोलकम् ।
तं गोलकं भाण्डमध्ये पाचयेद्दीपवह्निना ।। रस-१२.१४६ ।।

तं गोलं शीतलं कृत्वा भृङ्गराजेन मर्दयेत् ।
आर्द्रकस्य रसेनापि मर्दयेच्च पुनः पुनः ।। रस-१२.१४७ ।।

चणप्रमाणवटकान् रसेनार्द्रस्य दापयेत् ।
गुञ्जाद्वयप्रमाणेन ज्वरं जीर्णं हरत्यसौ ।। रस-१२.१४८ ।।

हरश्च गन्धकं चैव कुनटी च समं समम् ।
मर्द्यं कर्कोटिकायाश्च रसेन विनियोजयेत् ।। रस-१२.१४९ ।।

नवज्वरमुरारिः स्याद्वल्लं शर्करया सह ।
तण्डुलीयरसेनानुपानं शर्करयापि वा ।
गुञ्जाद्वयप्रमाणेन ज्वरान्हन्ति नवान्हठात् ।। रस-१२.१५० ।।

# रसरत्नसमुच्चय : अध्याय 13

https://sa.wikisource.org/s/80w

कट्वम्लतीक्ष्णलवणोष्णविदाहिरूक्षैः पित्तं प्रदुष्टम् अशनैर् अतिसेवितैस् तैः ।
संदूष्य रक्तम् अमुनोभयमार्गवर्ति निर्यात्यसृक्स्थलयकृत्प्लिहतोऽतिमात्रम् ।। रस-१३.१ ।।

पारदं हिङ्गुलुकं च ऊर्ध्वयन्त्रेण मेलयेत् ।
कुक्कुटाण्डरसं भागं टङ्कणक्षारम् एव च ।। रस-१३.२ ।।

गन्धकस्य तथा भागं घृतेन परिमर्दयेत् ।
सिद्धं रसं समादाय जीरतोयेन दापयेत् ।। रस-१३.३ ।।

दिनानि त्रीणि माषं च ग्रहणीरक्तदोषजित् ।
ज्वरदाहविनाशं च रक्तपित्तविनाशनम् ।। रस-१३.४ ।।

प्रत्येकं तोलमानेन सूतकं ताम्रभस्मकम् ।
दिनानि त्रीणि गुटिकां कृत्वा चाग्नौ विनिक्षिपेत् ।। रस-१३.५ ।।

ततः शुष्कं समादाय पुनरेव च मर्दयेत् ।
समस्तैः समगन्धैश्च कृत्वा कज्जलिकां च तैः ।। रस-१३.६ ।।

मुस्तादाडिमदूर्वाभिः केतकीस्तनवारिभिः ।
सहदेव्याः कुमार्याश्च पर्पटस्यापि वारिणा ।। रस-१३.७ ।।

रामशीतलिकातोयैः शतावर्या रसेन च ।
भावयित्वा प्रयत्नेन दिवसे दिवसे पृथक् ।। रस-१३.८ ।।

तिक्तं गुडूचिकासत्त्वं पर्पटीशीरमागधीः ।
शृङ्गाटं सारिवा चैषां समानं सूक्ष्मचूर्णकम् ।। रस-१३.९ ।।

द्राक्षादिककषायेण सप्तधा परिभावयेत् ।
ततः पोताश्रयं क्षिप्त्वा वट्यः कार्याश्चणोपमाः ।। रस-१३.१० ।।

अयं चन्द्रकलानामा रसेन्द्रः परिकीर्तितः ।
सर्वपित्तगदध्वंसी वातपित्तगदापहः ।। रस-१३.११ ।।

अन्तर्बाह्यमहादाहविध्वंसनमहाक्षमः ।
ग्रीष्मकाले शरत्काले विशेषेण प्रशस्यते ।। रस-१३.१२ ।।

कुरुते नाग्निमान्द्यं च महातापज्वरं हरेत् ।
श्रमं मूर्छां हरत्याशु स्त्रीणां रक्तमहास्रवम् ।। रस-१३.१३ ।।

ऊर्ध्वाधो रक्तपित्तं च रक्तवान्तिं विशेषतः ।
मूत्रकृच्छ्राणि सर्वाणि नाशयेन्नात्र संशयः ।। रस-१३.१४ ।।

पटोलमायसं चूर्णं सूतेन्द्रं समचारितम् ।
लोहारिवर्गसंघृष्टं रक्तपित्तहरं परम् ।। रस-१३.१५ ।।

वृषादलानां स्वरसस्य कर्षं रसेन्द्रगुञ्जामधुशर्करायुतम् ।
लिहन्प्रभाते मनुजो निहन्याद् दुःखाकरं दारुणरक्तपित्तम् ।। रस-१३.१६ ।।

सपटोलकहिङ्गूलः सक्षौद्रो रक्तपित्तनुत् ।। रस-१३.१७ ।।

नवनीतं सिता लाजा द्राक्षया सह भक्षयेत् ।। रस-१३.१८ ।।

मस्तके च घृतं दद्याद्रक्तपित्तहरं परम् ।। रस-१३.१९ ।।

द्राक्षावासायुतं क्वाथं शर्कराभावितं पिबेत् ।। रस-१३.२० ।।

वासारसं सिताक्षौद्रैर्लाजान्वा शर्करासमान् ।
भक्षयन् रक्तपित्तार्तस् तृष्णादाहज्वरं जयेत् ।। रस-१३.२१ ।।

धात्रीचूर्णं सितायुक्तं भक्षयेद्रक्तपित्तनुत् ।। रस-१३.२२ ।।

दोषाः शोषमनोऽभितापकुपिताः कुर्वन्ति कासं ततः पीतं पूतिकफं प्रतीपनयनः पूयोपमं ष्ठीवति ।
शीतोष्णेच्छुर् अकारणेन बहुभुक् स्निग्धप्रसन्नाननः पार्श्वार्त्यल्पबलक्षयाकृतिर् अपि प्रादुर्भवत्यन्यथा ।। रस-१३.२३ ।।

सार्कतीक्ष्णाभ्रकोऽगस्त्यकासमर्दवरारसैः ।
मर्दितो वेतसाम्लेन पिण्डितः कासनाशनः ।। रस-१३.२४ ।।

तारे पिष्टशिलां क्षिप्त्वा हरितालाच्चतुर्गुणाम् ।
वासागोक्षुरसाराभ्यां मर्दयेत् प्रहरद्वयम् ।। रस-१३.२५ ।।

प्रस्विन्नो वालुकायन्त्रे गुञ्जाद्वितयसंमितः ।
कासं त्रिकटुनिर्गुण्डीमूलचूर्णयुतो हरेत् ।। रस-१३.२६ ।।

भूनागाभ्रकयोः सत्त्वं कान्तहेमाभ्ररूप्यकम् ।
मुक्ताफलानि रत्नानि ताप्यं वैक्रान्तमेव च ।। रस-१३.२७ ।।

भस्मीकृतमिदं सर्वं पृथङ् माषमितं मतम् ।
निष्कमात्रमितं शुद्धं राजावर्तरजस्तथा ।। रस-१३.२८ ।।

एतत्सर्वं समं योज्यं मर्दयित्वाम्लवेतसैः ।
रुद्ध्वा मूषोदरे कोष्ठ्यां धमेदाकाशदर्शनम् ।। रस-१३.२९ ।।

शतवारं धमेदेवं मर्दयित्वाम्लवेतसैः ।
ततः संचूर्णिते चास्मिन्मुक्ताभस्म द्विशाणकम् ।। रस-१३.३० ।।

मरिचं पञ्च शाणेयं क्षिप्त्वा संमर्द्य यत्नतः ।
रम्ये करण्डके क्षिप्त्वा स्थापयेत् तदनन्तरम् ।। रस-१३.३१ ।।

सोऽयं रत्नकरण्डको रसवरो मध्वाज्यसंक्रामणो हन्याच्छ्वासगदं ज्वरं ग्रहणिकां कासं च हिध्मामयम् ।
शूलं शोषमहोदरं बहुविधं कुष्ठं च हन्याद् गदान् बल्यो वृष्यकरः प्रदीपनतमः स्वस्थोचितो वेगवान् ।। रस-१३.३२ ।।

शुद्धसूतस्य भागैकं भागैकं शुद्धगन्धकम् ।
भागत्रयं मृतं ताम्रं मरिचं पञ्चभागिकम् ।। रस-१३.३३ ।।

मृताभ्रस्य चतुर्भागं भागमेकं विषं क्षिपेत् ।
भूताङ्कुशस्य भागैकं सर्वं चाम्लेन मर्दयेत् ।। रस-१३.३४ ।।

यामं भूताङ्कुशो नाम माषैकं वातकासजित् ।
अनुपानं लिहेत्क्षौद्रैर्विभीतकफलत्वचः ।
पित्तकासारुचिश्वासक्षयकासांश्च नाशयेत् ।। रस-१३.३५ ।।

रसभस्म विषं तुल्यं गन्धकं द्विगुणं मतम् ।
बोलतालकवाह्लीककर्कोटीमाक्षिकं निशा ।। रस-१३.३६ ।।

कण्टकारी यवक्षारलाङ्गलीक्षारसैन्धवम् ।
मधूकसारं संचूर्ण्य सप्ताहं चार्द्रकद्रवैः ।। रस-१३.३७ ।।

गुटिकां बदराकारां श्लेष्मकासापनुत्तये ।
भक्षयेद् बोलबद्धोऽयं रसः सश्वासपाण्डुजित् ।। रस-१३.३८ ।।

रसगन्धकपिप्पल्यो हरीतक्यक्षवासकम् ।
षडुत्तरगुणं चूर्णं बब्बुलक्वाथभावितम् ।। रस-१३.३९ ।।

एकविंशतिवाराणि शोषयित्वा विचूर्णयेत् ।
भक्षयेन्मधुना हन्ति कासम् अग्निरसो ह्य् अयम् ।। रस-१३.४० ।।

त्रिकटु त्रिफला चैला जातीफललवंगकम् ।
एतेषां समभागानां समः पूर्वरसो भवेत् ।। रस-१३.४१ ।।

सम्पूर्यालोडयेत् क्षौद्रे भक्ष्यो निष्कद्वयं द्वयम् ।
स्वयम् अग्निरसो नाम्ना क्षयकासनिकृन्तनः ।। रस-१३.४२ ।।

भृङ्गराजस्य पत्त्राणि मधुना चूर्णितानि हि ।
गोलकं धारयेद्वक्त्रे कासविष्टम्भशान्तये ।। रस-१३.४३ ।।

अर्कैरण्डस्य पत्त्राणां रसं पीत्वा च कासजित् ।। रस-१३.४४ ।।

दन्तीमूलस्य धूमं वा निर्गुण्ड्या वा पिबेज्जयेत् ।। रस-१३.४५ ।।

इन्द्रवारुणिकामूलं भृङ्गीकृष्णातिलैः सह ।
भक्षयेत् क्षयकासार्तो निष्कमात्रं प्रशान्तये ।। रस-१३.४६ ।।

श्लेष्मोपरुद्धमनः पवनोऽतिदुष्टः संदूषयन्ननु जलान्नवहाश् च नाडीः ।
आमाशयोद्भवम् इमं विदधात्य् उरस्थः श्वासं च वक्रगमनो हि शरीरभाजाम् ।। रस-१३.४७ ।।

इन्द्रवारुणिकामूलं देवदारु कटुत्रयम् ।
शर्करासहितं खादेद् ऊर्ध्वश्वासप्रशान्तये ।। रस-१३.४८ ।।

सूतार्धं गन्धकं मर्द्यं यामैकं कन्यकाद्रवैः ।
द्वयोः समं ताम्रपत्त्रं पूर्वकल्केन मेलयेत् ।। रस-१३.४९ ।।

दिनैकं हण्डिकायन्त्रे पक्वमादाय चूर्णयेत् ।
सूर्यावर्तरसो ह्य् एष द्विगुञ्जः श्वासजित् भवेत् ।। रस-१३.५० ।।

सूतः षोडश तत्समो दिनकरस्तस्यार्धभागो बलिः सिन्धुस्तस्य समः सुसूक्ष्ममृदितः षट् पिप्पली चूर्णितः ।
जम्बीरस्वरसेन मर्दितम् इदं तप्तं सुपक्वं भवेत् कासश्वाससगुल्मशूलजठरं पाण्डुं लिहन्नाशयेत् ।। रस-१३.५१ ।।

साधारणं तु वटकं वक्ष्यामि शृणु तत्त्वतः ।
पारदं गन्धकं चैव पलमेकं पृथक् पृथक् ।। रस-१३.५२ ।।

पलत्रयं त्रिकटुकं वङ्गम् एकपलं क्षिपेत् ।
सर्वम् एकत्र संयोज्य दिनानि त्रीणि मर्दयेत् ।। रस-१३.५३ ।।

गोमूत्रेण तथा त्रीणि दिनानि परिमर्दयेत् ।
अक्षप्रमाणवटकं छायाशुष्कं तु कारयेत् ।। रस-१३.५४ ।।

नित्यमेकं तु वटकं दिनानि त्रिंशदेव च ।
श्वासकासज्वरहरम् अग्निमान्द्यारुचिप्रणुत् ।। रस-१३.५५ ।।

रसभागो भवेदेको गन्धको द्विगुणो मतः ।
त्रिभागा पिप्पली ग्राह्या चतुर्भागा हरीतकी ।। रस-१३.५६ ।।

विभीतः पञ्चभागस्तु वासा षड्गुणिता भवेत् ।
भार्ङ्गीसप्तगुणा ग्राह्या सर्वं चूर्णं प्रकल्पयेत् ।। रस-१३.५७ ।।

बब्बुलक्वाथम् आदाय भावयेद् एकविंशतिः ।
विभीतकप्रमाणेन मधुना गुटिकां चरेत् ।। रस-१३.५८ ।।

एकैकां भक्षयेत्प्रातर्वटी सप्तामृताभिधा ।
श्वासकासादिकं व्याधिं तत्क्षणान्नाशयेद् इयम् ।। रस-१३.५९ ।।

सूतं शुल्बं सुलोहं बलिम् अमृतयुतं त्रित्रिकं रेणुकाब्दं गण्डीरं केसराग्निं द्विगुणगुडयुतं मर्दयित्वा समस्तम् ।
कुर्यात् कोलास्थिमात्रान् सुरुचिरवटकान् भक्षयेत् प्राग्दिनादौ पथ्यासीसर्वरोगान् हरति च नितरां नीलकण्ठाभिधानः ।। रस-१३.६० ।।

तारताम्ररसपिष्टिका शिला गन्धतालसमभागिकं रसैः ।
आटरूषसुरसार्द्रसम्भवैर् मर्दय प्रकुरु गोलकं ततः ।। रस-१३.६१ ।।

मृत्स्नया च परिवेष्ट्य गोलकं यामयुग्मम् अथ भूधरे पचेत् ।
गन्धकेन कुरु तत्समं ततश् चाटरूषकटुकैर् विभावयेत् ।। रस-१३.६२ ।।

श्वासकासकरिकेसरीरसो वल्लयस्य परिसेवयेद् बुधः ।। रस-१३.६३ ।।

रसगन्धकताम्राभ्रं कणाशुण्ठ्यूषणं समम् ।
भूतम् एकं विषं चैकं सूर्यः कासादिनाशनः ।। रस-१३.६४ ।।

गन्धकं मरिचं साज्यं पिबेच्छ्वासकफापहम् ।
शिला हिङ्गु विडङ्गं च मरिचं कुष्ठसैन्धवम् ।
मध्वाज्याभ्यां लिहेत् कर्षं श्वासकाशकफापहम् ।। रस-१३.६५ ।।

विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः ।
शीतपानाशनस्थानरजोधूमातपानिलैः ।
व्यायामकर्मभाराध्ववेगाघातापतर्पणैः ।

हिक्का श्वासश्च कासश्च नृणां समुपजायते ।
रसगन्धकधान्याभ्रतालताप्योपलं क्रमात् ।
भागवृद्धं वचाकुष्ठहरिद्राक्षारचित्रकैः ।। रस-१३.६६ ।।

सपाठा लाङ्गली व्योषसैन्धवाक्षविषैः समम् ।
भावितं भृङ्गनीरेण हिक्कावैस्वर्यकासनुत् ।। रस-१३.६७ ।।

पक्वताम्रे रसः पिष्टो बलिना हिध्मिनां हितः ।। रस-१३.६८ ।।

चूर्णं पाठेन्द्रवारुण्योर्भाण्डे दत्त्वाथ कुनटीम् ।
तत्पृष्ठे शुद्धसूतं च कुनट्यंशं प्रदापयेत् ।। रस-१३.६९ ।।

सूतार्धं कुनटीचूर्णं तस्यार्धं पूर्वमूलिका ।
चूर्णं दत्त्वा पचेच्चुल्ल्या यामाष्ट मृदुवह्निना ।
शिलापूतो रसो नाम हन्ति हिक्कां त्रिगुञ्जकः ।। रस-१३.७० ।।

मृतसूतं मृतं ताम्रं हिङ्गु पुष्करमूलकम् ।
सैन्धवं गन्धकं तालं कटुकं चूर्णयेत् समान् ।। रस-१३.७१ ।।

देवदालीपुनर्नवयोर् निर्गुण्डीमेघनादयोः ।
तिक्तकोषातकीद्रावैर् दिनैकं मर्दयेद् दृढम् ।। रस-१३.७२ ।।

माषमात्रं लिहेत् क्षौद्रैः रसं मन्थानभैरवम् ।
कफरोगप्रशान्त्यर्थं निम्बक्वाथं पिबेदनु ।। रस-१३.७३ ।।

विश्वादित्रिकनिर्गतद्रवनिशा कीरप्रियोत्थं दलं नीलग्रीवगलालयं सुरपतेस् तार्तीयनेत्राभिधम् ।
विद्वत्पुञ्जवती कृमिप्रतिभटं निर्गुण्डिकावारिणा तुल्यांशाश् चणकप्रमाणवटिकाः सश्वासकासघ्निकाः ।। रस-१३.७४ ।।

क्वाथं रास्नाबृहत्यग्निबलादुग्धैश् च पाययेत् ।। रस-१३.७५ ।।

हिक्विनं पाययेद् धूमं पत्त्रैः शिखिनिशोद्भवैः ।। रस-१३.७६ ।।

कर्षैकं गन्धकं शुद्धं घृतैश् चोष्णोदकैः पिबेत् ।
कफं हन्त्यथ वा क्षौद्रैः पञ्चवक्त्ररसः खलु ।। रस-१३.७७ ।।

अत्युच्चभाषणविषाध्ययनाभिघातसंदूषणैः प्रकुपिताः पवनादयस् तु ।
स्रोतःसु ते स्वरवहेषु गताः प्रतिष्ठां हन्युः स्वरं भवति चापि हि षड्विधः सः ।। रस-१३.७८ ।।

## पर्पटी > प्रोदुच्तिओन्

रसं द्विगुणगन्धेन मर्दयित्वा सभृङ्गकम् ।
लोहपात्रे घृताभ्यक्ते द्रावितं बदराग्निना ।। रस-१३.७९ ।।

ऊर्ध्वाधो गोमयं दत्त्वा कदल्याः कोमले दले ।
स्निग्धया लोहदर्व्या च पर्पटाकारतां नयेत् ।। रस-१३.८० ।।

लोहपात्रे विनिक्षिप्ता लोहपर्पटिका भवेत् ।
ताम्रपात्रे विनिक्षिप्ता ताम्रपर्पटिका भवेत् ।। रस-१३.८१ ।।

- टीका रससरत्नसमुच्चयटीका:
- पर्पटीरसमाह रसं द्विगुणेति ।। रसटी-१३.८१;१
- सभृङ्गकं भृङ्गराजरसेन मर्दयित्वा तप्तं द्रावितं तद्गोमयोपरिस्थे कदले स्निग्धया लोहदर्व्या प्रक्षिप्य तदुपरि कदलीदले न्युब्जे गोमयं दत्त्वा करतलादिना निपीड्य पर्पटाकारं कुर्यात् ।। रसटी-१३.८१;२
- कदलीदलस्थाने स्निग्धे लोहपत्रे विनिक्षिप्ता चेल्लोहपर्पटिका भवेत् ।। रसटी-१३.८१;३
- अथवा ताम्रपत्रे स्निग्धे विनिक्षिप्ता ताम्रपर्पटिका भवेत् ।। रसटी-१३.८१;४
- रसोपरि तु कदलीदलाद्येव देयम् ।। रसटी-१३.८१;५

विषपादं च युञ्जीत तत्साध्येष्वामयेषु च ।
सुरसाया जयन्त्याश् च कन्यकाटरूषकयोः ।। रस-१३.८२ ।।

त्रिफलाया मुनेर् भार्ङ्ग्या मुण्ड्यास् त्रिकटुचित्रयोः ।
भृङ्गराजस्य वह्नेश्च प्रत्यहं द्रवभावितम् ।। रस-१३.८३ ।।

आर्द्रकस्य रसेनापि सप्तधा भावयेत्पुनः ।
अङ्गारैः स्वेदयेद् ईषत् पर्पटरसम् उत्तमम् ।। रस-१३.८४ ।।

गुञ्जाष्टकं ददीतास्य ताम्बूलीपत्त्रसंयुतम् ।
पिप्पलीदशकैः क्वाथं निर्गुण्ड्याश् चानुपाययेत् ।
स्वरभङ्गे कफे श्वासे प्रयोज्यः सर्वदा रसः ।। रस-१३.८५ ।।

त्रिकण्टकस्य मूलानि शुण्ठीं संक्षुद्य निक्षिपेत् ।
अजाक्षीरे सनीरार्धं यावत्क्षीरं विपाचयेत् ।। रस-१३.८६ ।।

तत्क्षीरं पाययेद्रात्रौ सकणं भोजनेऽपि च ।
कूष्माण्डं वर्जयेच्चिञ्चां वृन्ताकं कर्कटीम् अपि ।। रस-१३.८७ ।।

आरनालं च तैलं च संसर्गं च विवर्जयेत् ।
मासत्रयं च सेवेत कासश्वासनिवृत्तये ।। रस-१३.८८ ।।

सजीरहिङ्गुकव्योषैः शमयेद् ग्रहणीं रसः ।
दशमूलाम्भसा वातज्वरं त्रिकटुना कफम् ।। रस-१३.८९ ।।

ज्वरं मधुकसारेण पञ्चकोलेन सर्वजम् ।
यक्ष्माणं मधुपिप्पल्या गोमूत्रेण गुदाङ्कुरान् ।। रस-१३.९० ।।

शूलम् एरण्डतैलेन पाण्डुशोफं सगुग्गुलुः ।
कुष्ठानि भृङ्गभल्लातवाकुची पञ्चनिम्बकैः ।। रस-१३.९१ ।।

धत्तूरबीजसंयोगान्मेहोन्मादविनाशिनी ।
अपस्मारं निहन्त्याशु व्योषनिम्बुदलैः सह ।। रस-१३.९२ ।।

स्तनंधयशिशूनां तु रसोऽयं नितरां हितः ।
पथ्याक्षचूर्णादिवशाद् व्याधींश् चान्यान् सुदुस्तरान् ।। रस-१३.९३ ।।

सजातीफलशीतोदं योजयेत्पर्पटीरसम् ।
पित्ताजीर्णे शिरश् चास्य शीततोयेन सेचयेत् ।। रस-१३.९४ ।।

नस्यं निष्ठीवनं धूमं तीक्ष्णं वमनरेचनम् ।
अन्नं रूक्षाल्पतीक्ष्णोष्णं कटुतिक्तकषायकम् ।
चिरकालस्थितं मद्यं योजयेत्कफरोगिणे ।। रस-१३.९५ ।।

# रसरत्नसमुच्चय : अध्याय 14

https://sa.wikisource.org/s/80x

अग्निमान्द्यं ज्वरः शैत्यं वान्तिः शोणितपूययोः ।
सत्त्वहानिश्च दौर्बल्यं राजरोगस्य लक्षणम् ।। रस-१४.१ ।।

रसस्य तुल्यभागेन हेमभस्म प्रकल्पयेत् ।
तालकं गन्धकं तुत्थं माक्षिकं रसकं शिलाम् ।। रस-१४.२ ।।

रससाम्येन युञ्जीत तुत्थं भस्मीकृतं न्यसेत् ।
वह्नौ भस्मीकृतं चेत्थं मयूरकसुतुत्थकम् ।। रस-१४.३ ।।

किंचिट् टङ्कणकं दत्त्वा मार्जारस्य विशा युतम् ।
प्रथमं पुटयेद् दध्ना द्वितीयं मधुना सह ।। रस-१४.४ ।।

तालकं शोधयेदग्रे कूष्माण्डक्षारपाचनात् ।
तैले पचेत्ततः सम्यक् चूर्णे वा परिशोधयेत् ।। रस-१४.५ ।।

गन्धकं शोधयेद्दुग्धे रसकं नरवारिणा ।
माक्षिकं सिन्धुसंयुक्तं बीजपूररसे पचेत् ।। रस-१४.६ ।।

जयन्तीद्रवसम्पिष्टां शिलां तत्रैव पाचयेत् ।
एकीकृत्य ततः सर्वम् अर्कक्षीरेण मर्दयेत् ।। रस-१४.७ ।।

जयन्तीभृङ्गराजाभ्यां वासापाठाकृशानुभिः ।
अगस्तिलाङ्गलीभ्यां च प्रत्येकं दिवसं शनैः ।। रस-१४.८ ।।

ततस्तु गोलकं बद्ध्वा पचेत्पूर्ववदाहृतः ।
चूर्णयित्वा ततः सम्यग् भावयेदार्द्रकाम्बुना ।। रस-१४.९ ।।

सप्तधा व्योषनिर्यासै रसः कनकसुन्दरः ।
गुञ्जाद्वयं त्रयं वास्य राजयक्ष्मापनुत्तये ।। रस-१४.१० ।।

मधुना पिप्पलीभिश्च मरिचैर्वा घृतान्वितैः ।
लेहयेद्रोगिणं वैद्यो बलावस्थाविशेषवित् ।। रस-१४.११ ।।

जयपालरजोभिर्वा शुण्ठ्या गव्यघृताक्तया ।
ददीत शूलिने प्राज्ञो गुल्मिने च विशेषतः ।। रस-१४.१२ ।।

कादिवर्ज्यं चरेत्पथ्यं हृद्यं बल्यं च पूर्ववत् ।
सन्निपाते ददीतैनमार्द्रकद्रवसंयुतम् ।
गुडूचीत्रिफलाक्वाथैः संस्कृतो गुग्गुलुर्वरः ।। रस-१४.१३ ।।

**राजमृगाङ्करसः**

रसभस्म त्रयो भागा भागैकं हेमभस्मकम् ।
मृतताम्रस्य भागैकं शिलागन्धकतालकम् ।। रस-१४.१४ ।।

प्रतिभागद्वयं शुद्धमेकीकृत्य विचूर्णयेत् ।
वराटान्पूरयेत्तेन अजाक्षीरेण टङ्कणम् ।। रस-१४.१५ ।।

पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तन्निरोधयेत् ।
शुद्धं गजपुटे पच्याच्चूर्णयेत्स्वाङ्गशीतलम् ।। रस-१४.१६ ।।

रसो राजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः ।
दशपिप्पलिकाक्षौद्रैर्मरिचैकोनविंशतिः ।
सघृतैर्दापयेद्वैद्यो रोगराजप्रशान्तये ।। रस-१४.१७ ।।

**शङ्खेश्वररसः**

शङ्खस्य वलयान्निष्कं चतुर्निष्कं वराटकम् ।
निष्कार्धं नीलतुत्थस्य सर्वतुल्यं तु गन्धकम् ।। रस-१४.१८ ।।

गन्धतुल्यं मृतं नागं नागतुल्यं मृतं रसम् ।
टङ्कणं रसतुल्यं स्यान्मर्यं पाच्यं मृगाङ्कवत् ।
राजयक्ष्महरः सोऽयं नाम्ना शङ्खेश्वरो मतः ।। रस-१४.१९ ।।

**मृगाङ्कपोटलीरसः**

शङ्खनाभिं गवां क्षीरैः पेषयेन्निष्कषोडश ।
तेन मूषा प्रकर्तव्या तन्मध्ये भस्मसूतकम् ।। रस-१४.२० ।।

निष्कार्धं गन्धकात्त्रीणि चूर्णीकृत्य विनिक्षिपेत् ।
रुद्ध्वा तद्वेष्टयेद्वस्त्रे मृत्तिकां लेपयेद्बहिः ।। रस-१४.२१ ।।

शोष्यं गजपुटे पच्यान्मूषया सह चूर्णयेत् ।
गुञ्जैकमनुपानेन क्षयं हन्ति मृगाङ्कवत् ।। रस-१४.२२ ।।

**हेमगर्भपटोलीरसः**

द्विनिष्कं भस्म सूतस्य निष्कैकं स्वर्णभस्मकम् ।
शुद्धगन्धकनिष्कौ द्वौ चूर्णयित्वा चित्रकद्रवैः ।। रस-१४.२३ ।।

द्वियामान्ते विशोष्याथ तेन पूर्या वराटिकाः ।
वराटान्मृण्मये भाण्डे रुद्ध्वा गजपुटे पचेत् ।। रस-१४.२४ ।।

स्वाङ्गशीतं विचूर्ण्याथ पोटलीं हेमगर्भिताम् ।
मृगाङ्कवच्चतुर्गुञ्जं भक्षितं राजयक्ष्मनुत् ।। रस-१४.२५ ।।

स्वयमग्निरसं खादेत्त्रिनिष्कं राजयक्ष्मनुत् ।। रस-१४.२६ ।।

**पञ्चामृतरसः**

भस्मसूताभ्रलोहानां शिलाजतुविषं समम् ।
गुडूचीत्रिफलाक्वाथैः संस्कृतं गुग्गुलुं तथा ।। रस-१४.२७ ।।

मृतं नेपालताम्रं च सूतस्थाने नियोजयेत् ।
एकीकृत्य द्विगुञ्जं तद्भक्षयेद्राजयक्ष्मनुत् ।। रस-१४.२८ ।।

पञ्चामृतरसो नाम ह्यनुपानं च पूर्ववत् ।। रस-१४.२९ ।।

हरेत्क्षीराजगन्धाभ्यां जयन्ती वा क्षयापहा ।। रस-१४.३० ।।

**क्षयशामकरसः**

तुल्यं पारदगन्धकं त्रिकटुकं ताभ्यां रजः कम्बुजं तैस्तुल्यं च भवेत्कपर्दभसितं स्यात्पारदाट्टङ्कणम् ।
पादांशं सकलैः समानमरिचं लिह्यात्क्रमात्साज्यकं यावन्निष्कमितं भवेत्प्रतिदिनं मासात्क्षयः शाम्यति ।। रस-१४.३१ ।।

**लोकनाथरसः**

रसस्य भस्मना हेम पादांशेन प्रकल्पयेत् ।
गन्धकं द्विगुणं दत्त्वा मर्दयेच्चित्रकाम्बुना ।। रस-१४.३२ ।।

चराचरास्ये सम्पूर्य टङ्कणेन निरुध्य च ।
भाण्डे चूर्णप्रलिप्तेऽथ क्षिप्त्वा रुन्धीत मृत्स्नया ।। रस-१४.३३ ।।

शोषयित्वा पुटेद्गर्तेऽरत्निमात्रेऽपराह्णके ।
स्वाङ्गशीतलम् उद्धृत्य चूर्णयित्वाथ विन्यसेत् ।। रस-१४.३४ ।।

एष लोकेश्वरो नाम पुष्टिवीर्यविवर्धनः ।
गुञ्जाचतुष्टयं साज्यं मरिचैश्च समन्वितम् ।। रस-१४.३५ ।।

खादेत्परमया भक्त्या लोकेशे सर्वदर्शिनी ।
अङ्गकार्श्येऽग्निमान्द्ये च रसोऽयं कासहिक्कयोः ।। रस-१४.३६ ।।

मरीचैर्घृतसंयुक्तैः प्रदातव्यो दिनत्रयम् ।
लवणं वर्जयेत्तत्र साज्यं सदधि भोजनम् ।। रस-१४.३७ ।।

एकविंशद्दिनं यावन्मरिचं सघृतं पिबेत् ।
पथ्यं मृगाङ्कवद्देयं शयीतोत्तानपादतः ।। रस-१४.३८ ।।

वमने सम्प्रवृत्ते तु गुडूचीद्रवमाहरेत् ।
मधुना पाययेत्सार्धं दग्धवृन्ताकमाशयेत् ।। रस-१४.३९ ।।

स्नानं शीतलतोयेन मूर्ध्नि धारां विनिक्षिपेत् ।
जाते श्लेष्मविकारे तु कदलीफलमाहरेत् ।। रस-१४.४० ।।

भृष्ट्वा तन्मरिचैः सार्धं भोजयेच्छलेष्मनुत्तये ।
आर्द्रकं मधुमिश्रं वा गुडार्द्रकमथोऽपि वा ।। रस-१४.४१ ।।

भृष्ट्वा कुस्तुम्बरीमाषान्निस्तुषांश्चूर्णयेत्ततः ।
शर्कराघृतसम्मिश्रान्ददीतारुचिशान्तये ।। रस-१४.४२ ।।

भृष्ट्वा कुस्तुम्बरीं सम्यग् घृते शर्करया पिबेत् ।
एलां मरिचसंयुक्तां यावद् वान्तिः प्रशाम्यति ।। रस-१४.४३ ।।

अजमोदं विडङ्गं च पिष्ट्वा तक्रेण पाययेत् ।
कृमिकोपप्रशान्त्यर्थं क्वाथं वातघ्नमुस्तयोः ।। रस-१४.४४ ।।

संस्कृत्य दुग्धिकां वह्नौ विरेके च प्रयोजयेत् ।
ईषद्भृष्ट्वा जयाचूर्णं मधुना खादयेन्निशि ।। रस-१४.४५ ।।

अङ्गतोदे घृतेनाङ्गं मर्दयित्वोष्णवारिणा ।
स्नापयेद्रोगिणं वैद्यो लोकनाथं रसं स्मरन् ।। रस-१४.४६ ।।

**वैद्यनाथरसः**

शंखस्य वलयं निष्कं चतुर्निष्कं वराटिकाः ।
कर्षांशं नीलतुत्थं च तालं गन्धाश्मटङ्कणम् ।। रस-१४.४७ ।।

तुत्थं नागरसं चार्धं निष्कांशं पूर्ववत्पुटेत् ।
वराटचूर्णं मण्डूरकल्पितालेपने पचेत् ।। रस-१४.४८ ।।

अस्यार्धमाषं मरिचार्धमाषं ताम्बूलवल्लीरसभावितं च ।
तत्पत्रलिप्तं मधुनावलिह्याद्धैयङ्गवीनेन घृतेन वापि ।। रस-१४.४९ ।।

नाडीमार्गे निर्गते चाल्पमल्पं पथ्यं भोज्यं लोकनाथोपदिष्टम् ।
यामे यामे चैवम् आ मण्डलान्तात् सिद्धं सद्यः शोषजिद्वैद्यनाथः ।। रस-१४.५० ।।

**लोकनाथरसः**

अध्यर्धनिष्कौ रसतुत्थभागौ पृथक्पृथग्गन्धकटङ्ककर्षम् ।
शंखस्य कर्षं मृतताम्रतो द्वौ वराटिकानां नव सम्पुटस्थान् ।। रस-१४.५१ ।।

पक्त्वा पचेदर्कदलद्रवार्द्रान् भूयोऽर्धभागेन करीषकाणाम् ।
अस्यार्धपादं मरिचार्धभागं गन्धाश्मनिष्कं च घृतेन लिह्यात् ।। रस-१४.५२ ।।

अश्नीयात्पूर्ववत्पथ्यं वासराण्येकविंशतिः ।
लोकनाथरसो नाम्ना रोगराजनिकृन्तनः ।। रस-१४.५३ ।।

**प्राणनाथरसः**

अयोरजो विंशतिनिष्कमानं विभावितं भृङ्गरसाढकेन ।
धत्तूरभार्ङ्गित्रिफलारसार्द्रं तुल्यांशताप्यं विपचेत्पुटेषु ।। रस-१४.५४ ।।

सूतं च निष्कं समभागतुत्थं गन्धोपलौ द्वौ चतुरो वराटान् ।

पक्त्वा पुटाग्नौ समलोहचूर्णान्पचेत्तथा पूर्वरसैर्विमिश्रान् ।। रस-१४.५५ ।।

चूर्णेऽस्मिन्मरिचाः सप्त तुत्थटङ्कणयोर्दश ।
संसृजेत् तत् पृथङ्निष्कान् प्राणनाथाह्वयोदितः ।। रस-१४.५६ ।।

अर्धपादो रसाद्भक्ष्यः केवलाद्राजयक्ष्मिभिः ।
शोषोदरार्शोग्रहणीज्वरगुल्माद्युपद्रुतैः ।। रस-१४.५७ ।।

**वज्ररसः**

कर्षं खर्परसत्त्वस्य षण्मासे हेम्नि विद्रुते ।
षण्निष्कसूतं गन्धाश्मन्यष्टनिष्के प्रवेशितम् ।। रस-१४.५८ ।।

प्रवालमुक्ताफलयोश्चूर्णं हेमसमांशयोः ।
क्रमाद्द्वित्रिचतुर्निष्कं मृतायः सीसभास्करम् ।। रस-१४.५९ ।।

चाङ्गेर्यम्लेन यामांस्त्रीन्मर्दितं चूर्णितं पृथक् ।
द्वौ निष्कौ नीलवटकव्योमायस्कान्ततालकात् ।। रस-१४.६० ।।

अङ्कोल्लकङ्गुणीबीजतुत्थेभ्यश् चतुरः पृथक् ।
अष्टौ च टंकणक्षाराद्वराटानां च विंशतिः ।। रस-१४.६१ ।।

महाजम्बीरनीरस्य प्रस्थद्वन्द्वेन पेषयेत् ।
एतदष्टशरावस्थं शुद्धं खार्यास्तुषस्य च ।। रस-१४.६२ ।।

करीषभारे च पचेदथ माषद्वयं ततः ।
एतावद्गन्धकात्पादं मरिचाद्भावितादपि ।। रस-१४.६३ ।।

मधुनालोडितं लिह्यात्ताम्बूलीपत्रलेपितम् ।
गतेऽस्य घटिकामात्रे प्रतियामं च पथ्यभुक् ।। रस-१४.६४ ।।

नो चेदुद्दीपितो वह्निः क्षणाद्धातून्पचत्यतः ।
दिनमेकं निषेव्यैनं त्याज्यान्यामण्डलं त्यजेत् ।। रस-१४.६५ ।।

ततः परं यथेष्टाशी द्वादशाब्दं सुखी भवेत् ।
एकमेकं दिनं भुक्त्वा वर्षे वर्षे महारसम् ।। रस-१४.६६ ।।

वर्षादौ च त्यजेत्त्याज्यं द्वादशाब्दं जरां जयेत् ।
एष वज्ररसो नाम क्षयपर्वतभेदनः ।। रस-१४.६७ ।।

**महावीररसः**

निष्कौ द्वौ तुत्थभागस्य रसाद् एकं सुसंस्कृतात् ।
निष्कं विषस्य द्वौ तीक्ष्णात्कर्षांशं गन्धमौक्तिकात् ।। रस-१४.६८ ।।

अग्निपर्णीहरिलताभृङ्गार्द्रसुरसारसैः ।
मर्दितं लाङ्गलीकन्दप्रलिप्ते सम्पुटे पचेत् ।। रस-१४.६९ ।।

अर्धपादं च पोटल्याः काकिन्यौ द्वे विषस्य च ।
लिहेन्मरिचचूर्णं च मधुना पोटलीसमम् ।। रस-१४.७० ।।

क्षयग्रहण्यतीसारवह्निदौर्बल्यकासिनाम् ।
पाण्डुगुल्मवतां श्रेष्ठो महावीरो हितो रसः ।। रस-१४.७१ ।।

अतिस्थूलस्य पूयासृक्कफानुद्वमताक्षये ।
न योजयेत्क्षीररसान्विरुद्धक्रमतत्त्वतः ।। रस-१४.७२ ।।

### सांआन्योपायः

मातुलुङ्गस्य मूलानि लाजचूर्णं ससैन्धवम् ।
पिप्पलीमधुना युक्तं खादेद्वान्तिप्रशान्तये ।। रस-१४.७३ ।।

रजनीशङ्खपूगं च निष्कैकं वान्तिनाशनम् ।
निष्कार्धं टङ्कणं वाथ काकमाचीद्रवैः पिबेत् ।। रस-१४.७४ ।।

सुगन्धां वा पिबेत्खादेत् सर्ववान्तिप्रशान्तये ।
अलक्तकरसं क्षौद्रै रक्तवान्तिहरं परम् ।। रस-१४.७५ ।।

### तृष्णाहररसः

युक्तं गन्धकपिष्ट्यायस्तालकं स्वर्णमाक्षिकम् ।
युक्त्या तद्भस्मतां नीतं तृष्णाछर्दिनिवारणम् ।। रस-१४.७६ ।।

### राजावर्तरसः

राजावर्तो रसः शुल्बं माक्षिकं घृतपाचितम् ।
मध्वाज्यशर्करायुक्तं हन्ति सर्वान्मदात्ययान् ।। रस-१४.७७ ।।

राजावर्तरसः शुल्बं सूतगर्भे नियोजितम् ।
यष्टीमधुरसैर्घृष्टं घृतमध्ये विपाचितम् ।। रस-१४.७८ ।।

मध्वाज्यशर्करायुक्तं हन्ति सर्वान्मदात्ययान् ।। रस-१४.७९ ।।

### भैरवनाथी पञ्चामृतपर्पटी

सुवर्णं रजतं ताम्रं सत्त्वाभ्रं कान्तलोहकम् ।
क्रमवृद्धमिदं सर्वं शाणेयौ नागवङ्गकौ ।। रस-१४.८० ।।

द्रावयित्वैकतः सर्वं रेतयित्वा ततश्चरेत् ।
पृथक्पलमितं गन्धं शिलालं विनिधाय च ।। रस-१४.८१ ।।

सर्वं खल्ले विनिक्षिप्य मर्दयेद् अम्लवर्गतः ।
ताप्यं नीलाञ्जनं तालं शिलागन्धं च चूर्णितम् ।। रस-१४.८२ ।।

दत्त्वा दत्त्वा पुटेत्तावद्यावद्विंशतिवारकम् ।
लोहाद् द्विगुणसूतेन ततो द्विगुणगन्धतः ।। रस-१४.८३ ।।

विधाय कज्जलीं श्लक्ष्णां क्षिप्त्वा तां लोहपात्रके ।
द्रावयेद् बदराङ्गारैर् मृदुभिश्चाथ निक्षिपेत् ।। रस-१४.८४ ।।

हेमादिपञ्चलोहानां भस्म चाथ विलोडयेत् ।
अथ तत्कदलीपत्रे गोमयस्थे विनिक्षिपेत् ।। रस-१४.८५ ।।

पत्रेणान्येन संछाद्य कुर्याद्यत्नेन चिप्पिटीम् ।
तस्योपरि क्षिपेत्सद्यो गोमयं स्तोकमेव च ।। रस-१४.८६ ।।

स्वतः शीतं समाहृत्य पटचूर्णं विधाय च ।
निक्षिपेदूर्ध्वदण्डायां पालिकायां ततः परम् ।। रस-१४.८७ ।।

पूर्ववद्बदराङ्गारैर् मृदुभिर् द्रावयेच्छनैः ।
तुल्यालकशिलागन्धं पलार्धं विषभावितम् ।। रस-१४.८८ ।।

पूर्वपर्पटिकातुल्यं तस्मादल्पं मुहुर्मुहुः ।
जारयेत्पलिकामध्ये यथा दह्येन्न पर्पटी ।। रस-१४.८९ ।।

पलिकेति विनिर्दिष्टा स्नेहक्षेपणयन्त्रिका ।
जीर्णे तालादिके चूर्णे पटचूर्णं विधीयताम् ।। रस-१४.९० ।।

पूतीकरञ्जषट्कोलव्याघ्रीसौभाञ्जनाङ्घ्रिभिः ।
एतैः पञ्चपलैः क्वाथं षोडशांशावशेषितम् ।। रस-१४.९१ ।।

तेन क्वाथेन संस्वेद्य शोषयेत्सप्तधा हि ताम् ।
विषतिन्दुफलोद्भूतै रसैर्निर्गुण्डिकारसैः ।। रस-१४.९२ ।।

विभाव्य पलिकामध्ये क्षिप्त्वा बदरवह्निना ।
ईषत्प्रस्वेदनं कृत्वा स्थापयेदतियत्नतः ।। रस-१४.९३ ।।

उक्ता भैरवनाथेन स्यात् पञ्चामृतपर्पटी ।
व्योषाज्यसहिता लीढा गुञ्जाबीजेन संमिता ।। रस-१४.९४ ।।

सर्वलक्षणसम्पूर्णं विनिहन्ति क्षयामयम् ।
श्वासं कासं विषूचीं च प्रमेहमुदरामयम् ।। रस-१४.९५ ।।

अरोचकं च दुःसाध्यं प्रसेकं छर्दिहृद्भवम् ।
सर्वजं गुदरोगं च शूलकुष्ठान्यशेषतः ।। रस-१४.९६ ।।

वातज्वरं च विड्बन्धं ग्रहणीं कफजान्गदान् ।
एकद्वन्द्वत्रिदोषोत्थान् रोगान् अन्यान् महागदान् ।। रस-१४.९७ ।।

अग्निमान्द्यं विशेषेण हन्तीयं पर्पटी ध्रुवम् ।
एवं समूह्य दातव्या रोगेषु भिषगुत्तमैः ।। रस-१४.९८ ।।

तत्तद्रोगहरैर् योगैस् तत्तद्रोगानुपानतः ।

क्षयादिसर्वरोगघ्नी स्यात् पञ्चामृतपर्पटी ।। रस-१४.९९ ।।

तिलसर्षपबिल्वाम्लकारवेल्लकुसुम्भकम् ।
त्यजेत्पारावतं मांसं वृन्ताकं कुक्कुटं तथा ।। रस-१४.१०० ।।

# रसरत्नसमुच्चय : अध्याय 15

https://sa.wikisource.org/s/8oz

**अथार्शः**

गुदस्य बहिरन्तर्वा जायन्ते चर्मकीलकाः ।
सर्वरोगकराः पुंसामर्शांसीति हि विश्रुताः ।। रस-१५.१ ।।

रुधिरस्राविणस्तेषां पित्तजाः परिकीर्तिताः ।। रस-१५.२ ।।

वातजा निःसहोत्थाना उदावर्तं प्रकुर्वते ।। रस-१५.३ ।।

श्वयथुं श्लेष्मजाः कुर्युः सर्वं कुर्युस्त्रिदोषजाः ।। रस-१५.४ ।।

**अर्शःकुठाररसः**

शुद्धसूतं पलैकं तु द्विपलं शुद्धगन्धकम् ।
मृतं ताम्रं मृतं लोहं प्रत्येकं तु पलत्रयम् ।। रस-१५.५ ।।

त्र्यूषणं लाङ्गली दन्ती पिरुकं चित्रकं तथा ।
प्रत्येकं द्विपलं योज्यं यवक्षारं च टङ्कणम् ।। रस-१५.६ ।।

उभौ पञ्चपलौ योज्यौ सैन्धवं पलपञ्चकम् ।
द्वात्रिंशत्पलगोमूत्रं स्नुहीक्षीरं च तत्समम् ।। रस-१५.७ ।।

मृद्वग्निना पचेत्स्थाल्यां सर्वं यावत्सुपिण्डितम् ।
माषद्वयं सदा खादेद् रसो ह्यर्शःकुठारकः ।
तक्रेण दाडिमाम्भोभिः पक्वकन्देन वाथ तत् ।। रस-१५.८ ।।

मृतसूतार्कहेमाभ्रतीक्ष्णमुण्डं सगन्धकम् ।
मण्डूरं माक्षिकं तुल्यं मर्द्यं कन्याद्रवैर्दिनम् ।। रस-१५.९ ।।

अन्धमूषागतं पाच्यं त्रिदिनं तुषवह्निना ।
चूर्णितं सितया माषं खादेत्पित्तार्शसां जयेत् ।। रस-१५.१० ।।

**सर्वलोकाश्रयरसः**

शुद्धं सूतं पलं गन्धं गन्धार्धं तालताप्यकम् ।
अमृतं रसकं चैव तालकार्धविभागिकम् ।। रस-१५.११ ।।

एतेषां कज्जलीं कुर्याद् दृढं संमर्द्य वासरम् ।
त्रिदिनं मर्दयेच्चाथ दत्त्वा निम्बुजलं खलु ।। रस-१५.१२ ।।

वटीकृत्य विशोष्याथ काचकुप्यां निधापयेत् ।
निष्कतुल्यार्कपत्रेण पिधायास्यं प्रयत्नतः ।। रस-१५.१३ ।।

सार्धांगुलमितोत्सेधं मृत्स्नया तां विलेप्य च ।
नतो भाण्डतृतीयांशे सिकतापरिपूरिते ।। रस-१५.१४ ।।

निधाय सिकतामूर्ध्नि सिकताभिः प्रपूरयेत् ।
रुद्ध्वास्यं तदधो वह्निं ज्वालयेत्सार्धवासरम् ।। रस-१५.१५ ।।

स्वांगशीतलितं काचघटादाकृष्य तं रसम् ।
पटचूर्णं विधायाथ ताम्रमभ्रं पलद्वयम् ।। रस-१५.१६ ।।

पलार्धममृतं चैव मरिचं च चतुष्पलम् ।
एकीकृत्य क्षिपेत्सर्वं नारिकेलकरण्डके ।। रस-१५.१७ ।।

साज्यो गुञ्जाद्विमानो हरति रसवरः सर्वलोकाश्रयोऽयं वातश्लेष्मोत्थरोगान्गुदजनितगदं शोषपाण्ड्वामयं च ।
यक्ष्माणं वातशूलं ज्वरमपि निखिलं वह्निमान्द्यं च गुल्मं तत्तद्रोगघ्नयोगैः सकलगदचयं दीपनं तत्क्षणेन ।। रस-१५.१८ ।।

## अर्शोघ्नवटक

अर्शोघ्नं वटकं वक्ष्ये पुत्रकं शृणु भद्रक ।
पिप्पली पिप्पलीमूलवनसूरणचित्रकम् ।। रस-१५.१९ ।।

मारिचं कण्टकारी च रक्तपुष्पी समांशका ।
पलमेकं पृथक् सर्वं श्लक्ष्णं दृषदि पेषयेत् ।। रस-१५.२० ।।

गजाजपशुमूत्रेषु शुभे भाण्डे विनिक्षिपेत् ।
मृद्वग्निना पचेत्सर्वं चूर्णशेषं यथा भवेत् ।। रस-१५.२१ ।।

लोणत्रयं च तत्रैव पलमेकं तु निक्षिपेत् ।
अक्षप्रमाणवटकान्कुर्यादेवं पृथक्पृथक् ।। रस-१५.२२ ।।

त्रिंशद्दिनानि मतिमानर्शोघ्नं दीपनं परम् ।
घृततक्रसमायुक्तं भोजनं संप्रदापयेत् ।। रस-१५.२३ ।।

## अर्शोघ्नी वटिका

गन्धकं तारताम्रं च कृत्वा चैकत्र पिष्टिकाम् ।
तत्समं चाभ्रकं तीक्ष्णं गन्धकात्पञ्चमांशकम् ।। रस-१५.२४ ।।

विषं च षोडशांशेन द्वौ भागौ सूतकस्य च ।
एकीकृत्य प्रयत्नेन जम्बीरद्रवमर्दितम् ।। रस-१५.२५ ।।

भाजने मृण्मये स्थाप्य वराक्वाथेन भावयेत् ।
दशमूलशतावर्योः क्वाथे पाच्यः क्रमेण हि ।। रस-१५.२६ ।।

अथोत्तार्य प्रयत्नेन वटिकां कारयेद् बुधः ।
गुञ्जात्रयप्रमाणेन हन्ति शूलं गुदाङ्कुरम् ।। रस-१५.२७ ।।

## मूलकुठाररसः

वरनागं तथा व्योमसत्त्वं शुल्बं च तीक्ष्णकम् ।
सर्वमेकत्र विद्राव्य क्षिप्त्वालं चाल्पमल्पकम् ।। रस-१५.२८ ।।

चालयेदनिशं यावत्तालकं त्रिगुणं खलु ।
ततस्तेन विमर्द्याथ पिष्टीं कुर्याद्रसेन तु ।। रस-१५.२९ ।।

ततो भल्लातकीवृक्षमूलान्तस्थां खनेच्च ताम् ।
मासादाकृष्य तां पिष्टीं गव्यदुग्धे विनिक्षिपेत् ।। रस-१५.३० ।।

ततो भल्लातकीतैलं हृतं पातालयन्त्रतः ।
आयसे भाजने स्निग्धे पिष्टिकां तां निवेश्य च ।। रस-१५.३१ ।।

प्रस्थमात्रं हि तत्तैलं जारयेद् अतियत्नतः ।
तत्तैलभावितैर्गन्धैः पुटित्वा भस्मतां व्रजेत् ।। रस-१५.३२ ।।

ततः कार्तिकमासोत्थकोरंटदलजै रसैः ।
रसं संमर्द्य संमर्द्य घर्मे संस्थाप्य मारयेत् ।। रस-१५.३३ ।।

तद्भस्म मेलयेत्पूर्वभस्मना समभागिकम् ।
वनसूरणनिर्गुण्डीमहाराष्ट्रीभकण्टिका ।। रस-१५.३४ ।।

वज्रवल्ली शिखी चैषां रसैः पिष्ट्वा विशोषयेत् ।
त्रिवारं मार्कवद्रावैर्द्रावयित्वा विशोषयेत् ।
चूर्णीकृत्य प्रयत्नेन क्षिपेत्काचकरण्डके ।। रस-१५.३५ ।।

सोऽयं मूलकुठारको रसवरो दीप्याग्निवेल्लोत्तमासंयुक्तः सघृतश्च वल्लतुलितः संसेवितो नाशयेत् ।
अर्शास्याननासिकाक्षिगुदजान्यत्युग्रपीडानि च प्लीहानं ग्रहणीं च गुल्मयकृतौ मान्द्यं च कुष्ठामयान् ।। रस-१५.३६ ।।

रसग्रस्तसमुद्गीर्णगन्धकस्य पलत्रयम् ।
मृतसूताभ्रताम्रायः कर्षं कर्षं पृथक् पृथक् ।। रस-१५.३७ ।।

पलं हिङ्गुलचूर्णस्य माक्षिकस्य पलत्रयम् ।
पलं कम्पिल्लकस्यापि विषस्यार्धपलं तथा ।। रस-१५.३८ ।।

सप्ताहं मर्दयेत्सर्वं दत्त्वा चूर्णोदकं मुहुः ।
ततस्तद्गोलकं कृत्वा सप्ताहं चातपे क्षिपेत् ।। रस-१५.३९ ।।

गुडचूर्णं शिलाचूर्णं लिम्पेदङ्गुलिकाघनम् ।
त्रिपलं गन्धकं दत्त्वा क्रौञ्च्याम् अथ च गोलकम् ।। रस-१५.४० ।।

गोलकस्योपरिष्टाच्च क्षिपेत्तालपलत्रयम् ।
संरुध्यातिप्रयत्नेन दद्याद्गजपुटं खलु ।। रस-१५.४१ ।।

स्वाङ्गशीतलमाहृत्य गोलकं लेपनैः सह ।
विचूर्ण्य सप्तवारं हि विषतिन्दुफलोद्भवैः ।। रस-१५.४२ ।।

द्रवैरथातपे शुष्कं क्षिपेद्रम्ये करण्डके ।
त्रिंशदंशेन वैक्रान्तभस्म तस्मिन्विनिक्षिपेत् ।। रस-१५.४३ ।।

अयं हि नन्दीश्वरसम्प्रदिष्टो रसो विशिष्टः खलु रोगहन्ता ।
निःशेषरोगेष्वहतप्रतापो महोदयप्रत्ययसारनामा ।। रस-१५.४४ ।।

हन्यात्सर्वगुदामयान्क्षयगदं कुष्ठं च मन्दाग्नितां शूलाध्मानगदं कफं श्वसनताम् उन्मादकापस्मृती ।
सर्वा वातरुजो महाज्वरगदान् नानाप्रकारांस्तथा वातश्लेष्मभवं महामयचयं दुष्टग्रहण्यामयम् ।। रस-१५.४५ ।।

## कनकसुन्दररसः

स्याद्रसं धौतमाक्षीकं कान्ताभ्रं नागहाटकम् ।
पृथ्वीभटेन संतुल्यं सर्वतुल्यं च गन्धकम् ।। रस-१५.४६ ।।

दत्त्वा विद्याधरे यन्त्रे पुटेदारण्यकोत्पलैः ।
स्वाङ्गशीतलम् उद्धृत्य त्र्यूषणेन विमिश्रयेत् ।। रस-१५.४७ ।।

अर्शोव्याधौ कटीशूले चक्षुःशूले च दारुणे ।
सन्निपाते क्षये कासे श्वासे मन्दानले ज्वरे ।। रस-१५.४८ ।।

कर्णशूले शिरःशूले दन्तशूले प्रयोजयेत् ।
पीनसे प्लीह्नि हृच्छूले ग्रन्थिवाते च दारुणे ।। रस-१५.४९ ।।

एकाङ्गे वा धनुर्वाते कम्पवाते च मूर्छिते ।
ज्वरांश्च विषमान् सर्वान्हन्ति रोगाननेकधा ।। रस-१५.५० ।।

सेवितः पथ्ययोगेन रसः कनकसुन्दरः ।
गुञ्जामात्रं ददीतास्य यथायुक्तानुपानतः ।। रस-१५.५१ ।।

घृतेन संयुतो वाते मधुना पैत्तिके ज्वरे ।
पिप्पल्या श्लैष्मिके देयः पित्तोद्भूते सचन्दनः ।। रस-१५.५२ ।।

तक्रेण श्लेष्मवातोत्थे वातपित्ते घृतान्वितः ।
श्लेष्मपित्ते चार्द्रकेण निर्गुण्ड्या सान्निपातिके ।। रस-१५.५३ ।।

फलत्रयेण शूलेषु विषमेषु ज्वरेष्वपि ।
आर्द्रकेणाथ वा दद्याद्वह्निमान्द्ये विशेषतः ।। रस-१५.५४ ।।

अभिष्यन्दे शिरःशूले गायत्रीबोलसंयुतम् ।
पक्षिमांससमायुक्तं कफवाते च मूर्छिते ।। रस-१५.५५ ।।

एकाङ्गे च धनुर्वाते क्षीरयुक्तं च पीनसे ।
पाण्डुरोगे क्षये कासे मरिचाज्यैश्च कामले ।। रस-१५.५६ ।।

अजमोदाविडङ्गैश्च नाभिशूलेऽग्निमान्द्यजित् ।
रूक्षज्वरेऽरुचौ देयः कदलीफलसंयुतः ।
बोलेनार्धकटीशूले भाषितं नागबोधिना ।। रस-१५.५७ ।।

## अर्केशः

नागं पारदगन्धकं त्रिलवणं वायर्कजं मेलयेद् एकैकं च पलं पलं त्रयमतः पञ्च क्रमान्मर्दयेत् ।
सर्वं तद्दिवसत्रयं तदनु तद्दत्त्वा पुटं भावनाः कुर्यात्सत्रिफलाग्निवेतसरसैः पञ्चाधिका विंशतिः ।। रस-१५.५८ ।।

पञ्चैतत् क्रमशस्ततो गुडभवैर् दत्तोऽस्य वल्लो जलैर् हन्त्यर्शांस्यखिलानि सूरणघृतैस्तस्यान्नम् अस्मिन्हितम् ।
अर्केशः परिवर्ज्यतामिति मुनिः श्रीवासुदेवोऽवदत् कूष्माण्डीफलमाषपायसम् अतिव्यायामम् अर्कातपम् ।। रस-१५.५९ ।।

### तीक्ष्णमुखरसः

रसेन्द्रहेमार्कबिडालगोलसुरायसलोहमलाभ्रगन्धाः ।
ताप्यं च कन्यारसमर्दितोऽयं पक्वः पुटे तीक्ष्णमुखोऽर्शसां स्यात् ।। रस-१५.६० ।।

### अर्शःकुठाररसः

श्रेष्ठा दन्त्यग्नियुग्मत्रिकटुकहलिनीपीलुकुम्भं विपक्वं प्रस्थे मूत्रस्य सस्नुक्पयसि रसपलं द्वे पले गन्धकस्य ।
लोहस्य त्रीणि ताम्रात्कुडवमथ रजःक्षारयोश्चापि पञ्च क्षिप्त्वा स्थाल्यां पचेत्तु ज्वलति दहनतश्चूर्णम् अर्शःकुठारः ।। रस-१५.६१ ।।

### त्रैलोक्यतिलकरसः

वज्रकृष्णाभ्रजं सत्त्वं शोधितं काचटङ्कणम् ।
रेतयित्वा रजःकृत्वा भर्जयित्वा घृतेन तत् ।। रस-१५.६२ ।।

अष्टांशसस्यकोपेतं पुटेद्वारत्रयं ततः ।
त्रिवारं नृपवर्तेन लुङ्गस्वरसयोगिना ।। रस-१५.६३ ।।

चतुर्वारं च वर्षाभूवासामत्स्याक्षिकारसैः ।
गुग्गुलुत्रिफलाक्वाथैस्त्रिंशद्वाराणि यत्नतः ।। रस-१५.६४ ।।

तुल्यांशरसगन्धोत्थकज्जल्याष्टांशभागया ।
पुटेत्पञ्चाशतं वारान्मर्दयेच्च पुटे पुटे ।। रस-१५.६५ ।।

शोधितं रेतितं कान्तसत्वं च घृतमर्दितम् ।
पुटेदष्टांशदरदैः संयुक्तं लकुचाम्बुना ।। रस-१५.६६ ।।

दशवारं तथा सम्यक् तारं शुद्धं मनोह्वया ।
तथा विंशतिवाराणि बलिना मीनदृग्रसैः ।। रस-१५.६७ ।।

दशवाराणि ताप्येन कृष्णगोघृतयोगिना ।
उभयं समभागं तत् पुटेन्निर्गुंडिकारसैः ।। रस-१५.६८ ।।

रसगन्धोत्थकज्जल्या दशवारं पुटेत्पुनः ।
तस्मिन्नष्टांशभागेन क्षिपेद्वैक्रान्तभस्मकम् ।। रस-१५.६९ ।।

राजावर्तकलांशेन समभागेन पर्पटी ।
तत्सर्वं परिमर्द्याथ भावयित्वार्द्रकाम्बुना ।। रस-१५.७० ।।

गुडूच्याः स्वरसेनापि भूकदम्बरसेन वा ।
भृङ्गराजरसेनापि चित्रमूलरसेन च ।। रस-१५.७१ ।।

व्योषगञ्जाकिनीकन्दैर् भूयोऽप्यार्द्रद्रवेण च ।
पटचूर्णमतः कृत्वा क्षिपेच्छुद्धकरण्डके ।। रस-१५.७२ ।।

त्रैलोक्यतिलकः सोऽयं ख्यातः सर्वरसोत्तमः ।
सर्वव्याधिहरः श्रीमाञ्छम्भुना परिकीर्तितः ।। रस-१५.७३ ।।

उदावर्तं च विड्बन्धं व्यथां च जठरोद्भवाम् ।
लोहलं मन्दबुद्धित्वं शूलित्वमपि वन्ध्यताम् ।। रस-१५.७४ ।।

सूतिरोगान् अशेषांश्च शूलं नानाविधं तथा ।
परिणामाख्यशूलं च तथा भिन्द्यात् समुत्कटम् ।। रस-१५.७५ ।।

रक्तगुल्मं च नारीणां रजःशूलं च दुःसहम् ।
अनुपानं च पथ्यं च तत्तद्रोगानुरूपतः ।। रस-१५.७६ ।।

## सामान्योपचारः

वचाहिङ्गुविडङ्गानि सैन्धवं जीरनागरम् ।
मरिचं पिप्पली कुष्ठं पथ्या वह्न्यजमोदकम् ।। रस-१५.७७ ।।

क्रमोत्तरगुणं चूर्णं सर्वेषां द्विगुणं गुडम् ।
कर्षं चोष्णजलेनानुपिबेद्वातार्शसां जये ।। रस-१५.७८ ।।

मृतं लोहं चेन्द्रयवं शुण्ठीभल्लातचित्रकम् ।
बिल्वमज्जाविडङ्गानि पथ्या तुल्यं विचूर्णयेत् ।। रस-१५.७९ ।।

सर्वतुल्यं गुडं योज्यं कर्षं भुक्त्वार्शसां जयेत् ।
श्लेष्मार्शसां प्रशान्त्यर्थं देयमानन्दभैरवम् ।
मृतताम्रेण सन्तुल्यं देयं गुञ्जात्रयं हि तत् ।। रस-१५.८० ।।

कुसुम्भमृदुपत्राणि काञ्जिकेनैव पाचयेत् ।
शाकवद्भक्षयेन्नित्यमर्शोरोगप्रशान्तये ।। रस-१५.८१ ।।

## सामान्यलेपः

देवदाल्याश्च बीजानि सैन्धवेन सुचूर्णितः ।
आरनालेन लेपोऽयं मूलरोगनिकृन्तनः ।। रस-१५.८२ ।।

काञ्चनीकुसुमं चूर्णं शङ्खचूर्णं मनःशिलाम् ।
गजपिप्पलिकातोयैर्लेपो ह्यर्शःकुठारकः ।। रस-१५.८३ ।।

देवदाल्याः कषायेण ह्यर्शोघ्नं शौचमाचरेत् ।
गुदनिःसरणं चापि शान्तिमायाति नान्यथा ।। रस-१५.८४ ।।

आरनालेन सम्पिष्टा सबीजा कटुतुम्बिका ।
सगुडा हन्ति लेपेन दुर्नामानि समूलतः ।। रस-१५.८५ ।।

पीलुतैलेन संलिप्ता वर्तिका गुदमध्यगा ।
घातयत्यर्शसां शीघ्रं सकलां वेदनां तथा ।। रस-१५.८६ ।।

अर्कक्षीरं स्नुहीकांडं कटुलावुपत्रकम् ।
करंजं छागमूत्रेण लेपः स्राव्यर्शसां हितः ।। रस-१५.८७ ।।

शिग्रुमूलार्कजैः पत्रैर्लेपनं हितमर्शसाम् ।। रस-१५.८८ ।।

# रसरत्नसमुच्चय : अध्याय 16

https://sa.wikisource.org/s/810

रूक्षैः कोद्रवजीर्णमुद्गचणकैः क्रुद्धोऽनिलोऽधो वहन् रुद्ध्वा वर्त्म मलं विशोष्य कुरुते विण्मूत्रसंगं ततः ।
हृत्पृष्ठोदरवस्तिमस्तकरुजः सश्वासकासं ज्वरं गच्छन्नूर्ध्वमसौ हि नूनम् अनिशं कोपादुदावर्तयेत् ।। रस-१६.१ ।।

कंकुष्ठहिंगुसिंधूत्थत्रिवृद्दंतीवचाभयाः ।
चित्रकस्य तु मूलं च कल्कीकृत्य पचेद् घृतम् ।। रस-१६.२ ।।

चतुर्गुणे गवां क्षीरे युक्तं स्नुक्क्षीरमात्रया ।
उदावर्तोदरान् हन्ति पानेन सर्वदा ।। रस-१६.३ ।।

### अतिसारः

अत्यम्बुपानतिलपिष्टविरूढरूक्षशुष्कामिषाध्यशनबद्धमलग्रहाद्यैः ।
क्रुद्धोऽनिलोऽतिसरणाय च कल्पतेऽग्निं हत्वा मलं शिथिलयन्नपि तोयधातून् ।। रस-१६.४ ।।

### दर्दुररसः

सुश्लक्ष्णतीक्ष्णचूर्णं तु रसेन्द्रसमभागिकम् ।
कांचनाररसैर्घृष्टं सर्वातीसारनाशनम् ।। रस-१६.५ ।।

पिष्टः समेन तीक्ष्णेन काञ्चनारांबुमर्दितः ।
पुटपक्वोऽतिसारघ्नः सूतोऽयं दर्दुराह्वयः ।। रस-१६.६ ।।

हिंगुलं वत्सनाभं च मरिचं टंकणं कणा ।
मर्दयेत्समभागं च रसो ह्यानन्दभैरवः ।। रस-१६.७ ।।

गुंजैकां वार्धगुञ्जां वा बलं ज्ञात्वा प्रदापयेत् ।
मधुना लेहयेच्चानु कुटजस्य फलं त्वचम् ।। रस-१६.८ ।।

चूर्णितं कर्षमात्रं तु त्रिदोषोत्थातिसारजित् ।
दध्यन्नं दापयेत्पथ्यं गवाज्यं तक्रमेव वा ।
पिपासायां जलं शीतं विजया च हिता निशि ।। रस-१६.९ ।।

### सुधासाररसः

पृथक्पलिकगंधाश्मसूतसंजातकज्जलीम् ।
प्रद्राव्य निक्षिपेद्व्योम पलैकं गतचन्द्रिकम् ।। रस-१६.१० ।।

काष्ठेनालोड्य तत्सर्वं क्षिपेत्कुटजपत्रके ।
पुनः संचूर्ण्य यत्नेन भावयेत् तदनन्तरम् ।। रस-१६.११ ।।

बालतिन्दुफलद्रावैः क्षीरैरौदुंबरैस् तथा ।
अरलुत्वग्रसैश्चापि दुग्धिनीस्वरसैस्तथा ।। रस-१६.१२ ।।

पुटपक्वस्य बालस्य दाडिमस्य रसैः शुभैः ।
कृष्णकाम्बोजिकामूलरसैः कुटजवल्कजैः ।। रस-१६.१३ ।।

तुल्यांशविश्वगांधारीचूर्णं द्विपलिकं क्षिपेत् ।
मुस्तावत्सकदीप्याग्निमोचसारं सजीरकम् ।। रस-१६.१४ ।।

वत्सनाभं च कर्षांशं प्रत्येकं तत्र निक्षिपेत् ।
विचूर्ण्य भावयेद्भूयः शुण्ठीक्वाथेन सप्तधा ।। रस-१६.१५ ।।

इत्थं सिद्धो रसः पिष्टः करण्डे विनिवेशयेत् ।
सुधासार इति ख्यातः सुधारससमद्युतिः ।। रस-१६.१६ ।।

दीपनः पाचनो ग्राही हृद्यो रुचिकरस्तथा ।
दोषत्रयातिसारं च दुर्जयं भेषजान्तरैः ।। रस-१६.१७ ।।

आमं चैवमारक्तं च ज्वरातीसारम् एव च ।
सातिसारां विषूचीं च प्रतिबध्नाति तत्क्षणात् ।
मान्यमानव्यतिक्रान्तिरिव पुण्यफलोदयम् ।। रस-१६.१८ ।।

## रसोत्तमः

पिष्टविश्वाब्दकल्केन विधाय खलु चक्रिकाम् ।
निक्षिपेत् स्वेदनीयन्त्रे पक्त्वार्धघटिकावधि ।। रस-१६.१९ ।।

आकृष्य तज्जलैरेवं संप्रमर्द्याहरेद् रसम् ।
सुधासाररसं तत्र क्षिप्त्वा धान्यकसंमितम् ।। रस-१६.२० ।।

पूर्वोदितेषु रोगेषु प्रददीत भिषग्वरः ।
गोतक्रेणाथ दध्ना वा पथ्यं देयं हितं मितम् ।। रस-१६.२१ ।।

बालरम्भाफलं गुर्वीफलं बिल्वफलं तथा ।
आम्रपेशी च मधुकं वृन्ताकं च प्रशस्यते ।। रस-१६.२२ ।।

सर्वातिसारं ग्रहणीं च हिक्कां मन्दाग्निम् आनाहमरोचकं च ।
निहन्ति सद्यो विहितामपाके द्वित्रिप्रयोगेण रसोत्तमोऽयम् ।। रस-१६.२३ ।।

सांबुस्थालीमुखाबद्धे वस्त्रे पाक्यं निधाय च ।
पिधाय पच्यते यत्र स्वेदनीयन्त्रम् उच्यते ।। रस-१६.२४ ।।

## लोकेश्वररसः

द्वौ भागौ गंधकस्याष्टौ शंखचूर्णस्य योजयेत् ।
एकमेव रसस्यांशमर्कक्षीरेण मर्दयेत् ।। रस-१६.२५ ।।

चित्रकस्य द्रवेणैवं शोषयित्वा पुनः पुनः ।
एकीकृत्य रसेनाथ क्षारं दत्त्वा तदर्धकम् ।। रस-१६.२६ ।।

अर्कक्षीरेण कुर्वीत गोलकानथ शोषयेत् ।

निरुध्य चूर्णलिप्तेऽथ भाण्डे दद्यात्पुटं ततः ।। रस-१६.२७ ।।

लोकेश्वररसो ह्येष ग्रहणीरोगकृन्तनः ।
गुञ्जाचतुष्टयं चास्य मरीचाज्यसमन्वितम् ।
ददीत दधिभक्तं च पथ्यं लोकेश्वरे तथा ।। रस-१६.२८ ।।

**लोकनाथरसः**

मृतपारदभागैकं चत्वारः शुद्धगंधकात् ।
यामं च मर्दयेत्खल्ले तेन पूर्या वराटकाः ।। रस-१६.२९ ।।

टङ्कणं तु गवां क्षीरैः पिष्ट्वा तेन मुखं लिपेत् ।
वराटानां प्रयत्नेन रुद्ध्वा भाण्डे पुटे पचेत् ।। रस-१६.३० ।।

स्वाङ्गशीतं समुद्धृत्य ततश्चूर्ण्य वराटकाः ।
लोकनाथरसो नाम्ना क्षौद्रैर्गुञ्जाचतुष्टयम् ।। रस-१६.३१ ।।

नागरातिविषामुस्तादेवदारुवचान्वितम् ।
कषायमनुपानं स्याद्वातातीसारनाशनः ।। रस-१६.३२ ।।

नागभस्मरसव्योमगन्धैर् अर्धपलोन्मितैः ।
कुर्वीत कज्जलीं श्लक्ष्णां प्रक्षिपेत्तदनन्तरम् ।। रस-१६.३३ ।।

द्विपलोन्मितरालायां द्रुतायां परिमिश्रिताम् ।
भृष्टैर् यक्षाक्षसिंधूत्थवचाव्योषद्विजीरकैः ।। रस-१६.३४ ।।

सपथ्याविजयादीप्यैस् तुल्यांशैर् अवचूर्णितैः ।
मेलयेत्प्राक्तनं कल्कं भावयेत्तदनन्तरम् ।। रस-१६.३५ ।।

महानिंबत्वचासारैः कांबोजीमूलजद्रवैः ।
रसैर् नागबलायाश्च गुडूच्याश्च त्रिधा त्रिधा ।
ततश्च गुटिकाः कार्या बदरास्थिप्रमाणतः ।। रस-१६.३६ ।।

हन्यादेव हि नागसुन्दररसो वल्लोन्मितः सेवितः ।
नानातीसरणामयं गुदपरिभ्रंशं तथा बिंबिशिम् ।। रस-१६.३७ ।।

**षण्निष्कतैलम्**

षण्निष्कं तिलतैलस्य निष्कं जम्बीरजं रसम् ।
लवणं पञ्चगुञ्जं च अंगुल्या मर्दयेद् दृढम् ।
आमवातार्तसारघ्नं लिहेत्पथ्यं च पूर्ववत् ।। रस-१६.३८ ।।

**संग्रहणी**

मलं संगृह्य संगृह्य कदाचिद् अतिरेचयेत् ।
अरुचिः श्वयथुर् मान्द्यं ग्रहणीरोगलक्षणम् ।। रस-१६.३९ ।।

**वज्रकपाटरसः**

मृतसूताभ्रकं गन्धं यवक्षारं सटङ्कणम् ।
वचा जया समं सर्वं जयन्ती भृंगजद्रवैः ।। रस-१६.४० ।।

सजंबीरैस्त्र्यहं मर्द्यं शोषयेत्तं च गोलकम् ।
मन्दवह्नौ शनैः स्वेद्यं यामार्धं लौहपात्रके ।। रस-१६.४१ ।।

रससाम्ये प्रतिनिशा देया मोचरसस्तथा ।
भावयेद्विजयाद्रावैः शोष्यं पेष्यंच सप्तधा ।
रसो वज्रकपाटोऽयं निष्कार्धं मधुना लिहेत् ।। रस-१६.४२ ।।

**अग्निकुमाररसः**

दग्धां कपर्दिकां पिष्ट्वा त्र्यूषणं टङ्कणं विषम् ।
गन्धकं शुद्धसूतं च तुल्यं जम्बीरजैर् द्रवैः ।। रस-१६.४३ ।।

मर्दयेद्भक्षयेन्माषं मरिचाज्यं लिहेदनु ।
निहन्ति ग्रहणीरोगं पथ्यं तक्रौदनं हितम् ।। रस-१६.४४ ।।

हिङ्गुलं मरिचं गन्धं पिप्पली टङ्कणं विषम् ।
कनकस्य च बीजानि समांशं विजयाद्रवैः ।। रस-१६.४५ ।।

मर्दयेद्याममात्रं तु चणमात्रं वटीकृतम् ।
भक्षयेद् ग्रहणीं हन्ति रसः कनकसुन्दरः ।। रस-१६.४६ ।।

अग्निमान्द्यं ज्वरं तीव्रमतिसारं च नाशयेत् ।
दध्यन्नं दापयेत्पथ्यं गव्याजं तक्रमेव वा ।। रस-१६.४७ ।।

**ग्रहणीहररसः**

रसाभ्रगन्धाः क्रमवृद्धभागा जयारसेन त्रिदिनं विमर्द्याः ।
गद्याणकार्धं मधुना समेतं ददीत पथ्यं दधिभक्तकं च ।। रस-१६.४८ ।।

हिंगुलस्थितमहेश्वरबीजं पातयन्त्रविधिना हरणीयम् ।
गंधटंकणमृताभ्रकतुल्यं कोकिलाक्षम् अथ चायसखल्ले ।। रस-१६.४९ ।।

मर्दनीयम् अभिधारणयुक्ते धूमहीनदहनोपरि संस्थे ।
यावदेष जलशोषणदक्षो जीरकार्द्रकयुतेन स वल्लः ।। रस-१६.५० ।।

संग्रहज्वरम् अतिस्रुतिगुल्मान् अर्शसां च विनिहन्ति समूहम् ।
वासुदेवकथितो रसराजश् चण्डसंग्रहगदैककपाटः ।। रस-१६.५१ ।।

**लघुसिद्धाभ्रकरसः**

समांशं रसगंधाभ्रदरदं च विशोधितम् ।
लोहखल्ले विनिक्षिप्य गव्याज्येन समन्वितम् ।। रस-१६.५२ ।।

द्रोणीचुल्ल्यां न्यसेत्खल्लं साङ्गारायां प्रयत्नतः ।
मर्दकेनापि लौहेन मर्दयेद्दिवसद्वयम् ।। रस-१६.५३ ।।

इति सिद्धो रसेंद्रोऽयं लघुसिद्धाभ्रको मतः ।
वल्लतुल्यो रसो जीरवारिणा सहितः प्रगे ।। रस-१६.५४ ।।

पीतो हरति वेगेन ग्रहणीमतिदुर्धराम् ।
अतिसारं महाघोरं सातिसारं ज्वरं तथा ।। रस-१६.५५ ।।

पाचनो दीपनो हृद्यो गात्रलाघवकारकः ।
नागार्जुनेन कथितः सद्यः प्रत्ययकारकः ।। रस-१६.५६ ।।

## सर्वरोगरसः

रसं पलमितं तुल्यं शुद्धनागेन संयुतम् ।
द्रावयित्वायसे पात्रे सतैले निक्षिपेत्क्षितौ ।। रस-१६.५७ ।।

ततो द्रुते विनिक्षिप्य गंधके तद् विलोड्य च ।
पुनरायसपात्रे तत्क्षिस्वा प्रद्राव्य निक्षिपेत् ।। रस-१६.५८ ।।

तत्तुल्यं जारयेत्तालं पुनः संचूर्ण्य पूर्ववत् ।
तत्तुल्यां जारयेत्सम्यक्कुनटीं परिशोधिताम् ।। रस-१६.५९ ।।

तत्तुल्यं चूर्णिते तस्मिन्क्षिपेन्नागं निरुत्थकम् ।
तावदेव मृतं ताप्यं सर्वमन्यच्च तत्समम् ।। रस-१६.६० ।।

तीक्ष्णायः खर्परं व्योम हिंगुलं च शिलाजतु ।
पृथक्कर्षांशमानेन षट्कोलं कट्फलं मिशीम् ।। रस-१६.६१ ।।

दीप्यकं च चतुर्जातं रेणुकोशीरवेल्लकम् ।
तुंबरुं भार्ङ्गिकां रास्नां कङ्कोलं चोरपुष्करम् ।। रस-१६.६२ ।।

रिङ्गिणीं चिरतिक्तं च बीजान्युन्मत्तकस्य च ।
पलद्वयं च लांगल्याः सर्वेषां द्वादशांशकम् ।। रस-१६.६३ ।।

वत्सनाभं सितं भूरि विनिक्षिप्य ततः परम् ।
त्रिफलानां दशाङ्घ्रीणां कषायेण ततः परम् ।। रस-१६.६४ ।।

जयन्त्यार्द्रकवासानां मार्कवस्य रसैस्तथा ।
भावयित्वा च कर्तव्या वटकाश्चणकोपमाः ।। रस-१६.६५ ।।

एकैका वटिका सेव्या कुर्यात्तीव्रतरां क्षुधाम् ।
विषूचीमरतिं हिक्कां सेव्यं स्वादु च शीतलम् ।। रस-१६.६६ ।।

सामां च ग्रहणीं सदाङ्गतुदनं शोषोत्कटं पाण्डुताम् आर्तिं वातकफत्रिदोषजनितां शूलं च गुल्मामयम् ।
हिक्काध्मानविषूचिकां च कसनं श्वासार्शसां विद्रधिं सर्वारोप्यवटी क्षणाद्विजयते रोगांस्तथान्यानपि ।। रस-१६.६७ ।।

**ग्रहणीगजकेसरीरसः**

रसगंधकयोः कृत्वा कज्जलीं तुल्यभागयोः ।
द्रावयित्वायसे पात्रे रसतुल्यं विनिक्षिपेत् ।। रस-१६.६८ ।।

चराचरभवं भस्म तत्र माक्षिकसंभवम् ।
गंधपाषाणसहितं पात्रे लोहमये क्षिपेत् ।। रस-१६.६९ ।।

तत्काष्ठेन विलोड्याथ निक्षिपेत्कदलीदले ।
तत आच्छाद्य संचूर्ण्य निधायायसभाजने ।। रस-१६.७० ।।

अक्षमात्रं क्षिपेद्भस्म तत्र माक्षिकसम्भवम् ।
सम्यङ्निश्चन्द्रतां नीतं व्योमभस्म पलोन्मितम् ।। रस-१६.७१ ।।

विषं विषां च गन्धारीं मोचसारं सजीरकम् ।
सर्वं समांशिकं कृत्वा रसे चार्धांशिकं क्षिपेत् ।। रस-१६.७२ ।।

सर्वमेतन्मर्दयित्वा भावयेदतियत्नतः ।
जयंत्या च महाराष्ट्र्या गञ्जाकिन्याश्वगन्धया ।। रस-१६.७३ ।।

पञ्चकोलकषायैश्च कुर्याच्चूर्णं ततः परम् ।
इत्थं सिद्धो रसः सोऽयं ग्रहणीगजकेसरी ।। रस-१६.७४ ।।

नामतो नन्दिना प्रोक्तः कर्मतश्च सुधानिधिः ।
वल्लेन प्रमितश्चायं रसः शुण्ठ्या घृताक्तया ।। रस-१६.७५ ।।

सेवितो ग्रहणीं हन्ति सत्सङ्ग इव विग्रहम् ।
पथ्यमत्र प्रदातव्यं स्वल्पाज्यं दधितक्रयुक् ।। रस-१६.७६ ।।

हितं मितं च विशदं लघु ग्राहि रुचिप्रदम् ।
पाचनो दीपनोऽत्यर्थमामघ्नो रुचिकारकः ।। रस-१६.७७ ।।

तत्तदौषधयोगेन सर्वातीसारनाशनः ।
बध्नन्नपि मलं शीघ्रं नाध्मानं कुरुते नृणाम् ।। रस-१६.७८ ।।

**शीघ्रप्रभावरसः**

पारदं गन्धकं व्योम तीक्ष्णं तालं मनःशिला ।
सौवीरमञ्जनं शुद्धं विमलं च समांशकम् ।। रस-१६.७९ ।।

एभिः कज्जलिकां कृत्वा स्वल्पतैलेन भर्जयेत् ।
ग्रन्थिकं जीरकं चित्रं दीप्यकं मुस्तकं विषम् ।। रस-१६.८० ।।

बालाम्रं बालबिल्वं च मोचसारं समांशकम् ।
विचूर्ण्य पूर्ववत्कल्कं तदर्धेन विनिक्षिपेत् ।। रस-१६.८१ ।।

पुनर्विमर्दयेद् यत्नादेकरूपं भवेद्यथा ।
भावयेत्सप्तवाराणि पञ्चकोलकषायतः ।। रस-१६.८२ ।।

अरलुत्वग्रसेनापि दशवाराणि भावयेत् ।
प्रोक्तेन क्रमयोगेन रसो निष्पद्यते ह्ययम् ।। रस-१६.८३ ।।

जग्धो विश्वघनाम्बुना स हि रसः शीघ्रप्रभावाभिधो निष्कार्धप्रमितो महाग्रहणिकारोगेऽतिसारामये ।
आध्माने ग्रहणीभवे रुचिहते वाते च मन्दानले मुक्ते चापि मले पुनश्चलमलाशङ्कासु हिक्कासु च ।। रस-१६.८४ ।।

### पोटलीरसः

कपर्दतुल्यं रसगन्धकल्कं लोहं मृतं टङ्कणकं च तुल्यम् ।
जयारसेनैकदिनं विमर्द्य चूर्णेन सम्पिष्य पुटेत्तु भाण्डे ।। रस-१६.८५ ।।

ददीत तां पोटलिकां च दोषत्रयप्रधानग्रहणीनिवृत्त्यै ।। रस-१६.८६ ।।

### वह्निज्वालावटीरसः

नष्टपिष्टौ चतुर्माषमेकैकं रसगंधकौ ।
अभ्रकं माषमानं च मातुलुंगाम्लमर्दितम् ।। रस-१६.८७ ।।

शोधितं सप्तधा चैव द्विमाषं त्र्यूषणं पृथक् ।
त्रिशूली भृंगचाङ्गेरी सातला तीक्ष्णपर्णिका ।। रस-१६.८८ ।।

श्वेतापराजिता कन्या मत्स्याक्षी ग्रीष्मसुन्दरा ।
करिणी कर्णमोटी च रुदंती चित्रकार्द्रकात् ।। रस-१६.८९ ।।

धुस्तूरकाकमाचीभ्यां मुसल्याश्च पृथग्रसैः ।
मर्दितं द्विपलैः कुर्याद्वटिका माषसंमिता ।। रस-१६.९० ।।

ग्रहण्यां पर्णखण्डेन व्योषयुक्ता निषेविता ।
अरुचिं राजयक्ष्माणं मन्दाग्निं सूतिकागदान् ।
शमयेद्वटिका नाम्ना वह्निज्वालेति गीयते ।। रस-१६.९१ ।।

### वज्रधररसः

रसगंधकताम्राभ्रं क्षारांस्त्रीन्वरुणो वृषम् ।
अपामार्गस्य च क्षारं लवणं द्विद्विमाषकम् ।। रस-१६.९२ ।।

चाङ्गेर्या हस्तिशुंड्याश्च रसैः पिष्टं पचेत्पुटे ।
भक्षयित्वा ततो गुञ्जां ग्रहण्यां कांजिकं पिबेत् ।। रस-१६.९३ ।।

पक्तिशूले च कासे च मन्दाग्नाव् आर्द्रकद्रवम् ।
अम्लपित्ते च धारोष्णं क्षीरं वज्रधरो ह्ययम् ।। रस-१६.९४ ।।

### ग्रहणीकपाटरसः

रसेंद्रगन्धातिविषाभयाभ्रं क्षारद्वयं मोचरसो वचा च ।
जया च जंबीररसेन पिष्टं पिण्डीकृतं स्याद्ग्रहणीकपाटः ।। रस-१६.९५ ।।

तस्यार्धमाषं मधुना प्रभाते शम्बुकभस्माज्यमधूनि लिह्यात् ।
सक्षीरिणीजीरकमाणिमन्थतीक्ष्णानि चादौ दधिभोजनं च ।। रस-१६.९६ ।।

## सौवर्चलादिचूर्णम्

सौवर्चलं जीरकयुग्मधान्यजयायवानी कणनागरं च ।
कपित्थसारेण समं प्रगृह्य ददीत चूर्णं निशि तीव्रपित्तैः ।। रस-१६.९७ ।।

गद्याणमात्रं मधुखण्डयुक्तं तक्रेण युक्तं त्वरुचिप्रशान्त्यै ।
वातप्रधाने च कफप्रधाने रात्रौ कषायं कुटजस्य दद्यात् ।। रस-१६.९८ ।।

## मुस्तादिचूर्णम्

मुस्तावत्सकपाठाग्निव्योषप्रतिविषाविषम् ।
धातकीमोचनिर्यासश्चूतास्थिग्रहणीहरम् ।। रस-१६.९९ ।।

वह्निशुंठीबिडं बिल्वं लवणं पेषयेत्समम् ।
पिबेदुष्णांभसा चानु वातोत्थां ग्रहणीं जयेत् ।। रस-१६.१०० ।।

दग्धशंबूकसिंधूत्थं तुल्यं क्षौद्रेण लेहयेत् ।
निष्कैकैकं निहन्त्याशु ग्रहणीरोगम् उत्कटम् ।। रस-१६.१०१ ।।

कृशान्वजाजीद्वयमाक्षिकेण कटुत्रयेणापि युतं त्वनुष्णम् ।
चाङ्गेरिकाजीरकयुग्मधान्यं दुग्धेन्दुशाकाय ददीत दध्ना ।। रस-१६.१०२ ।।

## अजीर्णम्

विरेको जठरे शूलं वमनं च मुहुर्मुहुः ।
हस्तपादादिसंकोचः सर्वाजीर्णस्य लक्षणम् ।। रस-१६.१०३ ।।

### अजीर्णकण्टकरसः

शुद्धसूतं विषं गन्धं समं सर्वविचूर्णितम् ।
मरिचं सर्वतुल्यांशं कंटकार्या फलद्रवैः ।। रस-१६.१०४ ।।

मर्दयेद् भावयेत् सर्वम् एकविंशतिवारकम् ।
वटीं गुन्जात्रयीं खादेत्सर्वाजीर्णप्रशान्तये ।। रस-१६.१०५ ।।

अजीर्णकण्टकः सोऽयं रसो हन्ति विषूचिकाम् ।
वारिणा तिलपर्ण्युत्थमूलं पिष्ट्वा पिबेदनु ।। रस-१६.१०६ ।।

### विध्वंसरसः

विमर्द्य गन्धोपलटंकणेन संभाव्य वारानथ सप्तजात्याः ।
तोयैः फलानामथ सिद्धसूतो विध्वंसनामा शमनो विषूच्याः ।। रस-१६.१०७ ।।

अमुष्य गुञ्जा नव दापनीया हन्तुं विषूचीं सितया समेताः ।
तक्रौदनं स्यादिह भोजनाय पथ्यं च शाकं किल वास्तुकस्य ।। रस-१६.१०८ ।।

### विषूचीविजयरसः

रसगंधटंकभसितं समांशकं परिमर्द्य जातिफलसप्तभावितम् ।
सितयोपयुज्य नवरक्तिकोन्मितं मथितान्नभुग्विजयते विषूचिकाम् ।। रस-१६.१०९ ।।

### अग्निकुमाररसः

हंसपादीरसैः सिद्धं रसगंधकयोः पलम् ।
कोलं च विषचूर्णस्य वालुकायंत्रपाचितम् ।। रस-१६.११० ।।

शाणं विषस्यार्धपलं मरिचस्य विमिश्रयेत् ।
दीपनोऽग्निकुमारोऽयं ग्रहण्यां च विशेषतः ।। रस-१६.१११ ।।

सवातश्लेष्मजान्रोगान्क्षणाद् एवापकर्षति ।
सन्निपातज्वरश्वासक्षयकासांश्च नाशयेत् ।। रस-१६.११२ ।।

### वडबाग्निरसः

टंकणं मरिचं तुत्थं पृथक् कर्षत्रयं भवेत् ।
सुन्दरं द्वादशं निष्कं त्रिंशन्निष्कम् अयोमलम् ।। रस-१६.११३ ।।

चूर्णान्येतानि संयोज्य स्थापयेच्छुद्धभाजने ।
शुद्धदेहो नरस्तस्य पानं यद्भोजनोत्तरम् ।। रस-१६.११४ ।।

अद्यात्पथ्यं ततः स्वल्पं ततस्तांबूलभाग्भवेत् ।
उदराग्निर्नरस्यास्य वडवाग्निसमो भवेत् ।
बहुनात्र किमुक्तेन रसायनमयं नृणाम् ।। रस-१६.११५ ।।

कान्तं पद्मरसे घृष्टं पुटपक्वं वरारसे ।
मार्कवस्वरसे घृष्टं सप्तकृत्वस् त्वयोमलम् ।। रस-१६.११६ ।।

शुद्धौ सूतबली चराचररजः कर्षांशतः कज्जलीम् कृत्वा गोपयसा विमर्द्य दिवसं रुद्ध्वा च मूषोदरे ।
सिद्धं कुम्भपुटे स्वतश्च शिशिरा पिष्टा करण्डे स्थिता स्याद् वैश्वानरपोटलीति कथिता तीव्राग्निदीप्तिप्रदा ।। रस-१६.११७ ।।

एकोनविंशतेश्चूर्णैर्मरिचानां घृतान्वितैः ।
देयेयं वल्लमानेन वयोबलम् अवेक्ष्यताम् ।। रस-१६.११८ ।।

गिलेद् गलविशुद्ध्यर्थं दधिभक्तमनुत्तमम् ।
कवलत्रयमानेन दुर्गन्धोद्गारशान्तये ।। रस-१६.११९ ।।

मध्यंदिने ततो भोज्यं घृततक्रोपदंशयुक् ।
रात्रौ च पयसा सार्धं यद्वा रोगानुसारतः ।। रस-१६.१२० ।।

विदाहि द्विदलं भूरिलवणं तैलपाचितम् ।
बिल्वं च कारवेल्लं च वृंताकं कांजिकं त्यजेत् ।। रस-१६.१२१ ।।

इयं हि पोटली प्रोक्ता सिङ्घणेन महीभृता ।
मंदाग्निप्रभवाशेषरोगसंघातघातिनी ।। रस-१६.१२२ ।।

सिंघणस्य विनिर्दिष्टा भैरवानंदयोगिना ।
लोकनाथोक्तपोटल्या उपचारा इह स्मृताः ।
पोटल्यो दीपनाः स्निग्धा मंदाग्नौ नितरां हिताः ।। रस-१६.१२३ ।।

पीतवर्णा गुरुस्निग्धा पृष्ठतो ग्रन्थिलामला ।
चराचरेति सा प्रोक्ता वराटी नंदिना खलु ।। रस-१६.१२४ ।।

सार्धनिष्कमिता श्रेष्ठा मध्यमा निष्कमानिका ।
पादोननिष्कमाना च कनिष्ठात्र वराटिका ।। रस-१६.१२५ ।।

निष्फलाश्च ततो न्यूनाः पुंवराटाश्च पित्तलाः ।
दत्त्वा दत्त्वा गुणान्भूयो विकारान्कुर्वते हि ते ।। रस-१६.१२६ ।।

## वडवामुखी गुटी

शुल्बायोघनभस्मवेल्लहलिनीव्योषाम्बुनिम्बच्छदैः संयुक्तैश्च हरिद्रया समलवैः सार्धं सशुभ्रामृतैः ।
भृङ्गाम्भोविषतिन्दुकार्द्रकरसैः सम्पिष्य गुंजामिता संशुष्का वडवामुखीति गुटिका नाम्नोदिता तारया ।। रस-१६.१२७ ।।

क्षिप्रं क्षुत्परिबोधिनी खलु मता सर्वामयध्वंसिनी श्लेष्मव्याधिविधूननी कसनहृच्छ्वासापहा शूलनुत् क्षुद्वैषम्यहरा च गुल्मशमनी मूलार्तिमूलंकषा
शोफव्याधिहरात्र किं बहुगिरा सर्वामयोत्सादिनी ।। रस-१६.१२८ ।।

## क्रव्यादरसः

द्विपलं गन्धकं शुद्धं द्रावयित्वा विनिक्षिपेत् ।
पारदं पलमानेन मृतशुल्वायसं पुनः ।। रस-१६.१२९ ।।

तोलमानेन संक्षिप्य पञ्चाङ्गुलदले क्षिपेत् ।
ततो विचूर्ण्य यत्नेन निक्षिप्यायसभाजने ।। रस-१६.१३० ।।

चुल्ल्यां निवेश्य यत्नेन ज्वालयेन्मृदुवह्निना ।
पात्रमात्रं हि जंबीररसं सम्यग्विजारयेत् ।। रस-१६.१३१ ।।

संचूर्ण्य पञ्चकोलोत्थैः कषायैः साम्लवेतसैः ।
भावनाः खलु कर्तव्याः पञ्चाशत्प्रमितास्ततः ।। रस-१६.१३२ ।।

भृष्टटंकणचूर्णेन तुल्येन सह मेलयेत् ।
तदर्धं कृष्णलवणं सर्वतुल्यं मरीचकम् ।। रस-१६.१३३ ।।

सप्तधा भावयेत्पश्चाच्चणकक्षारवारिणा ।
ततः संशोष्य सम्पिष्य कूपिकाजठरे क्षिपेत् ।। रस-१६.१३४ ।।

अत्यर्थं गुरुमांसानि गुरुभोज्यान्यनेकशः ।
भुक्त्वा च कंठपर्यन्तं चतुर्वल्लमितं रसम् ।। रस-१६.१३५ ।।

पट्वम्लतक्रसहितं पिबेत्तदनुपानतः ।
क्षिप्रं तज्जीर्यते भुक्तं जायते दीपनं पुनः ।। रस-१६.१३६ ।।

रसः क्रव्यादनामायं प्रोक्तो मन्थानभैरवैः ।
सिंघणक्षोणिपालस्य भूरिमांसप्रियस्य च ।
दिष्टो ग्रामं समासाद्य भैरवानन्दयोगिना ।। रस-१६.१३७ ।।

कुर्याद्दीपनमुद्धतं च पचनं दुष्टामसंशोषणं तुन्दस्थौल्यनिबर्हणं गरहरं मूलार्तिशूलापहम् ।
गुल्मप्लीहविनाशनं ग्रहणिकाविध्वंसनं स्रंसनं वातग्रन्थिमहोदरापहरणं क्रव्यादनामा रसः ।। रस-१६.१३८ ।।

### राजशेखरवटी

भागो मृतरसस्यैको वत्सनाभांशकद्वयम् ।
रसतुल्यं शिवाचूर्णं गन्धकं त्र्यूषणं तथा ।। रस-१६.१३९ ।।

विचूर्ण्यातिप्रयत्नेन भावयेत्सप्तवासरम् ।
ताम्बूलपत्रतोयेन स्वर्णधुस्तूरजद्रवैः ।
पिष्ट्वा चणमिताः कुर्याच्छायाशुष्कास्तु गोलिकाः ।। रस-१६.१४० ।।

उष्णांभोयुतराजशेखरवटी मन्दाग्निनिर्णाशिनी नानाकारमहाज्वरार्तिशमनी निःशेषमूलापहा ।
पाण्डुव्याधिमहोदरार्तिशमनी शूलान्तकृत् पाचिनी शोफघ्नी पवनार्तिनाशनपटुः श्लेष्मामयध्वंसिनी ।। रस-१६.१४१ ।।

### अग्निकुमाररसः

शुद्धं सूतं विषं गंधं द्विक्षारं पटुपञ्चकम् ।
दशकं तुल्यांशं भर्जिता विजया नवा ।। रस-१६.१४२ ।।

दशानां तुल्यभागा च तस्यार्धं शिग्रुमूलकम् ।
तत्सर्वं विजयाद्रावैः शिग्रुचित्रकभृंगजैः ।। रस-१६.१४३ ।।

द्रावैर् दिनत्रयं मर्द्यं रुद्ध्वा भाण्डे पचेल्लघु ।
दीपाग्निना तु यामैकं शुष्कं यावत्समुद्धरेत् ।। रस-१६.१४४ ।।

सप्तधा चार्द्रकद्रावैर्भावयेच्चूर्णयेद्भिषक् ।
दीपकोऽग्निकुमारोऽयं निष्कैकं मधुना लिहेत् ।
प्रतिकर्षं गुडं शुंठी ह्यनुपानं च दीपनम् ।। रस-१६.१४५ ।।

### अमृतवटी

कुष्ठगंधविषव्योमत्रिफलापारदैः समैः ।
मृगाम्बुमर्दितैर् मुद्गमानामृतवटी शुभा ।
अजीर्णश्लेष्मवातघ्नी दीपनी रुचिवर्धिनी ।। रस-१६.१४६ ।।

**राक्षसनामा रसः**

ताम्रं पारदगंधकौ त्रिकटुकं तीक्ष्णं च सौवर्चलं खल्ले मर्द्य दृढं विधाय सिकताकुम्भेऽष्टयामं ततः ।
स्विन्नं तस्य च रक्तशाकिनिभवं क्षारं समं मेलयेत् सर्वं भावितमातुलुंगजरसैर्नाम्ना रसो राक्षसः ।। रस-१६.१४७ ।।

मन्दाग्नौ सततं ददीत मुनये प्रातः पुरा शंकरः सख्य अस्मै च्यवनाय मंदहुतभुग्वर्याय नष्टौजसे ।
तेनादाय समस्तलोकगुरवे सूर्याय तस्मै नमो मर्त्यानामपि चास्य दानसमये गुंजाष्टकं वर्जयेत् ।। रस-१६.१४८ ।।

**जीवनामा रसः**

रसगंधौ सिन्धुकणाटङ्कणम् अभयाग्निहियावलीकतकफलम् ।
क्रमश उत्तरं च विचूर्णितया बृहतीरससंयुतभावनया ।। रस-१६.१४९ ।।

आर्द्रकहिंगुपुनर्नवपूतिच्छिन्नरसैः क्रमशस्तु भावनया ।
तत्र कलांशविशं च विमिश्रं तद्रसमानं मानविधया ।। रस-१६.१५० ।।

सर्वमजीर्णं कफमारुतपाण्डुशोफहलीमककामलाशूलम् ।
नाशयते ह्युदराग्निकरोऽयं दीपनजीवननामरसेन्द्रः ।। रस-१६.१५१ ।।

**वडवानलरसः**

शुल्बं तालकगन्धकौ जलनिधेः फेनोऽग्निगर्भाशयः कान्तायो लवणानि हेमपवयो नीलांजनं तुत्थकम् ।
भागो द्वादशको रसस्य तु दिनं वल्ल्यंबुघृष्टं शनैः सिद्धोऽयं वडवानलो गजपुटे रोगानशेषाञ्जयेत् ।। रस-१६.१५२ ।।

**अग्निजननी वटी**

कणनागरगन्धकपारदकं गरलं मरिचं समभागयुतम् ।
लकुचस्य रसैश्चणकप्रमिता गुटिका जनयत्यचिरादनलम् ।। रस-१६.१५३ ।।

**सर्वरोगान्तका वटी**

शुद्धसूतं विषं गंधम् अजमोदं फलत्रयम् ।
सर्जीक्षारं यवक्षारं वह्निसैन्धवजीरकम् ।। रस-१६.१५४ ।।

सौवर्चलं विडङ्गानि सामुद्रं त्र्यूषणं समम् ।
विषमुष्टिः सर्वतुल्या जंबीराम्लेन मर्दितम् ।। रस-१६.१५५ ।।

मरिचाभां वटीं खादेद्वह्निमांद्यप्रशांतये ।
पथ्या शुण्ठी गुडं चानु पलार्धं भक्षयेत्सदा ।। रस-१६.१५६ ।।

अग्निमांद्ये वटी ख्याता सर्वरोगकुलान्तका ।। रस-१६.१५७ ।।

**सामान्योपायः**

मृतं ताम्रं कणातुल्यं चूर्णं क्षौद्रविमिश्रितम् ।
निष्कार्धं भक्षयेन्नित्यं नष्टवह्निप्रदीप्तये ।। रस-१६.१५८ ।।

आर्द्रकस्वरसः क्षौद्रं पलमात्रं पिबेदनु ।
यथेष्टं घृतमांसाशी शक्तो भवति पावकः ।। रस-१६.१५९ ।।

# रसरत्नसमुच्चय : अध्याय 17

https://sa.wikisource.org/s/811

### अथ मूत्रकृच्छ्राश्मर्यादिचिकित्सनम्

कटौ कुक्षिप्रदेशे च शूलं प्रथमतो भवेत् ।
पश्चाद्रोधो ज्वलन्मूत्रम् अश्मरीरोगलक्षणम् ।। रस-१७.१ ।।

### पाषाणभेदीरसः

रसं द्विगुणगंधेन मर्दयित्वा प्रयत्नतः ।
वसुः पुनर्नवा वासा श्वेता ग्राह्या प्रयत्नतः ।। रस-१७.२ ।।

तदद्रवैर्भावयेदेनं प्रत्येकं तु दिनत्रयम् ।
पक्वं मूषागतं शुष्कं स्वेदयेज्जलयन्त्रतः ।। रस-१७.३ ।।

पाषाणभेदी नामायं नियुञ्जीतास्य वल्लयुक् ।
गोपालकर्कटीदुग्धं भूम्यामलकमूलिका ।
कुलत्थक्वाथतोयेन पिष्ट्वा तदनुपाययेत् ।। रस-१७.४ ।।

### द्वितीयः पाषाणभेदीरसः

रसेन सितवर्षाभ्वा रसं द्विगुणगंधकम् ।
घृष्टं पचेच्च मूषायां द्वौ माषौ तस्य भक्षयेत् ।। रस-१७.५ ।।

पातालकर्कटीमूलं कुलत्थोदैः पिबेदनु ।
गोकण्टकसदाभद्रामूलक्वाथं पिबेन्निशि ।
अयं पाषाणभिन्नाम्ना रसः पाषाणभेदकः ।। रस-१७.६ ।।

गोक्षुरबीजसमुत्थं चूर्णमविक्षीरसंयुक्तम् ।
रसवरमिश्रं पिबतश्चूर्णीभूत्वाश्मरी पतति ।। रस-१७.७ ।।

### त्रिविक्रमरसः

मृतताम्रमजाक्षीरैः पाच्यं तुल्यं गते द्रवे ।
तत्ताम्रं शुद्धसूतं च गंधकं च समं समम् ।। रस-१७.८ ।।

निर्गुण्ड्युत्थद्रवैर्मर्द्यं दिनं तद्गोलम् अन्धयेत् ।
यामैकं वालुकायंत्रे पाच्यं योज्यं द्विगुञ्जकम् ।। रस-१७.९ ।।

बीजपूरस्य मूलं तु सजलं चानुपाययेत् ।
रसस्त्रिविक्रमो नाम्ना मासैकेनाश्मरीप्रणुत् ।। रस-१७.१० ।।

### आनन्दभैरवीवटी

तिलापामार्गकाण्डं च कारवेल्ल्या यवस्य च ।
पलाशकाष्ठसंयुक्तं सर्वं तुल्यं दहेत्पुटे ।। रस-१७.११ ।।

तन्निष्कैकमजामूत्रैर्वटीं चानन्दभैरवीम् ।
पाययेदश्मरीं हन्ति सप्ताहान्नात्र संशयः ।। रस-१७.१२ ।।

## सामान्योपायः

पाण्डुरं फलिकामूलं जलेनैवाश्मरीहरम् ।। रस-१७.१३ ।।

मधुना च यवक्षारं लीढं स्याद् अश्मरीहरम् ।। रस-१७.१४ ।।

हरिद्रागुडकर्षैकं चारनालेन वा पिबेत् ।। रस-१७.१५ ।।

वन्ध्याकर्कोटकीकन्दं भक्ष्य क्षौद्रं सितायुतम् ।
अश्मरीं हन्ति नो चित्रं कर्षमात्रं शिवोदितम् ।। रस-१७.१६ ।।

## प्रमेह

शोषस्तापोऽङ्गकार्श्यं च बहुमूत्रत्वम् एव च ।
अस्वास्थ्यं सर्वगात्रेषु मूत्रमेहस्य लक्षणम् ।। रस-१७.१७ ।।

## गुडमार्कण्डी

मार्कण्डीचूर्णमादाय सगुडं खादयेन्निशि ।। रस-१७.१८ ।।

## लघुलोकेश्वररसः

मृतसूतस्य भागैकं चत्वारः शुद्धगन्धकात् ।
पिष्ट्वा वराटकं तेन रसपादं च टंकणम् ।। रस-१७.१९ ।।

क्षीरैः पिष्ट्वा मुखं रुद्ध्वा वराटांश्चान्ध्रयेत्पुटेत् ।
स्वांगशीतं विचूर्ण्याथ लघुलोकेश्वरो रसः ।। रस-१७.२० ।।

चतुर्गुंजारसश्चायं मरिचैकोनविंशतिः ।
जातिमूलपलैकं तु अजाक्षीरेण पेषयेत् ।
शर्कराभावितं चानु पीत्वा कृच्छ्रहरं परम् ।। रस-१७.२१ ।।

# रसरत्नसमुच्चय : अध्याय 18

https://sa.wikisource.org/s/812

भेदा वन्ध्याबलानां हि नवधा परिकीर्तिताः ।
तत्रादिवन्ध्या प्रथमा पापकर्मविनिर्मिता ।। रस-१८.१ ।।

रक्तेन च पृथग्दोषैः समस्तैः पञ्चधा भवेत् ।
भूतदेवाभिचारैश्च तिस्रो वन्ध्याः प्रकीर्तिताः ।। रस-१८.२ ।।

पुमानपि भवेद्वन्ध्यो दोषैरेतैश्च शुक्रतः ।। रस-१८.३ ।।

गर्भस्रावी स्मृता पूर्वं मृतवत्सा द्वितीयका ।
तृतीया स्त्रीप्रसूतिः स्यात्काकवन्ध्या सकृत्प्रसूः ।। रस-१८.४ ।।

### जयसुन्दररस

सुवर्णं रजतं ताम्रं ताप्यसत्त्वं च वैकृतम् ।
एकैकं निष्कमानेन संशुद्धं परिमारितम् ।। रस-१८.५ ।।

एतच्चतुर्गुणं सूतं सूताद्द्विगुणगन्धकम् ।
मर्दयेल्लक्ष्मणातोयैर्बन्धुजीवरसैरपि ।। रस-१८.६ ।।

काचकूप्यां ततः क्षिप्त्वा ताम्रपात्रं मुखे न्यसेत् ।
विलिम्पेदभितः कूपीमङ्गुलोत्सेधया मृदा ।। रस-१८.७ ।।

विशोष्य च पुटं दद्याद्भूमौ निक्षिप्य कूपिकाम् ।
गजाख्यपुटपर्याप्तिः शाणकर्षमितोत्पलैः ।। रस-१८.८ ।।

स्वांगशीतं विचूर्ण्याथ भावयेल्लक्ष्मणाद्रवैः ।
सप्तवारं विशोष्याथ करण्डान्तर्विनिक्षिपेत् ।। रस-१८.९ ।।

अश्वगन्धारजोयुक्तरताम्रगोक्षीरसंयुतः ।
सेवितो गुञ्जया तुल्यः सितया च रसोत्तमः ।। रस-१८.१० ।।

मासत्रयप्रयोगेण वन्ध्या भवति पुत्रिणी ।
पुत्रिण्यै स्नानशुद्धायै जरत्कौशिकचक्षुषी ।। रस-१८.११ ।।

गव्याज्येन च संसाध्य तत्तदानीं हि भोजयेत् ।
ऋतावृताविदं देयं यावन्मासत्रयं भवेत् ।। रस-१८.१२ ।।

रसेन्द्रः कथितः सोऽयं चम्पकारण्यवासिभिः ।
पूर्णामृताख्ययोगीन्द्रैर् नामतो जयसुन्दरः ।। रस-१८.१३ ।।

सेवितेऽस्मिन्रसे स्त्रीणां न भवेत् सूतिकागदः ।
भवेत्पुत्रश्च दीर्घायुः पण्डितो भाग्यमण्डितः ।। रस-१८.१४ ।।

## रत्नभागोत्तररस

वज्रं मरकतं पद्मरागं पुष्पं च नीलकम् ।
वैदूर्यं चाथ गोमेदं मौक्तिकं विद्रुमं तथा ।। रस-१८.१५ ।।

पञ्चगुञ्जामितं सर्वं रत्नं भागोत्तरं परम् ।
तत्तन्त्रोक्तविधानेन भस्मीकुर्यात्प्रयत्नतः ।। रस-१८.१६ ।।

सर्वस्माद् अष्टगुणितं भस्म वैक्रान्तसम्भवम् ।
तत्तुल्यं ताप्यजं भस्म तद्वद्विमलभस्म च ।। रस-१८.१७ ।।

सर्वतस्त्रिगुणां तुल्यां रसगन्धककज्जलीम् ।
सर्वमेकत्र संमर्द्य छागीदुग्धेन तद्व्यहम् ।। रस-१८.१८ ।।

विधाय पर्पटीं यत्नात्परिचूर्ण्य प्रयत्नतः ।
वन्ध्याकर्कोटकीपर्णक्वाथेन परिमर्दयेत् ।। रस-१८.१९ ।।

काननोत्पलविंशत्या पुटेत्षोडशवारकम् ।
एवं रसो विनिष्पन्नो रत्नभागोत्तराभिधः ।। रस-१८.२० ।।

महावन्ध्यादिवन्ध्यानां सर्वासां संततिप्रदः ।
देवीशास्त्रे विनिर्दिष्टः पुंसां वन्ध्यत्वरोगनुत् ।। रस-१८.२१ ।।

सोऽयं पाचनदीपनो रुचिकरो वृष्यस्तथा गर्भिणीसर्वव्याधिविनाशनो रतिकरः पाण्डुप्रचण्डार्तिनुत् ।
धन्यो बुद्धिकरश्च पुत्रजननः सौभाग्यकृद्योषितां निर्दोषः स्मरमन्दिरामयहरो योगादशेषार्तिनुत् ।। रस-१८.२२ ।।

## चक्रिबन्धरस

गन्धकः पलमात्रश्च पृथगक्षौ शिलालकौ ।
त्रिदिनं मर्दयित्वाथ विदध्यात्कज्जलीं शुभाम् ।। रस-१८.२३ ।।

विषाणाकारमूषायां कज्जलीं निक्षिपेत्ततः ।
द्विपलस्य च ताम्रस्य तन्मुखे चक्रिकां न्यसेत् ।। रस-१८.२४ ।।

संनिरुध्यातियत्नेन संधिबन्धे विशोषिते ।
ततः करिपुटार्धेन पाकं सम्यक् प्रकल्पयेत् ।। रस-१८.२५ ।।

स्वतःशीतं समुद्धृत्य चक्रिकां परिचूर्णयेत् ।
स्थगयेत्कूपिकामध्ये वस्त्रेण परिगालितम् ।। रस-१८.२६ ।।

रसोऽयं चक्रिकाबन्धस् तत्तद्रोगहरौषधैः ।
दातव्यः शूलरोगेषु मूले गुल्मे भगन्दरे ।। रस-१८.२७ ।।

ग्रहण्यामग्निमांद्ये च विद्रधौ जठरामये ।
नागोदरे तथैवोपविष्टके जलकूर्मके ।। रस-१८.२८ ।।

स्कन्देनामन्दकृपया त्रिलोकत्राणहेतवे ।